जगद्गुरुस्वामिश्रीरामानन्दाचार्यचरणैः समुद्भासितः

# वैष्णवमताब्जभास्करः



सम्पादक-व्याख्याकार

**आचार्य जयकान्त शर्मा**

नमोऽस्तु रामाय

श्रीसम्प्रदायाचार्यचूड़ामणियतिराजसार्वभौमश्रीमद्भगवत्पाद-
स्वामिश्रीरामानन्दाचार्यचरणैः समुद्भासितः

# श्रीवैष्णवमताब्जभास्करः

सम्पादक एवं व्याख्याकार
आचार्य जयकान्त शर्मा
प्रोफेसर्, व्याकरणविभाग,
श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ,
नई दिल्ली- 16

प्रकाशक
जगद्गुरु रामानन्दाचार्य स्मारक सेवा न्यास
श्रीमठ, काशी

नमोऽस्तु रामाय

# आचार्याशीः

विदितमेव प्राच्यविद्याविदुषामनन्यसाधारणमाचार्यत्वं सर्वमङ्गलवैभवञ्च यतिराजसार्वभौमश्रीरामानन्दस्वामिचरणानाम्, यदीया निसर्गकरुणा भगवद्भक्तिप्रपत्तिसुधासारेण रामभावपरिस्फूर्त्या चान्तस्तापविकलं लोकं समुज्जीव्य समतीतृपदिति। भक्त्या विरक्त्या स्वात्मबोधेन च विलसद् द्वादशात्ममहसाहस्करमिव यशस्करं सहसा को नाद्यापि नमति महाभागवतशिष्यनिकरपरिवृतं यन्महिममण्डलम्। आश्रितवात्सल्यातिरेकाच्छ्रीसुरसुरानन्दाचार्य निमित्तीकृत्य तत्पृष्टप्रश्नानुपजीव्य संवादशैल्या वैष्णवजनवेद्यप्रमेयजातं यथावस्थितं सङ्कलय्य पद्यात्मना सङ्ग्रथितस्तदुपदेश एव श्रीवैष्णवमताब्जभास्करनाम्ना बुधजनसमवाये सर्वमान्यकृतित्वेन प्रथते। तस्य प्रामाणिकसंस्कृतव्याख्यानेन सहितस्य मूलपीठा- च्छ्रीमठात्प्रकाशनं साम्प्रतं साम्प्रतमित्यनुगुणं श्रीसम्प्रदाये बद्धादरं जयकान्तशर्माणमहमादिशम्। तेन चानुपदं यावद्बुद्धिबलोदयं विरच्य पदपरामर्शेत्याख्या संस्कृतव्याख्या श्रीमठसेवायां प्रास्तावि। अन्वर्थनामा पदपरामर्शो मयका स्थालीपुलाकन्यायेनावालोक्यलम्भि चायं न क्वचिदपि समयं व्यभिचरतीति। अत्र यथाप्रसङ्गं प्रसक्तविषयं क्रोडीकृत्य प्रवहन्ती भाषा भावप्रकाशनानुगुणं सामर्थ्यं धत्ते। न केवलमत्र व्युत्पादनमपितु पद्यहार्दाविष्कृतौ युक्तिप्रमाणपुरस्कृतं सोपपादनं वस्तुसत्यापनञ्चेति प्रामाण्यकोटिमाटीकमानस्यापरो विशेषः। नूनमत्र नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यत इत्युक्तरीत्या सम्प्रदायराद्धान्तस्य प्रतिपत्तये मूलङ्कषमालोचनं प्राचीकशत्। शास्त्रक्रमं परिपालयतो मङ्गले प्रसादमयी दीनप्रार्थनाऽवसाने चान्त्यानुप्रासेन शार्दूलविक्रीडितेन ग्रन्थप्रशस्तिः पूर्वार्द्धश्लेषसुभगेनानुष्टुभेन च प्रकाशितं वैष्णवसुलभमात्मकार्पण्यमस्य पद्यरचनाकौशलमाचक्षते। राजभाषानुवादस्य संश्लेषस्तु सामान्यजनानां मूलार्थबोधसौकर्याय। चिराय चेतसि समारोपितोऽयं सङ्कल्पो भगवदनुकम्पया फलेग्रहितामभजत। प्रस्तुतोपस्थापनायां कियत्साफल्यमित्यत्र प्रेक्षावन्तो विपश्चित एव निकषीभविष्यन्ति। अहन्त्वेतदीयं सम्प्रदायाचार्यसपर्याविधौ लेखनीव्यापारमभिलक्ष्य तुष्यन्नभ्यर्थये यदनुदिनं समेधतामस्य भगवत्पादानुरक्तिर्लभतामयं श्रीरामवल्लभाकृपा- प्रसादञ्चेति।

इत्थमिदमाचार्यनिष्ठवैष्णवानां मनीषिणां करकमलेषूपहरन्प्रत्येमि यदस्य परिशीलनेन सम्प्रदायविदुषां मनस्तोषो जिज्ञासूनाञ्च वैष्णवीयसिद्धान्तस्यान्तरङ्गपरिचयो बाढं भवेदिति।

जगद्गुरुश्रीरामानन्दाचार्यपदप्रतिष्ठितो रामनरेशाचार्यः
श्रीमठः, काशी

*Prof. Ramkaran Sharma*
(President Awardee Govt. of India)
**Visiting Professor of Sanskrit**
University of Pennsylvania
Email : ramkaransharma@yahoo.com
63, Vigyan Vihar
Delhi -110 092
India : 011- 43043476
USA : 0012015658438



Joint Educational Advisor
(Min. of HRD Govt. of India)
Ex. Director, Rashtriya Sanskrit Sansthan
**Ex. Vice Chancellor,**
K.S.D.Sanskrit University, Darbhanga and
Sampurnanand Sanskrit University, Varanasi
Ex. President I.A.S.S.
**Visiting Professor**
Columbia University, University of Chicago,
University of California Berkeley

## सा‍म्मानिकं नैवेद्यम्

महानयं प्रमोदस्य विषयो यज्जगद्गुरुभिः श्रीमद्भिः श्रीरामानन्दाचार्यैः प्रणीतः श्रीवैष्णवमताब्जभास्करः प्रकाश्यं यात्यज्ञानध्वान्तसंहारकः। जयति चायुष्मान् विद्वदग्रणीराचार्यः श्रीजयकान्तशर्मा तच्चरणचञ्चरीको येन महता श्रमेण तदुपरि 'पदपरामर्शा'भिधानं भाष्यं व्यरचि भक्तानां जिज्ञासूनां तत्प्रकाशसौलभ्याय।

गोस्वामी तुलसीदास आह ''सेवकसेव्यभाव विनु भव न तरिय उरगारि'' इति। एवं रामानन्दीया भक्तिपरम्परैव सार्वभौम्या वैदिकपरम्परायाः संरक्षिकाऽभवद् भवति च भविष्यति च। पतञ्जलेरीश्वरप्रणिधानमपि तस्या एव भक्तिभावनाया गीतं गायति।

पश्यतु समाः सहस्रं श्रीजयकान्तः सुमङ्गलं सततम्।
सीतारामानुग्रहभाग् भूयाञ्चैष भक्तवरः।।

वन्दत एष भक्तवरः श्रीहनुमन्तं ''जङ्गममन्दिरं रघुपतेः''। अहमपि सानन्दं शुभाशीर्भिः समेधयामि श्रीजयकान्तं ''जङ्गममन्दिरं रघुपतेः'' श्रीरामानन्दाचार्यस्य सम्प्रदायप्रवर्त्तकस्य च युगपत्।

आशासे 'सभाष्य एष 'भास्करः' कल्पिष्यते विकासाय भक्तहृदयाम्बुजानां निखिलेऽपि भूमण्डल इति। तरुणेनानेन वन्दितं जगद्गुरुं श्रीरामानन्दाचार्यं सादरं सप्रश्रयं वन्दते पुनरेष जनोऽपि।

इति निवेदयते

रामकरण शर्मा

**राष्ट्रिय संस्कृत संस्थान**
मानित विश्वविद्यालय
(मानव संसाधन विकास मंत्रालय, भारत सरकार के तत्वाधान में संचालित)
56-57, इन्स्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली-110058





**RASHTRIYA SANSKRIT SANSTHAN**
**DEEMED UNIVERSITY**
(Established under the Auspices of the Ministry of Human Resource Development. Govt. of India)
56-57, Institutional Area, Janakpuri, New Delhi-110058


क्रमांक
No.....................................

दिनांक
Date 05-02-2013

# भूमिका

विदन्त्येव विज्ञा यदस्मिन्नतिविचित्रपरम्परावाहिनि संसारे समये समये जनिमाप्नुवन्ति विरलाः केचन सुकृतिनो येषां सुचरितैः सुकृतिभिः सन्देशैश्च प्रणिति संसारः, समुल्लसति सरस्वती जीवन्ति तथा च जीवाः। एतादृशेष्वेव महापुरुषेषु आसीत् यतिश्रेष्ठो रामानन्दः, यस्य प्रेरणां निजहृदि विकसन्तो मर्त्यलोकं पावितवन्तः कबीर-रैदास-पीपादयः कियन्तोऽपि सन्तः। यतीन्द्रस्यास्य स्तुतौ समुचितं निधापितवानेतद्वचोवितानं पीपाजीवर्यस्य मुखे श्रीरामानन्ददिग्विजयमहाकाव्ये स्वामिश्रीभगवदाचार्यः-

> श्रियां निधिं ज्ञाननिधिं दयानिधिं
> समस्तविद्याम्बुनिधिं तपोनिधिम्।
> अनन्तकल्याणगुणैकसन्निधिं
> पतिं यतीनां शिरसा नमाम्यहम्। (रामानन्ददिग्विजये 10.23)

तस्येमं यतिवर्यस्य श्रीमद्रामानन्दाचार्यस्य श्रीवैष्णवमताब्जभास्कराख्यं प्रबन्धं विद्वत्प्रवरः सुधीवरः सुरसरस्वतीसमाराधकः श्रीजयकान्तशर्मा पदपरामर्शेन संस्कृतव्याख्यानेन संवित्करेण हिन्दीभावार्थेन च संयोज्य प्रकाशनार्थं प्रस्तुतवानिति साहित्यपरम्परायां अभूतपूर्वोऽयमस्य अध्यवसायो महत उपकाराय भविता न केवलं वैष्णवभक्तसाधकानां दर्शनशास्त्रानुसन्धाननिरतानां गवेषकाणामपितु समेषामपि सज्जनानां सामान्यजनानां च। अस्मिन् श्रीवैष्णवमताब्जभास्करे वेदान्ततत्त्वं भक्तिस्वरूपं रामानन्दीयमठाचाराः सद्गृहस्थानां संन्यासिनां च इतिकर्तव्यताः सम्यक् समुपदिष्टाः, पापानां प्रक्षालनाय प्रायश्चित्तविधानं प्रकटीकृतं, मानवतायाः कल्याणाय च अनाविलः पन्थाः प्रदर्शितः स्वामिवर्यैः।

अथ सज्जनहृदयाब्जानां विकासाय भास्करायितस्य एतस्य श्रीवैष्णवमताब्जभास्करस्य पदपरामर्शे संस्कृतव्याख्याने विदुषा श्रीजयकान्तशर्मणा वाल्मीकिरामायण-रामचरितमानसादिभ्यो महाकवेः प्रबन्धेभ्यो वचनान्युद्धृतानि। तानि चामुष्य व्याख्यायाः प्रामाणिकतां साधयन्ति मूलग्रन्थस्य च परम्परां परिष्कुर्वन्ति। किं बहुना -

> चरितं रघुनाथस्य वैष्णवं साधु दर्शनम्।
> मर्म वेदान्ततत्त्वस्य श्रुतिवाक्यप्रसाधितम्।
> व्याख्या समस्तलोकेभ्यः परितोषप्रदायिनी।।
> एकैकमपि कल्याणं किमु यत्र चतुष्टयम्।।

सर्वथा अस्य ग्रन्थस्य व्याख्याद्वयोपेतस्य प्रचारेण प्रसारेण प्रसादं प्राप्नुवान्मानवतेति कामये।

- राधावल्लभः त्रिपाठी
कुलपतिः

आचार्यः रामानुज देवनाथः
कुलपतिः
Prof. Ramanuja DEVANATHAN
Vice Chancellor



जगद्गुरुरामानन्दाचार्य–
राजस्थानसंस्कृतविश्वविद्यालयः
मदाऊ, भांकरोटा, जयपुरम् (राज.)–302026
JAGADGURU RAMANANDACHARYA
RAJASTHAN SANSKRIT UNIVERSITY
Madau, Bhankrota, Jaipur (Raj.)-302026

सिद्धिर्भूयात्

श्रीसम्प्रदायाचार्यशिरोमणियतिराजसार्वभौमभगवद्रामानन्दाचार्यपादैरनुग्राहि श्रीवैष्णवमताब्जभास्करनामा ग्रन्थमणिः। यत्र तत्त्वत्रयं मन्त्रराजमहिमा द्वयं चरमश्लोकश्च साधिष्ठेन प्रकारेण प्रत्यपादिषत। तत्र साक्षी कूटस्थ एको बहुशुभगुणवानव्ययो विश्वभर्तेतीश्वरतत्त्वं निरूप्यते। यच्च श्रीमन्निगमान्तदेशिकैरनुगृहीतमीश्वरलक्षणमनुकरोति यथा सर्वेश्वरत्वं व्यापकत्वे सति चेतनत्वं सर्वशेषित्वं, सर्वकर्मसमाराध्यत्वं, सर्वफलप्रदत्वं, सर्वाधारत्वं, सर्वकार्योत्पादकत्वं, स्वज्ञानस्वेतरसमस्तद्रव्यशरीरकत्वं, स्वतस्सत्यसङ्कल्पत्वादिकञ्च ईश्वरलक्षणम्।

तथा च श्रीरामानन्दचरणैः श्रियो विभुत्वतो निर्भरतापरैस्तैः श्रीव्याप्तिरार्यैरभिधीयते हीति विभुत्वपुरुषकारत्वे वर्ण्येते। तच्च न्यायसिद्धाञ्जन इत्थं न्यरूपि –

श्रिया सह तु दाम्पत्यं शाश्वतं तत एव तु।
तयोः साम्यैक्यशक्तित्वतद्वत्त्वादिगिरां गतिः॥ इति।

अस्येशाना जगतो विष्णुपत्नी, ईश्वरीं सर्वभूतानां, त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरं, यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम, नानयोर्विद्यते परम्, एकतत्त्वमिवोदितौ,

लक्ष्म्याः समस्तश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तु सापि सर्वम्।
तथाऽपि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी॥

इत्यादिश्रुतिस्मृतिवचनानि स्मर्तव्यान्यत्र।

किञ्च कैवल्यविषयेऽपि

आत्मारामैस्तथोपायस्वरूपज्ञानिभिश्च तैः।
मतज्ञैर्विरजापारं कैवल्यमिति मन्यते॥

इति मन्यत इत्याहुराचार्यचरणाः। अत्र वरदविष्णुमिश्राणां पङ्क्तिरनुसन्धेया – नन्वेवं निश्शेषकर्मक्षयाभावात् कैवल्यप्राप्तौ न मुक्तः स्यात्; सत्यम्, अमुक्त एव सः, मोक्षस्य परमात्मानन्दानुभवरूपत्वात्, तस्य ब्रह्मानन्दानुभवाभावात् स्वानन्दमात्रानुभवादिति। यदि चासौ मोक्षस्तदा स्वाभाविकरूपप्राप्तिरूपप्राप्तिमन्तरेण न पर्यवसानमिति श्रीवेङ्कटनाथाचार्यस्यापि वचनं स्मर्तव्यम्। अत एवाचार्यचरणा मन्यत इति प्रयुयुजिरे।

एतादृशसम्प्रदायरहस्योद्घाटकः श्रीवैष्णवमताब्जभास्करः सर्वेषां दार्शनिकानां सौकर्याय मोदाय विशिष्य श्रीरामानन्दसम्प्रदायानुयायिनां महत उपकाराय सव्याख्यं प्राकाश्यनीयत इति विदित्वा मोमुदीति नश्चेतः।

सर्वतन्त्रस्वतन्त्राणां नैयायिकरूपाणां सकलगुणपरिपूर्णानां शिष्यसुलभानां गुणैकग्राहिणां काशीश्रीमठाधीशानां जगद्गुरुश्रीरामानन्दाचार्यपदप्रतिष्ठितानां श्रीभगवद्रामानन्दाचार्यसिद्धान्तनिर्धारणसार्वभौमश्रीश्रीश्रीरामनरेशाचार्याणां चरणारविन्दयोर्नतिततयो निवेद्यन्ते येषां दिव्यप्रयासैरेष ग्रन्थः प्रकाश्यते।

एतस्य वैष्णवमताब्जभास्करस्य सम्पादकाः पदविमर्शाख्यायाः सिद्धान्तानुसारिण्याः शास्त्रप्रमाणपुष्टाया व्याख्यायाः, संवित्कनाम्न्या लोकभाषाव्याख्यायाश्च प्रणेतारः सन्ति आचार्यकटाक्षपरिपूर्णा नानाशास्त्रेषु विहितश्रमा व्याकरणचणा वाग्मिनः श्रीरामानुज–श्रीरामानन्दसम्प्रदायसिद्धान्तशिरोमणयो नवदेहलीस्थराष्ट्रियसंस्कृतविद्यापीठे व्याकरणविभागेऽध्यापनकर्मणि निरता आचार्या जयकान्तशर्माणः। अमीषां वैदुष्यमत्र व्याख्यायां विपश्चितामनुभवैकमेयम्। एते चोत्तरोत्तरं सारस्वतकर्मणि ईदृक्सम्प्रदायकर्मणि चाभिरता भूयासुरित्याशास्महे।

अशेषविघ्नशमनोऽनीकेश्वरोऽव्यादिति शम्।

श्रीनन्दन–मकर–कृष्ण–नवमी
विशाखायुत इन्दुवासरः
(04–02–2013)

इत्थं विदां वचनकरः
(रामानुजदेवनाथः)

नमोऽस्तु रामाय

# आत्मनिवेदन

गङ्गाजीकी गोदमें जन्म, गौतमगोत्रीयविप्रवंश, सदाचारपरायण परमवैष्णव माता-पिता, सर्वेश्वर श्रीसीतारामजीकी आराधना, यथासमय वैदिकसंस्कार, संस्कृतविद्याध्ययन, समर्थाचार्योपलब्धि एवं शास्त्रग्रहणानुकूल बुद्धि प्रकार मानवीय चरमोत्कर्षसिद्धि के लिये अपेक्षित सर्वानुकूलता प्रदान कर जगदम्बा श्रीरामवल्लभाजी ने मेरे ऊपर अपने वात्सल्यवर्षण में कोई कमी नहीं की। करुणा का परमोद्रेक तो तब प्रत्यक्ष हुआ जब उन्होंने हमें सपरिकर अपने दिव्यधाम श्रीअवध और उसमें भी श्रीजानकीघाट में बसा लिया। जैसे बचपन से ही घर में रामायण गीता भागवत भक्तमाल जैसे सद्ग्रन्थों के दर्शन-श्रवण का सुअवसर मिला वैसे प्रारम्भ से ही चित्त में यह बात स्थापित सी हो गई कि सबसे बड़े श्रीरामजी हैं, वही भगवान् हैं, उनकी भक्ति ही सर्वोत्तम है तथा उनकी कृपा से ही जीव का कल्याण होता है। उस समय भी ''जीवात्मा परमात्मा एक हैं'' इस प्रकारकी बातें मुझे खीर में नमक जैसी लगती थी। लगभग सोलहवें वर्ष में पूज्यपिताजी से पता चला कि हम सब श्रीरामानन्दीय वैष्णव हैं। प्रभुकृपा से रामकथा एवं वैष्णवता के प्रति अभिनिवेश बढता गया। गुरुजनों की कृपा से संस्कृतव्याकरण का थोड़ा संस्कार जगने के कारण सरल संस्कृत वाक्यों का अर्थ समझ में आने लगा था, तुलसी साहित्यपर मैं पहले से ही मुग्ध था, उनकी गुरुपरम्पराकी जिज्ञासाने मुझे आचार्यप्रवर श्रीरामानन्दस्वामीजी की पादुका तक पहुँचा दिया। श्रीमठ अनादि तथा परममंगलमयी श्रीरामभक्ति धारा का गोमुख है, यहीं रहकर श्रीसम्प्रदाय के आचार्यों ने सम्पूर्णसंसार में रामभक्तिधारा को प्रवाहित किया, जिसमें अवगाहन कर असंख्य मानवों ने अपने जीवन को धन्य बनाया। वैष्णवों के 52 द्वारों में 36 द्वारे रामावत श्रीसम्प्रदाय के ही हैं, अधिकांश आश्रमों एवं गद्दियों पर विरक्त संत ही विराजमान हैं श्रीसम्प्रदाय से उद्भूत प्रेरित एवं पालित शताधिक आध्यात्मिक परम्परायें संसार में फैली हुई हैं, जिसके माध्यम से यह रामभक्तिगङ्गा प्रतिक्षण प्रसारित हो रही है।

इस सम्प्रदाय के ध्येय भगवान् श्रीराम एवं गेय वाल्मीकीयरामायण हैं वेदों के वाद लौकिकसंस्कृत में सर्वप्रथम भगवान् श्रीराम का दिव्यचरित्र ही गाया गया जो साक्षाद् वेदों का ही अवतार है। दुनियाँ के किसी धर्म, सम्प्रदाय या पन्थ में

ऐसा ग्रन्थ इससे पहले व बाद में कभी नहीं लिखा गया। उपास्य के अनुरूप श्रीसम्प्रदाय में दूसरे सम्प्रदायों की अपेक्षा अत्यधिक औदार्य है, श्रीसम्प्रदाय के मध्यमाचार्य रामावतार स्वामीश्रीरामानन्दाचार्य ने श्रीसम्प्रदाय की कल्याणमयी उदात्तगङ्गा को समुद्रायित कर जाति, समाज एवं धर्म के समस्त विखण्डक भावों को पृथक् करते हुए किसी भी वैदिकमर्यादा को छिन्न भिन्न किये विना सभी का भक्ति-प्रपत्ति गंगा में गोता लगाने के लिये आवाहन किया। आचार्यप्रवर का यह कार्य समाज, धर्म, राष्ट्र एवं वैदिक मान्यताओं के विघटन में महान् अवरोधक सिद्ध हुआ तथा वैदिक सनातन धर्म पर अकारण मिथ्यारोप लगाने वालों का मुंह सदा सदा के लिये बन्द हो गया। उन्होंने रामभक्ति-साहित्य की भागीरथी के प्रवाह की अभिवृद्धि की अपितु अपने शिष्यों को लोकभाषा में रामभावों को लिखने एवं बोलने के लिये प्रेरित किया, जिससे सम्पूर्ण हिन्दी साहित्य भरा पड़ा है। विश्वमहाकाव्य रामचरितमानस हो या भक्तमाल, इनकी शिष्यपरम्परा की देन है। श्रीमठ तथा वर्तमान जगद्गुरुजी के दर्शन, प्रवचन एवं लोकमङ्गलप्रवृत्तियों से मुझे भगवान् रामानन्दस्वामी के वैभवपूर्ण सर्वमङ्गल स्वरूप एवं महाचार्यत्व का ऐसा गौरवमय भान हुआ मानो किसी दुर्बल तर्क को सहसा श्रुतिवचनरूपी अबाध्य प्रमाण का बल मिल गया हो। लगभग 700 वर्ष पूर्व तीर्थराजप्रयाग के विप्रपरिवार में अवतीर्ण, यथासमय उपनयनानन्तर आचार्यप्रवर श्रीराघवानन्दस्वामीजी से वैष्णवीय पञ्चसंस्कारपूर्वक विरक्तदीक्षा ग्रहणकर काशी पंचगंगा के तट पर अपने लोकमङ्गल ऐश्वर्य को मानवता के समुज्जीवनार्थ विनियुक्त करते हुए अनेक आश्रितों को रामभावप्रदान कर धन्य बनाने वाले स्वामी रामानन्दाचार्यजीकी सर्वमान्य संस्कृत रचना है- श्रीवैष्णवमताब्जभास्कर, जो उनके सम्प्रदायाचार्यत्व का प्रबल निदर्शन है। यह उचित ही है कि लोक की अन्तस्तमिस्रा का निरसनकर्त्ता अभिनव चेतना का आधाता यह भास्कर उस प्रकार के उदयाचल से उदित हो। सारभोगी वैष्णवजनों की साधना की दृष्टि से परिगणित दस प्रश्नों के समाधानों में प्रायः सभी विषयों का समावेश होने से यह विशिष्टाद्वैत दर्शनका प्रमेयप्रधान ग्रन्थ है। पद्यात्मक होने के साथ साथ भाषा की सरलता इसकी अपूर्वता है। पञ्चसंस्कार आदि साम्प्रदायिक आचार, उपास्य का ज्ञेय-ध्येय स्वरूप, उपासनाप्रकार, सायुज्य का स्वरूप इत्यादि विषयों का आचार्यचरण द्वारा अत्यन्त स्पष्ट प्रबोधन किया गया है। कालक्षेप का जो शास्त्रीय स्वरूप निर्दिष्ट किया गया है, वह अद्भुत है, जिसे पढकर आचार्यपाद

की अपेक्षा का परिज्ञान होता है कि वैष्णवों को अपने सिद्धान्तानुगुण भाष्य, रामायण अदि आर्षग्रन्थों का स्वाध्याय अवश्य करना चाहिये। साम्प्रदायिक सिद्धान्त का यथावस्थित ज्ञान न होने से आज के अधिकांश वैष्णव कथावाचक भी सम्प्रदायान्तर के प्रसिद्ध वाक्यों को दुहराते रहते हैं, उन्हें पता ही नहीं चलता है कि हम अपसिद्धान्त बोल रहे हैं। सन्तमतों के कतिपय आधुनिकसमालोचकों की दशा तो और भी बदतर है। उनका कथन है- **''सतशब्द के ऊपर जब कलश चढ जाता है, तब संत शब्द बनता है अर्थात् ईश्वर से भी ऊपर उठा हुआ तत्त्व''**। ये श्रवणरमणीय अवधारणा, मनोविनोदक निर्वचन उनके विद्यादारिद्र्य को सूचित करते हैं। उनकी शास्त्रप्रज्ञाशून्यता अध्यात्मचिन्तन का दुर्दैव तथा उनकी उच्छृंखल मुखरता विज्ञों के लिये यातना के समान सहनीय होती है। जिन आचार्यप्रवर के चरणरज ने कबीर, रैदास, मीरा, तुलसी जैसों में सन्तत्व का आधान कर धन्यजीवन प्रदान किया, उन अनन्यसाधारण व विराट् व्यक्तित्ववाले श्रीरामानन्दस्वामी को ''रामानन्दाचार्य'' न लिखकर ''संत रामानंद'' शब्द से निर्दिष्ट करते हैं। उनके अनुसार शास्त्र की मर्यादा छोड़कर समाज में नवीन आध्यात्मिक चेतना प्रदान करने वाला संत होता है और ठीक वैसे ही थे संत रामानन्द। जबकि यथार्थ यह है कि आचार्यचरणने कहीं भी न तो श्रौत वर्णाश्रमधर्म की उपेक्षा की और न ही किसी अभिनव मार्ग का प्रवर्तन किया। उन्होंने तो धर्म की मर्यादा का पूर्णतः परिपालन करते हुए शास्त्र में सिद्धान्ततः स्वीकृत भक्तिप्रपत्ति के अचिन्त्यप्रभाव का उदार प्रयोग कर उसकी अपूर्वता को निदर्शित किया, पूर्ववर्ती वैष्णवाचार्य जानते हुए भी जिसके उदारप्रयोग का साहस नहीं कर पाये। किसी अवस्थामें वैदिक धर्मानुशासन का परित्याग पतन है, आत्महत्या है। इसके त्यागका उपदेष्टा सम्प्रदायाचार्य होना तो दूर, सन्त भी नहीं हो सकता। 'हरि को भजे सो हरि का होई' का अभिप्राय भक्ति के अचिन्त्यप्रभाव के प्रकाशन में है, जिसके जीवन का उद्देश्य केवल भगवद्भागवतभजन हो, जिसमें पूर्णसाधुता प्रकट हो गई हो, क्या उसके साथ वैष्णवोचित व्यवहार के लिये देहनिबन्धन जात्यादि प्रश्न आवश्यक है? लगता है, आचार्य का वैभव न समझपाने के कारण या आचार्यशब्द से साम्प्रदायिक सङ्कीर्णता की प्रतीति होने से संभवतः उन्हें आचार्य पद के प्रयोग में कठिनाई आ रही हो। आधुनिक-चिन्तकों का यह सबसे बड़ा दुर्भाग्य है कि उन्हें सम्प्रदाय एवं साम्प्रदायिकता का अभिप्राय अभी तक स्पष्ट नहीं हुआ है। वैसे

भी इन दिनों परिवर्तनवादियों के लिये धर्म संस्कार परम्परा जैसे शब्दों को सुनना असह्य सा होने लगा है, शास्त्रज्ञ मनीषियों ने विनाश से ठीक पहले वाली इस दशा को अन्धतामिस्र कहा है।

समालोचकों ने वैष्णवमताब्जभास्कर को श्रीरामानन्दाचार्य की कृति तो माना किन्तु दर्शन तथा साम्प्रदायिक सदाचारविशेष के ज्ञानाभाव में इस सम्प्रदाय को सम्प्रदायान्तर की शाखा अथवा उसके ही उत्तरकालिक विकसित रूप में प्रतिपादित किया। उन्हें न तो प्रस्तुत ग्रन्थ में वर्णित मूलमन्त्र, मन्त्रद्वय, चरममन्त्र का भेद समझ में आया और न ही पञ्चसंस्कारों में धनुर्बाणाङ्कन एवं तुलसीमालाधारण की अनिवार्यता पर दृष्टि गई। द्विजेतर शरीरवाले विरक्तवैष्णवसन्तों के प्रति अपेक्षित पूज्य भाव व व्यवहार का निर्देश सम्प्रदायके विशिष्ट एवं अगतार्थ स्वरूपको प्रस्तुत करता है। सम्प्रदायान्तर में शाखाभेद से विवादित श्रीतत्त्व की अणुता या विभुता, जीवत्व या ईश्वरत्व मान्य हो? यह अद्यावधि अनिर्णीत ही है किन्तु यहाँ स्वामिपाद ने श्रीतत्त्व के विभुत्व एवं ईश्वरत्व को निर्भ्रान्त स्वीकार करते हुए उसके पुरुषकारत्व का समुचित एवं स्पष्ट समन्वय किया है। नित्यसूरियों में श्रीहनुमान् जी का नामोल्लेखपूर्वक निर्देश कर सम्प्रदायान्तर में अगतार्थता सूचित की है। कैवल्य नामक मोक्ष को स्वीकार करने में अभी भी वैष्णवान्तर में विवाद जीवित ही है जबकि आचार्यचरण ने उसकी सत्ता को दार्शनिक मान्यता दी है। तभी तो गोस्वामीजी ने भी अतिदुर्लभ कैवल्य परमपद लिखकर अपनी साम्प्रदायिक धारणा का अनुवाद किया। वस्तुतः इस प्रकार के इसके इतरव्यावर्तक दार्शनिक विषयों पर सम्प्रदायके मर्मज्ञमनीषियों की सन्निधि में गहन अनुसन्धान की आवश्यकता है। श्रीमद्बोधायनाचार्य प्रभृति महर्षियों द्वारा अङ्गीकृत विशिष्टाद्वैत को सिद्धान्ततः स्वीकारते हुए भी श्रीस्वामीजीने कहीं भी विशिष्टाद्वैत शब्द का उल्लेख तक नहीं किया, बड़े सरल व सहजभाव से अभिमत का उपस्थापन तो किया किन्तु कहीं भी उनके सैद्धान्तिक आग्रह, परमतखण्डन, उग्रदार्शनिक-विवाद-विद्रोह के भाव नहीं दिखते हैं। बाद में यही सौम्य समुदारभाव एवं फलोन्मुखी दृष्टि प्रायः गोस्वामीजी में भी संक्रन्त हुई है। यही सारभोगिता, साधुता एवं दार्शनिक सरलता उनके प्रायः सभी विरक्त अनुयायियों के जीवन में देखी जाती है, जीवन भर साधु शास्त्रार्थ ही करता रहेगा तो नामजप, मन्त्रानुष्ठान, साधुसेवा या भगवद्ध्यानचिन्तन कब करेगा? यद्यपि यहाँ के कतिपय आचार्यों ने अध्यासध्वंसलेश जैसे ग्रन्थों की

भी रचना की तथापि भजनानन्दी साधु तो विश्वासपूर्वक अपनी साधना में ही लगे रहे। फलतः प्रयोगविशेष के अनुष्ठान से यहाँ अनेकों सिद्ध हो गये। वस्तुतः दास्यभाव रामानन्द सम्प्रदाय की आत्मा है और सम्पूर्ण जगत् को भगवद्भाव से देखना यहाँ के विरक्तों की भावसाधना। प्रकृत ग्रन्थ में उनके जानने भर की पर्याप्त सामग्री है। साधना की दृष्टि से इससे अधिक उन्हें जानना भी अभीष्ट नहीं है। एक ओर स्वामीजी ने अहिंसा को सर्वोत्तम धर्म बताते हुए हिंसकों को विष्णुघातक तक कह कर मानवतामूलक जीवनदृष्टि स्पष्ट कर दी है। दूसरी ओर वैष्णवसन्तों को उत्तरदक्षिण के सभी तीर्थों में निवास का आदेश देकर अखण्ड एवं व्यापक राष्ट्रीय चेतना को सार्वजनीन कर दिया है, जो आगे चलकर तुलसीदासजी के "सन्त सुखी विचरन्त मही" शब्द से व्यक्त हुई। वैष्णवमताब्जभास्कर के उपलब्ध संस्करणों में श्लोकसंख्या, छन्दोभेद, पाठभेद, प्रक्षेप आदि का सविमर्श उपन्यासपूर्वक अनेकविध परिष्कार अपेक्षित है। मूलप्रति को देखे विना उपलब्ध छन्दोभङ्ग का व्यवस्थापन भी तो कैसे किया जाता। जितने पाठभेद, जितने भ्रान्तिस्थल यहाँ हैं, शायद ही किसी अन्य ग्रन्थ में हो, पाण्डुलिपि देखकर मूलप्रति के अनुसार पाठान्तर का समीक्षा पूर्वक शुद्धस्वरूप प्रकाशित होता तो अनुरूप होता। संभवतः किन्हीं कारणों से विविध एवं अनेक संस्करणों वाली प्रतियाँ उपलब्ध नहीं हो पायी, अन्यथा प्रस्तुतग्रन्थ का यथासंभव समीक्षित एवं मानकरूप ही श्रीमठ से प्रकाशित होता। एतदर्थ सुधी पाठक मुझे क्षमा करें।

यह इस सम्प्रदाय का गौरवपूर्ण सौभाग्य है कि वर्तमान आचार्यश्री अपनी अनेक सारस्वत एवं लोकमङ्गल प्रवृत्तियों के द्वारा भगवत्पाद के उदाररामभावसौरभ के प्रसार में निरन्तर लगे हुए हैं। उसी क्रम में वर्तमान जगद्गुरुजी का शुभसङ्कल्प हुआ कि स्वामीजी के प्राकट्यस्थलरूप प्रयाग वाले कुम्भ में श्रीमठसे उनकी सर्वमान्यरचना वैष्णवमताब्जभास्कर को संस्कृतटीका के साथ प्रकाशित कर भक्तों को उपलब्ध कराया जावे। एतदर्थ उन्होंने इस दास को अपने आशीर्वाद के साथ आदेश प्रदान किया। मेरा एक ओर संसार में फँसा गृहस्थजीवन दूसरी ओर सरकारी नौकरी अर्थात् पूर्णतः दयनीय दशा। बोध के साथ साथ निर्धारित अवधि की स्वल्पता से मैं घबड़ा रहा था, मेरे शास्त्रज्ञ होने का भ्रम जो कतिपय लोगों में विद्यमान है, उसके मिटने का समय आ गया था, पर मुझे निरावृत होने से कौन बचाता। सहसा पराम्बा की करुणा तथा वैष्णवसन्तों की क्षमाशीलता की याद

आयी। उन्हीं के बल पर डेढ महीने में इस स्वल्पसत्त्व दास द्वारा गलत या सही जो बन पाया, आपके सामने है। आशा है, मेरी दीनप्रार्थनापर दयामय सन्तजन सुधीजन प्रमाद एवं अज्ञानजन्य त्रुटियों को सुधार कर पढ लेंगे। संस्कृत एवं प्राच्यविद्या के समुज्जीवक विश्वविश्रुत ऋषिकल्प महामनीषी प्रो. श्रीरामकरणशर्माजी ने अपना वात्सल्यस्निग्ध मधुमय नैवेद्य प्रदानकर ग्रन्थ के अन्तःस्वरूप को पोषण प्रदान किया है। एतदर्थ वन्दन के अतिरिक्त इस अकिञ्चन के पास और क्या है? यहाँ वैदिकप्रवर भाई डॉ. रामानुज उपाध्याय तथा व्याकरण की व्युत्पन्न छात्रा लक्ष्मीशर्मा के सहयोग का साभार स्मरण करता हूँ। विद्यापीठ के साहित्यविभागीय परियोजनासहायक एवं मेरे स्नेहभाजन श्रीगोपालकुमारझाजी ने बड़ी निष्ठा एवं समर्पण की भावना से इस ग्रन्थ के टङ्कण आदि कार्य को सम्पन्न किया, एतदर्थ मैं उनके लिये सर्वविध उत्कर्ष की कामना करता हूँ। श्रीमहाराजजीने तो मुझे दीक्षाकाल में रामकिङ्करदास ऐसा नाम दिया था, प्रार्थना है कि आप सब नामानुरूप जीवन की प्राप्ति का आशीर्वाद प्रदान करें। अन्त में कविवर विहारी के शब्दों का आंशिकपरिवर्तनपूर्वक उपस्थापन कर विराम लेता हूँ-

तौ बलियै भलियै बनी नागर अवधकिशोर।
जौ तुम नीकै कै लखौ मो करनी की ओर।।

वैष्णवजनकृपापालित
जयकान्तशर्मा

*******

# विषयानुक्रमणिका

श्रीसीतारामाभ्यां नमः

श्रीसम्प्रदायाचार्यचूड़ामणियतिराजसार्वभौमश्रीमद्भगवत्पाद-

स्वामिश्रीरामानन्दाचार्यचरणैः समुद्भासितः

# श्रीवैष्णवमताब्जभास्करः

**श्रीमन्तं श्रुतिवेद्यमद्भुतगुणग्रामाग्र्यरत्नाकरं**
**प्रेयःस्वेक्षणसंसुलज्जितमहीजाताक्षिकोणेक्षितम्।**
**भक्ताशेषमनोभिवाञ्छितचतुर्वर्गप्रदं स्वर्द्रुमं**
**रामं स्मेरमुखाम्बुजं शुचिमहानीलाश्मकान्तिं भजे।।1।।**

.........................................................................................................

**आचार्यजयकान्तशर्मापरनामधेयेन श्रीरामकिङ्कराचार्येण स्वसम्प्रदायसपर्यायां विरचितः**

**पदपरामर्शः**[1]

*भोगे मज्जयति प्रसह्य भजनप्रज्ञां निपात्य द्यति*
*नैशित्वं गणयत्यवैति न पुनस्ते दीनरक्षाव्रतम्।*
*सावज्ञं त्वयि यद्दुनोति भगवन् मत्वा त्वदेकाश्रयम्*
*तन्मे पापमपास्य मां करुणया स्वं स्वानुरूपं कुरु।।*

------------------------------संवित्करः------------------------------

बंदि जगद्गुरु पादुकँहि सिय रघुवर चित लाय।
भास्कर संवित्कर लिखौं सरल भाव समुझाय।।

नित्यश्रीसे समलङ्कृत, वेदों से जानने योग्य, आश्चर्यमय एवं दिव्य सौशील्यकारुण्यादि अनन्त कल्याण गुणों के सागर, परमप्रेमास्पद की प्रीतिपूर्ण दृष्टि से अवलोकित होने के कारण अत्यन्त लज्जायुक्त हुई श्रीसीताजी द्वारा स्नेहपूर्वक निहारे जाते वाले, भक्तों के अभीष्ट अर्थधर्मादि चतुर्विध पुरुषार्थ तथा स्वभक्तिसेवारूप कामना पूर्ण करने वाले कल्याणप्रद कल्पवृक्ष के समान, सर्वदा मन्दस्मित से उल्लसित मुखकमलवाले, स्वच्छ नीलमणि जैसी दिव्यकान्ति वाले भगवान् श्रीराम का मैं भजन करता हूँ।

------------------------------------------------------------------------

**टिप्पणी-** "श्रीरामजी की भक्ति एवं प्रपत्ति ही वेदों का परमरहस्य है तथा वही मानवकल्याण का राजपथ है" इस दिव्य भाव का उदार उद्घोष एवं सार्वभौम प्रयोग कर जिस वैदिकसनातनधर्म के महनीय-

---

[1] पदान्याचार्यप्रोक्तशब्दानामृशति युक्त्या विवेचयति, पदपरः पदान्युद्दिश्य प्रवर्तमान आमर्शो विश्लेषणमिति वा। पुंसि पदशब्दः किरणपरः, वैष्णवमताब्जभास्करस्य पदान् किरणान् दर्पणवदधिकमामृशति प्रतिफलयतीति वा। भक्तिपक्षे जगद्गुरुश्रीरामानन्दाचार्यस्वामिनः पदे चरणावामृशति भक्त्या संवाहयतीत्यर्थः।

..........पदपरामर्शः..........

**वात्सल्यं करुणानिधे जननि ते श्रेयो दुहानं सताम्**
**दीनानुग्रहणव्रतं विजयते मादृक्समाश्वासनम्।**
**मा त्याक्षीर्विविधापचारगणनाकाले विपत्सङ्कुले**
**वाश्रेव स्नपयेः सहायसुधया मामेत्य भूम्यात्मजे॥**

---

आचार्य ने मानवमात्र के लिये मुक्तिका द्वार उद्घाटित किया, सामाजिक एवम् आध्यात्मिक अन्तर्ज्वर का उपशमन किया। कबीर रैदास जैसे लोकविश्रुत अनेक शिष्यों तथा तुलसी मीरा नाभादास जैसे अनेक परवर्ती प्रशिष्यों को दिव्यजीवन एवं लोकमङ्गलचेतना प्रदान कर परमधन्य बनाने वाले विराट् एवं यथार्थत आचार्य उन श्रीरामानन्दाचार्य की सर्वमान्य संस्कृतरचना वैष्णवमताब्जभास्कर के नाम से विख्यात है।

आचार्यचरण ने अपने इस ग्रन्थ के मङ्गलाचरण में सर्वेश्वर भगवान् श्रीरामकी स्तुति कर उपास्यविषयक मान्यता को निर्भ्रान्तिरूप से स्पष्ट कर दिया कि श्रीसम्प्रदाय के परमाराध्य तथा परमाचार्य सर्वेश्वर भगवान् श्रीरामचन्द्र ही हैं। वे केवल अवतार ही नहीं, सर्वावतारी हैं वही परमप्रेमास्पद हैं, सर्वस्व हैं और परमप्राप्य भी। अतः जीवमात्र के द्वारा वे ही भजनीय हैं। उनका कैङ्कर्य ही जीवन का परम उद्देश्य होना चाहिये। प्रकृत मङ्गलश्लोक का अभिप्राय है कि प्रभु का केवल श्रीसीताजी के साथ ही नहीं अपितु दिव्यशोभा एवं अचिन्त्य विभूति आदि के साथ भी नित्यसम्बन्ध है, वे वेदान्तवेद्य हैं अर्थात् वेदान्त के द्वारा जानने योग्य है, वे अद्भुत एवं अनन्त कल्याणमय गुणों के सागर हैं। आचार्यचरण ''रामालोकनतत्पराम्'' श्रुति के अभिप्राय को ललितविशेषण द्वारा सुलभ कराते हुए कहते हैं कि– जगन्माता भूमिजा श्रीजानकी सर्वदा अत्यन्त स्नेहपूर्ण नयनों से उन्हें निहारती हैं कभी–कभी सहसा उन पर प्रभुकी दृष्टि पड़ जाती है तो जगदम्बा निसर्गशीलसुकुमारता के कारण लज्जित हो स्नेहनम्र एवं सङ्कुचित कटाक्षों से निहारने लगती हैं, जिससे उनका हृदयहारी अवलोकन और भी सरस एवं मनोज्ञ हो जाता है। श्रीगोस्वामीजीने उनके इस मधुर अवलोकन को अनिर्वचनीय मानते हुए भी इन शब्दों में व्यक्त किया है–

रामहि चितव भाव जेहि सीया।
सो सनेह सुख नहि कथनीया॥

इस प्रकार श्रीसीताजी के द्वारा कटाक्षनिक्षेपपूर्वक सर्वदा अवलोकित भगवान् भक्तों के अर्थ धर्म काम मोक्ष नाम वाले पुरुषार्थ चतुष्टय को ही नहीं वरन् पञ्चम पुरुषार्थ के रूप में प्रसिद्ध अपनी भक्ति–प्रीति भी प्रदान करते हैं, अतः आश्रितों के लिये साक्षात्कल्पवृक्ष के समान हैं। जैसे विशालतरु सघन छाया से अश्रितों का ताप दूरकर अपने पुष्पों व फलों द्वारा उसका अभिनन्दन एवं पोषण करता है, वैसे भगवान् श्रीराम भी अपने आश्रितों का संरक्षण एवं सम्पोषण करते हैं, अतः वाल्मीकिरामायण में वालिपत्नी तारा ने इसीभाव से उनका परिचय करवाया था–

निवासवृक्षः साधूनामापन्नानां परा गतिः।

मैं उन पवित्र एवं विशाल नीलमणि जैसी उज्ज्वल कान्ति वाले तथा सर्वदा मन्दस्मित से उल्लसित मुखकमलवाले परमप्रभु श्रीरामका भजन करता हूँ। प्रकृत श्लोक में शार्दूलविक्रीडित छन्द है तथा रूपक अलङ्कार है।

पदपरामर्शः

सीताराघवमञ्जुलद्युतिलसद्दिव्यान्तरङ्गं च यद्
वक्षोदारमदर्शयज्जनकजाशीर्भूषणालङ्कृतम्।
लाङ्गूलध्वजशोभितं स्मरणजप्रेमाश्रुसम्पावितं
वन्दे जङ्गममन्दिरं रघुपतेः श्रीमत्कपीशात्मकम्॥
लोकोद्धारधिया प्रपत्तिसुधया सिद्धिप्रयुक्त्या च यो
वैषम्यप्रसृतज्ज्वरं व्यपनयत्कारुण्यकल्पद्रुमः।
तस्याचार्यशिरोमणेर्भगवतो भक्तिं परां तन्वतो
रामानन्दयतेः स्वयं रघुपतेः प्रीत्याश्रये पादुके॥
ज्ञानवैराग्यसिन्धुर्यो वैष्णवत्वं प्रदाय मां
कृपया न्यक्षिपद्रामपादयोस्तं गुरुं श्रये॥

अथाखिलहेयप्रत्यनीककल्याणगुणनिलयः स्वेतरसमस्तवस्तुविलक्षणः सर्वशेषी सर्वात्मा सर्वेश्वरो भगवान् श्रीरामो दयनीयजीवदशामवलोक्य करुणया स्वानादिवेदविद्याचरमतात्पर्यप्रकाशनेन लोकोद्दिधीर्षया सर्वविद्यापरमाचार्यः सन्नपि पुनराचार्यरूपेणावततार। स एवाचार्यचक्रवर्ती भगवान् श्रीरामानन्द उपसन्नमुमुक्षुषु विशिष्टाद्वैतसिद्धान्तमादधानः षडक्षरमन्त्रराजमनुसन्दधान आचार्योचितसमुदारभावेन श्रीरामप्रपत्तिं व्याचक्षाणः प्रयुञ्जानश्च काश्यामधिपञ्चगङ्गं सम्प्रदायप्रवर्तकाचार्य-शुभसमाख्यासम्पर्कसमुज्ज्वलं श्रीमठमध्युवास। तत्रैकदा श्रद्धावनतं जिज्ञासया समुपागतं शिष्येष्वन्यतमं श्रीसुरसुरानन्दं विलोक्य तं निमित्तीकृत्य सर्वजनहितचिकीर्षया तत्पृष्टप्रश्नदशकमुपजीव्य विततगहनाज्ञानतिमिरनिरसनाय ज्ञानालोकेन जिज्ञासुमान-साम्बुजविकासाय च शिष्यवात्सल्याच्छ्रीवैष्णवसिद्धान्ताचारप्रबोधकं श्रीवैष्णवमताब्ज-भास्करेत्याख्यं शास्त्राब्धिमन्थनोत्थं ग्रन्थरत्नं समुन्निनाय। तत्रादौ निर्विघ्नतापूर्वक-प्रारिप्सितग्रन्थसमाप्तयेऽविगीतशिष्टाचारमनुरुध्य स्वेष्टदेवतानमस्काररूपमङ्गलमा-चरति- **श्रीमन्तमिति।** जगद्गुरुत्वादिह भजनस्य कर्त्तव्यतां शिक्षयितुं तदनुगुणं परमभजनीयस्यावधारणाय सम्प्रदायजीवातुभूतं परमप्राप्यं सिद्धोपायतया सिद्धान्तसिद्धं सर्वस्वं पुरस्करोति, तत्रापि स्वाचारेणाचारं ग्राहयतीति स्वनिष्ठभजनकर्मीभूतं भगवन्तं दिव्यगुणवर्णनमुखेन निरूप्य तच्छरीरभूतदेवादिभजनस्याविधिपूर्वकत्वात्सर्वात्मकतया तद्भजनस्यैव याथार्थ्येन श्रुतिभिर्मुख्यविधेयत्वं प्रदर्शयति। श्रीमत्त्वादिविशेषणाष्टक-

**पदपरामर्शः**

विशिष्टं रामं भज इत्यर्थः। भजनकर्मीभूतस्य सञ्ज्ञासौष्ठवमाह- **राममिति,** रमन्ते योगिनो यस्मिन्निति श्रुतिसिद्धस्याप्यवयवशक्त्या त्रिभुवनमनोज्ञत्वं लभ्यते। जक्षन् क्रीडन् रममाण इत्यादिश्रुत्या रमणस्वभावतयाखिललोकानन्दप्रदत्वञ्च गम्यते। अत आदिकवी रामो रमयतां वर इत्युक्त्वा रमयताम् आनन्दयतामपि वर इत्याशयेनाखण्डपूर्णानन्दप्रदत्वं तस्य बोधयति, तेनानन्दमयाधिकरणार्थः सूचितो भवति। रामनाम्नोऽनादित्वसूचनाय नामकरणसंस्कारात्प्रागेव कौसल्याजनयद्राममिति पद्ये बालमित्याद्यनुचार्य श्रुतिसिद्धं नाम निरदेशि मधुमयभणितीनां मार्गदर्शिना महर्षिणा। इदमेव हि विशेष्यभूतं तस्य परमपुरुषोत्तमस्य मुख्यं नाम, औपनिषदानां ब्रह्मसदात्मेत्यादीनां कृष्णनारायणादीनाञ्च विशेषणपरतया तत्रैवान्वयो विशेषणानां विशेष्यान्वयित्वस्य योग्यत्वात्। पशुना यजेत छागस्य वपाया मेदस इत्यत्र छागो वा मन्त्रवर्णादिति सूत्रोक्त्या पशुशब्दस्य यथा छागपर्यवसायित्वं तथैव तत्सद्ब्रह्मनारायणादिसामान्यशब्दानां श्रीराम एव विशेषे पर्यवसानं भवतीत्यर्थः। सर्वकर्माराध्यस्य भजनोद्देश्यत्वं सुतरां सिद्धमिति तं रामं विशिनष्टि **श्रीमन्तमिति।** श्रीः सीताऽस्त्यस्येति श्रीमान्, तम्, नित्ययोगे मतुप्। अत्र श्रीपदेन श्रीसीताया ग्रहणम्, न तु लक्ष्म्याः, तस्यास्तु ''श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतौ भेदबोधकद्विवचननिर्देशाच्छ्रीपदस्य पृथगुपादानाच्च। नित्यश्रीकमित्यर्थः, तया नित्ययुक्तमिति यावत्। परस्परविश्लेषप्रसङ्गरहितयोरपि विश्लेषाभिनयो लीलाविभूतौ पुनः प्राप्त्यर्थः, उभयोर्हि स्वसङ्कल्पनियता भवति काचित्स्वतन्त्रलीला, प्रत्यवतारं नित्ययोगः, मया विना शुष्यति शोकदीनमित्यादेर्जगदम्बोक्तेः। या स्वेतरसमस्तैः स्वरूपस्थितिप्रवृत्त्यर्थं श्रीयते, यन्निवेशात्सर्वत्र प्राशस्त्यबुद्धिर्जायते, सैव श्रीरस्त्यस्येति तद्वैभवं कथं कथ्यतामिति ध्वन्यते। निरवधिकक्रीडादिमत्या निरुपाधिकदेव्या तया प्रीतिविषयीकृतं रामं भज इत्याशयः, एतेन न केवलमभिमतानुरूपपत्नीवत्तया महाभाग्यसम्पद् व्यज्यतेऽपितु तन्मुखेन भगवतो नित्यं सुखप्रसादनीयत्वं गम्यते, भगवतः सर्वेषु व्यापारेषु श्रीसामरस्यसूचनात्। श्रीश्रीमतोः सर्वत्र समानाभिप्रायतया नित्ययुक्तामखिलजगन्मातरं पुरस्कृत्य महान्तोऽप्यपराधाः क्षामाप्यन्त इति। सापराधेष्वप्याश्रितेषु निग्रहोष्मलतानिवारिकया सहधर्मचारिण्या नित्ययोगमाह- **श्रीमन्तमिति।** अग्निसूर्यवायुसोमेन्द्रादीनामन्तर्यामितया तत्प्रतिपादनपरैरपि वेदैर्भगवतो

पदपरामर्शः

वेद्यतेति तं **श्रुतिवेद्यमिति** विशिनष्टि- श्रूयते नित्यमिति श्रुतिरिति व्युत्पत्त्यापौरुषेयत्वान्निर्दोषत्वं श्रुतेर्विवक्षितम्, प्रमाणान्तरव्यावर्तक- त्वात्तद्वेद्यस्याबाध्य- वस्तुत्वं सूच्यते। साधकबाधकप्रत्यक्षानुमानादिप्रमाणान्तरगोचरवस्तुनि शास्त्रेण प्रतिपादनं न युज्यत ब्रह्मणोऽत्यन्तातीन्द्रियत्वात्प्रत्यक्षादिप्रमाणाविषयत्वं लभ्यते। एतेन ब्रह्मणोऽवेद्यत्वादिपक्षा निरस्ताः। अत एव वेदवेद्ये परे पुंसि जाते दशरथात्मजे वेदैश्च सर्वैरहमेव वेद्य इत्यादिस्मृतिवचनानि सङ्गच्छन्ते, शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनमिति भारतोक्तिश्च। वेदाहमेतं पुरुषं महान्तमितिश्रुतिश्चात्र प्रमाणम्। पुनः कीदृशं रामं भज इत्यतस्तृतीयविशेषणमुन्नयति- **अद्भुतगुणग्रामाग्र्यरत्नाकरमिति।** अद्भुताश्च ये गुणास्तेषां ग्रामः समूहस्तस्य श्रेष्ठरत्नाकरभूतम्। यद्वा अद्भुतगुणा एव रत्नानि तेषां ग्रामो निकरस्तस्याकरम् आश्रयभूतमित्यर्थः। ग्रामशब्दः समुदायपरो, रत्नाकरशब्दश्चाश्रयपरः, गुणेष्वद्भुतत्वेन निरतिशयवैचित्र्यमुच्यते, तेन सर्वव्यापित्व- नित्यज्ञानत्वादिस्वरूपनिरूपकाः, निरतिशयौज्ज्वल्यमाधुर्यनिरवद्यत्वादिविग्रहगुणाः सौशील्यसौलभ्याद्याश्रयणोपयुक्तगुणाः सत्यसङ्कल्पत्वादीष्टप्रापणार्हगुणाश्चेत्यपरि- च्छेद्यगुणानन्त्यं दुरवगाहत्वं तापत्रयप्रशमकत्वञ्च द्योतयितुं रत्नाकरोपमानम्। एकैकस्य गुणस्यावान्तरानेकगुणगर्भत्वञ्च सूच्यते- तद्यथा- यथा रत्नानि जलधेरसंख्येयानि पुत्रक। तथा गुणा अनन्तस्याप्यसंख्येया महात्मन इति। गुणेषु अग्र्यरत्नत्वारोपेण महाभाग्यवद्भिरेव लभ्यत्वं द्योतितम्। अयमर्थः सङ्क्षिप्य वाल्मीकिनोक्तः- स च सर्वगुणोपेतः कौसल्यानन्दवर्धन इति। यद्यपि निर्दोषमङ्गलगुणाकरत्वसूचनेनैवान्य- विशेषणोक्तार्था उच्यन्ते, तथापि ब्राह्मणवसिष्ठ- न्यायेनान्येषां पृथगुपादानम्। पुना रामं तुरीयविशेषणेन विवृणोति- **प्रेयःस्वेक्षणसंसुलज्जितमहीजाताक्षिकोणेक्षित- मिति।** प्रेयसा रामेण कृतं यच्छ्रीसीतामुखनिरीक्षणं तेन प्रियकृतदर्शनेन संसुलज्जिता ईषल्लज्जावती महीजाता भूमिजा श्रीसीता, तस्या अक्षिकोणेन कटाक्षेणेक्षितं सस्नेहं विलोक्यमानम्। प्रीत्यमृतस्निग्धावलोकेन सन्ततसि- च्यमानकमनीयविग्रहम्, यथोक्तं भवभूतिना- स्नपयति हृदयेशं दुग्धकुल्येव दृष्टिरिति। रामचन्द्रमुखचन्द्ररसरसिकच- कोरिकयाऽतृप्तयेवाजस्रं निपीयमानप्रतिक्षणनवनवायमान- सौन्दर्यसुधारसमित्यर्थस्तेन रामालोकनतत्परामिति श्रुत्यर्थो व्याख्यातः। महीजातेत्यनेन सम्बन्धिशब्दमहिम्ना श्रीविग्रहस्यायोनिजात्वाद्यर्थप्रकाशनेन दिव्यगन्धमार्दव सौशील्यकारुण्यक्षमासहिष्णुत्वादि- ललितगुणाः सुतरामेव सन्निधाप्यन्ते।जनी प्रादुर्भावे महपूजायामिति प्रकृतिभूतधातुद्वया-

.......................................................पदपरामर्शः.......................................................

र्थानुसन्धानेन देवयजनभूसंभवतया चोत्पत्तिपरिपूतत्वं संसूच्य स्वेच्छानियताविर्भाव-लीलत्वं द्योत्यते। महीजातेत्यनेन तादृशसर्वेश्वरपतियोगं विनापि सकलपृथिव्या जन्मसिद्धं स्वामित्वमस्या इति ध्वन्यते। लावण्यादिगुणोज्ज्वलभर्तृप्रत्यासत्त्या महाभाग्यसम्पदमनुसन्दधानया मयैवाभीक्ष्णमवेक्षणीयः स्वत्रिभुवनमोहनसौन्दर्यं विस्मृत्यादृष्टपूर्ववन्मुग्धभ्रमर इव मदभिमुखं वीक्षते। तादृशचित्तापहारिपतिवीक्षणादि सुखप्रदत्वात्काम्यमप्यभिजातललनाया लज्जां जनयति। यथोक्तं वाल्मीकिना- ईषत्स लज्जमानां तामध्यारोपयत प्लवमिति। अत्र समानाभिप्रायकललितचेष्टित-वर्णनात्सामरस्यगर्भं मिथः प्रीतिपारवश्यं सूच्यते। यच्चाश्रितकल्याणाय कल्पते, यमर्थं समक्षयति व्याख्याकर्त्तुरेकं पद्यम्- सीताराघवयो- रनुदिनमुपचीयमानस्य प्रणयतरोरिव कुसुमं मिथोऽवलोकस्मितं पायादिति।

पुनः प्रकारान्तरेण भजनीयस्यौदार्यमभिधत्ते- **भक्ताशेषमनोऽभिवाञ्छित-चतुर्वर्गप्रदमिति।** पुण्यतारतम्यादनेकविधभक्तानामखिलस्यार्थधर्मकाममोक्षरूपस्य चतुर्वर्गस्य प्रदायकमित्यर्थः। न केवलं चतुर्वर्गमेव यच्छति, पञ्चमपुरुषार्थतया भक्तिशास्त्रे प्रथितं स्वप्रेमाणमपि ददातीति सर्वापेक्षितप्रदत्वसूचनाय भक्तमनोऽभिलषितं चतुर्वर्गञ्च प्रददातीति समुच्चयेन युक्तं व्याख्यानम्। यं **स्वद्रुमोऽपि** दातुमसमर्थस्तादृशमोक्षं स्वप्रेमाणञ्च महावदान्यतयाऽयमेव दातुमर्हति, तच्च नित्यज्ञानव्यापननियमनादिसामर्थ्यं विना न सम्भवतीति सर्वकर्मफलप्रदत्व-लक्षणमीश्वरत्वमुच्यते- तदन्यः को महोदारः प्रार्थितं दातुमीश्वर इत्युक्तेः। स्वात्मपर्यन्तसर्वस्वदानशीलत्वं निरूप्य य एको बहूनां विदधाति कामानिति श्रुत्यर्थः स्मारितः। केचन पुनरुक्तिदोषभिया भक्ताशेषमनोऽभिवाञ्छितचतुर्वर्गप्रदमिति स्वर्द्रुमे विशेषणीकृत्य व्याख्यान्ति। न हि स्वर्द्रुमोऽपि मोक्षं दातुमर्हतीति ततो विलक्षणत्वमभिधातुं विशेषणं ततो व्यतिरेचयतीति। वस्तुतो नात्राश्रितसर्वापेक्षित-दातृत्वरूपौदार्यमात्रं विवक्ष्यतेऽपित्वाश्रितसंरक्षकत्वमपीति स्वर्द्रुममिति पृथग्विशेषणम्। शब्दकल्पद्रुमे स्वःपदस्य शोभनार्थकत्वस्याप्युक्तत्वाच्छोभनवृक्षसदृशमित्यर्थः। स्वर्द्रुममित्यभेदाध्यवसायेन सर्वथा सादृश्यमुच्यते, यथा- द्रुमः पूर्वं तापमपनीय पुष्पफलदानादिनाश्रितं सन्तर्पयति तथाऽयं भगवानिति भावः। स्वरित्यत्र स्वरत्यप्राप्त्योपतापयतीत्यर्थकव्युत्पत्त्या सघनत्वादिना सन्तप्ततापहारित्वादिविशिष्टम्,

..........................................................पदपरामर्शः..........................................................

नैनं कृताकृते तपति इति श्रुतेः। अत एवोच्यते- तेन न केवलमाश्रितार्तिहरत्वमपितु सर्वकालसुखावहत्वं सूच्यते। अत उक्तम्- राघवेन्द्रतरुच्छाया नातिशीता न घर्मदा नरकाङ्गारशमनी सा किमर्थं न सेव्यते अतश्च तारयाप्यभाणि वाल्मीकीये- निवासवृक्षः साधूनामापन्नानां परा गतिरिति। यद्वा पूर्वोक्तौदार्यस्यातिशयत्वप्रदर्शने तात्पर्यादपुनरुक्तिः। अथवोभाभ्यां विशेषणाभ्यामाश्रितसंरक्षकत्वमेवोच्यते। इष्ट-प्राप्त्यनिष्टपरिहारो हि रक्षापदार्थस्तेन पूर्वेण मनोऽभिलषितप्रदत्वकथनेन इष्ट-प्रापकत्वमपरेण च तापहारित्वाद्यवबोधनादनिष्टनिवर्तकत्वं दर्शितम्।

विशेषणविधया मुखशोभां वर्णयति- **स्मेरमुखाम्बुजमिति।** स्मेरशब्द ईषद्विकासार्थकः, स्मेरं स्मयमानमीषद्धास्ययुक्तं मुखमम्बुजमिव यस्य, तम्। अम्बुजवन्मुखस्य चारुत्वोक्तेराश्रितदर्शनोल्लसितत्वसौम्यत्वादिद्योतनेन भक्तसम्प्राप्ति-जनितोत्फुल्लत्वातिशयत्वं सूच्यते। दृष्टमात्रेणापि भक्तचित्तप्रसादकत्वमुच्यते, यथोक्तं भागवते- हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारमिति। एतेन स्मितपूर्वाभिभाषित्वादिकं वाल्मीक्युक्तं परामृश्यते। सर्वविधकैङ्कर्योद्देश्यस्य परम-प्राप्यस्य दिव्यमङ्गलविग्रहशोभातिशयमनुसन्धत्ते- **शुचिमहानीलाश्मकान्तिमिति।** शुचित्वमहत्त्वाभ्यां विशिष्टो यो नीलाश्मा नीलमणिस्तत्कान्तिरिव कान्तिर्यस्य, तम्। अमृतक्षालितमसृणितद्युत्या निरतिशयोज्ज्वलत्वमनेन सूच्यते। महद्विशेषणेन चाश्रिताश्रयणानुगुणवैपुल्यञ्च नीलमण्युपमानेन विग्रहस्यानवद्यश्यामललावण्यमुच्यते।, यच्चैवमालक्ष्यते-

"भूयिष्ठं तेज एवाद्भिर्बहलाभिर्मृदूकृतम्
चक्षुरानन्दजनकं लावण्यमिह कथ्यते"

अत्रैव श्रीभगवद्विग्रहशोभावर्णनेन "आदित्यवर्णं तमसः परस्तादिति श्रुत्योक्तं दिव्यत्वं परामृश्यते। बभाण चेममर्थमादिकविः- स्निग्धवर्णः प्रतापवानिति। अत्र श्रीमदाचार्यचरणोपात्तेन भगवतः श्रीरामस्य गुणाष्टकेनौपनिषदमात्मनो गुणाष्टकं संलक्ष्यते। तद्यथा- एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः (छा. 8/1/5) अत्रापि महानीलाश्मनश्शुचित्व-विशेषणदानेनापहतपाप्मत्वम्, महीजाताक्षिकोणेक्षितमित्यनेन स्पृहणीयनित्यकैशोर्य-सूचनाद्विजरत्वम्, नित्यश्रीकार्थकश्रीमत्पदेन नित्यसौभाग्यबोधनाद् विमृत्युरिति,स्मेरमुखा-

........................................................पदपरामर्शः........................................................

म्बुजपदेन विशोकत्वम्, अनश्नन् इत्यादिश्रुतिवेद्यतया विजिघत्सत्वम्, रत्नाकरोपमानेनापिपासुत्वम् चतुर्वर्गप्रदत्ववर्णनात्सत्यकामत्वम्, स्वर्द्रुमत्वाख्यानेन सत्यसङ्कल्पत्वञ्च सूच्यते। ग्रन्थमङ्गले प्रयुक्तदशपदानि ग्रन्थस्य दशप्रमेयप्रतिपादनपरत्वं सूचयन्ति। तत्राद्यपद्यस्यादौ स्वसम्प्रदायाभिधानसूचकं सर्वातिशयिमङ्गलवाचकं श्रीतिशुभाक्षरं प्रयुज्यानुक्त्वापि तत्र कञ्चित्स्वाभिनिवेशमनुग्रहैकस्वभावायां श्रीसीतायां दर्शयन्त्याचार्याः। भजनीयस्य च नवभिः पदैर्बोधनात्परिपूर्णतां द्योतयन्ति। मङ्गलप्राशस्त्यार्थमिहानुबन्धचतुष्टयमपि दर्शितम्- तस्य च प्रवृत्तिजनकज्ञानप्रयोजकज्ञानविषयत्वात्। श्रीमन्तं रामं भज इत्यनेन शुभगुणैकाश्रयसर्वेश्वररामविषयकप्रीतिर्भक्तिर्विषयः, साध्योपायतया तस्या एव प्रधानप्रमेयत्वात्। भक्ताशेषमनोरथप्रदत्वकथनान्मुमुक्षुभक्तानामधिकारित्वम्, यद्वा स्वर्द्रुमोपमानेन तस्य पात्रापात्रविचारं विनेष्टप्रापकतया भगवदाश्रयणोक्त्या तद्वृत्तद्वोधकग्रन्थेऽपि सर्वाधिकारः सूचितः। निर्दोषगुणरत्नाकरत्वकथनाच्छ्रुतिवेद्यमित्यादिना च निर्विशेषत्वावेद्यत्वादिपरपक्षनिराकरणेन वैष्णवमतबोधनं प्रयोजनम्, प्रतिपाद्यप्रतिपादकरूपः सम्बन्धः प्रथित एवेति।

अविच्छिन्नभगवत्स्मृतिसन्तानजन्या या परमप्रीतिः सा भक्तिः, महनीयविषया प्रीतिर्भक्तिरित्युक्तेः, तादृशप्रीत्यनुकूलपरिचरणात्मकव्यापारो भज्- धात्वर्थः। श्रीरामं भजे पूजनवन्दनादिव्यापारेण श्रीरामं प्रीणयामीत्यर्थः। मन्निष्ठवन्दनादिव्यापारप्रयोज्यप्रीतिरूपफलाश्रयत्वाच्छ्रीरामः कर्म। श्रीरामनिष्ठप्रीत्यनुकूलो मदेकनिष्ठो वर्तमानकालिको व्यापार इति बोधः, भावप्रधानमाख्यातमिति निरुक्तकारयास्कवचनात्। पद्येऽस्मिन्नेकस्मिन् राम उपमेये रत्नाकरस्वर्द्रुमयोर्भेदभाजोरुपमानयोरारोपाद् भेदभाक्परम्परितरूपकमिति ज्ञेयम्। पद्यगतशुचिमहानीलाश्मकान्तिमिति रामविशेषणीभूते पदे शुचिश्च महांश्च नीलश्च योऽश्मा, तस्य कान्तिरिव कान्तिर्यस्येति वाचकलुप्तोपमापि समग्रप्रधानीभूते रूपकालङ्कारे गौणतामुपयाति।

**ऐश्वर्यं यदपाङ्गसंश्रयमिदं भोग्यं दिगीशैर्जग-**
**च्चित्रं चाखिलमद्भुतं शुभगुणा वात्सल्यसीमा च या।**
**विद्युत्पुञ्जसमानकान्तिरमितक्षान्तिः सुपद्मेक्षणा**
**दत्तान्नोऽखिलसम्पदो जनकजा रामप्रिया साऽनिशम्।।2।।**

**पदपरामर्शः**

*पूर्वश्लोकस्य सामान्यतो वाक्यार्थबोधेऽपि तदाद्यपदाद्यश्रीपदार्थविशेषं कल्याणाय तदुपादेयताञ्चाविष्कर्तुम्, पूर्वपद्ये श्रीमन्तमित्युपक्रम्य महीजाताक्षि-कोणेक्षितमित्यनेन भगवतो विग्रहस्य यद्युक्तियत्प्रीतिसमीक्षणप्रयुक्तं वैभवमुक्तम्, प्रत्यासत्त्या स्मृतायास्तस्याः स्वरूपवैभववर्णनस्यानन्तरवक्तव्यत्वं युज्यते। किञ्च पूर्वोक्तस्य भगवतः प्राप्तौ पुरुषकारत्वेनाभिन्नतया च विलसन्त्याश्च तस्याः सर्वसमाश्रयनीयताज्ञापनाय तत्कटाक्षनिक्षेपस्य लोकोत्तरवैभवं प्रकाशयितुञ्च प्रसादसम्पत्प्रार्थनामुखेन पद्यमवतारयति-* **ऐश्वर्यमिति।** *भगवान् वाल्मीकिरपि-सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत्, सीतामुवाचातियशा राघवञ्च महाव्रतम् इत्यादिना श्रीसमक्षं विहितस्य तदनुग्रहपूर्वकं कृतस्य श्रीरामं प्रति स्वप्रयोजनसाधकसंवादविशेषस्य वर्णनं विधत्ते। यद्वा श्रीमहीजातेतिपदाभ्यां सञ्जातोत्कण्ठाविशेषशमनस्य, श्रीमदादिविशेषणविशिष्टस्य भगवतः श्रीमत्तादिकं किन्निबन्धनमित्युन्नयनस्य चौचित्यादुच्यते-* **सा तत्प्रिया जनकजेति।** *ययोपश्लिष्टो भगवान् नित्यं शोभते, सर्वथा परिपूर्णोऽपि भगवान् यां प्रीत्यतिरेकादवेक्षते, यया च सोऽपि निर्निमेषमुपोषिताभ्यामिव नयनकमलाभ्यां पेपीयते, लीलादिषु यदनन्वितं भगवतो न किमपीति सविशेषमभिदधाति-* **ऐश्वर्यमिति।**

**संवित्करः**

इन्द्रादि दिक्पालों द्वारा भोग्य सम्पूर्ण अद्भुत ऐश्वर्य एवं निखिल ब्रह्माण्डों का आश्चर्यमय वैभव जिनकी कृपाकटाक्ष निक्षेप के अधीन रहता है। जो सर्वमङ्गलगुणों से परिपूर्ण हैं, जो वात्सल्य की तो चरम सीमां ही हैं, जिनकी दिव्य अङ्गकान्ति विद्युत्पुञ्जके समान है, जो अपरिमित क्षमा धारण करती हैं, जिनके सुन्दर कमल के समान चारुनयन हैं, वे परमप्रभु श्रीराम की प्राणवल्लभा श्रीजानकीजी हमें सर्वदा भक्तिप्रीतिरूपी दिव्य सम्पदा प्रदान करें।

***टिप्पणी-*** *पूर्वश्लोक के प्रथम पद "श्रीमन्तम्" के द्वारा भगवान् श्रीराम की नित्यश्रीमत्ता का कथन हुआ है। वहाँ श्रीशब्द से किसका निर्देश है? उनका स्वरूप तथा वैभव क्या है? सर्वार्थसिद्धि में उनकी क्या उपयोगिता है? इन जिज्ञासाओं के समाधान हेतु प्रकृतश्लोक में श्रीसीतातत्त्व का सम्पत्प्रार्थनामुखेन निरूपण*

.....................................................पदपरामर्शः......................................................

गोस्वामिपादेनापि या रामवल्लभेत्युक्ता। वाल्मीकिरपि- अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम्। तेनेयं स च धर्मात्मा मुहूर्तमपि जीवतीत्युक्त्वा अनन्यप्रियत्वमुवाच। एतेन देवजुष्टामिति श्रीसूक्तार्थः प्रकाशितः, अत्र हि देवशब्दो भगवत्परः, देवेन भगवता प्रीतिविषयीकृतामिति तदाशयः। यतश्चात्र दद्यान्नोऽखिलसम्पदमित्यनेन सर्वसम्पत्प्रार्थनायां स्तुतिवाक्यं पर्यवसितमत औदार्यवर्णनेन स्तोतव्यगतप्रकर्षं निरूपयति- **ऐश्वर्यं यदपाङ्गसंश्रयमिति।** दिगीशैः पूर्वादिदिशामीशैरिन्द्रादिभिर्भोग्यं सुखदुःखान्यतरसाक्षात्कारविषयः शब्दादिः तदुपस्थापकं भोगोपकरणं वा ऐश्वर्यं देवलोकस्य सामान्यलोकादतिशयितभोगः न केवलं तदेवापितु इदञ्च पुरोदृश्यमानतयोपस्थितं सन्निकृष्टमापामरवेद्यमानं, भोगभोगोपकरणवैचित्र्याददद्भुतं सम्पूर्णं जगदपि यदपाङ्गमेव संश्रित्यावतिष्ठते। अत्र दिगीशैर्भोग्यमैश्वर्यम्, इदञ्चाखिलमद्भुतं चित्रञ्च जगद् यदपाङ्गसंश्रयमित्यन्वयः, यद्वाखिलमद्भुतमिति पदद्वयम् ऐश्वर्यं विशिनष्टि- **चित्रमिति** भोग्यं वा। अत्र स्वरूपगुणसंस्थानादीनां वैचित्र्याददद्भुतत्वम्, कर्मभेदप्रयुक्तप्रकृतिपरिणामविशेषतया चित्रत्वम्, सततमपूर्वतयानुभाव्यत्वेन प्रकृति-

---

*किया गया है। श्रीवैष्णवीय आगम तथा तदनुरूप मान्यता के अनुसार श्रीसीताजी सम्प्रदाय की प्रवर्तिका आचार्या हैं। अतः इस अनादि वैदिक सम्प्रदाय को श्रीसम्प्रदाय कहा जाता है। श्रीसूक्त इत्यादि में श्रीशब्द से श्रीसीता जी का ही निर्देश है। वैष्णवाचार्य मोक्षसिद्धि में इनके अनिवार्य पुरुषकारत्व का प्रतिपादन करते हैं। भगवान् की स्वरूपशक्तिरूप होने के कारण अभिन्न होने पर भी यह जीवात्मा एवं परमात्मा के मध्य घटक बनकर परमप्रभु के द्वारा जीवों का उद्धार करवाती हैं। इनके पुरुषकारत्व (घटकत्व) अर्थात् अगुआई सिफारिश के विना जीव का उद्धार असंभव है। भगवत्पादने इनके वैभव का प्रतिपादन करते हुए लिखा है कि यह परम आश्चर्यमय सम्पूर्ण जगत् तथा इन्दादिदिक्पालों के द्वारा भोग्य सम्पूर्ण ऐश्वर्य जिनकी कृपा-कटाक्ष पर आश्रित है जिनमें सभी शुभ गुण परिपूर्णतः विद्यमान हैं, जो वात्सल्य की तो चरम सीमा ही हैं। जिनके दिव्य श्री अङ्गों की उज्ज्वल कान्ति विद्युतुपुञ्ज के समान है तथा जिनमें अपरिमित क्षमाशीलता है। पूर्णविकसित कमल के समान जिनके सुन्दर एवं विस्फारित लोचन हैं, ऐसी श्रीरामचन्द्रजी की प्रिया जनकनन्दिनी श्रीसीताजी हमें सर्वदा धर्म भक्ति भगवत्प्रीति रूपी दिव्यसम्पदा प्रदान करें।*

*पिता का हितपरत्व तथा माता का प्रियपरत्व सर्वानुभवसिद्ध है। साथ ही पिता की अपेक्षा मां स्वल्पायास से ही शीघ्र प्रसादनीय होती है जिसे महर्षि वाल्मीकि भी प्रणिपातप्रसन्ना शब्द से सूचित करते हैं। अतः बालक पिता के समर्थ होने पर भी अभीष्ट वस्तु की याचना मां से ही करता है। जो वस्तु जिसके पास हो, उसी से उसकी याचना उचित है। कहा जाता है कि विपद्विस्मरणं विष्णोः सम्पन्नारायणस्मृतिः अतः श्रीरामप्रेम ही वैष्णवों का अभीष्ट परम धन है, महासम्पत् है। रामप्रिया रामपदारविन्दप्रीति की साक्षाद् मूर्ति हैं, वह रामपदप्रीति प्रदान करने के लिये अधिकृत है। जब देवताओं का वैभव भी उनके कृपाकटाक्षनिक्षेप से प्राप्त हुआ है और वे स्वयं स्वभाव से ही करुणमयी हैं। उनके प्रति की गई प्रार्थना की सफलता असन्दिग्ध है। इसी भावना से यहाँ विदेहवंशवैजयन्ती जगदम्बा श्रीरामवल्लभाजू से भक्तिसम्पदा की प्रार्थना की गई है।*

........................................................पदपरामर्शः........................................................

परिणामविशेषत्वेऽप्याश्चर्यमयत्वम्। इदं सर्वं यत्कटाक्षलीलयैव भवतीत्यन्यै- र्मनसाप्यचिन्त्यं यस्याः अकिञ्चित्करमिति भावः। लोकेशेशविभूतीनां कारणं यन्निरीक्षणमित्युक्तेः। एतेनेन्द्रादिवैभवानामन्वयव्यतिरेकाभ्यां तत्कटाक्षनिक्षेपाधीनत्वं सूच्यते। वस्तुतस्तु तस्याः सादरपूर्णनिर्वर्णननित्यपात्रं भगवानेव, ब्रह्मादयस्तु नान्तरीयककटाक्षशीकररक्षणलक्ष्यम्, युक्तमुच्यते श्रीगुणरत्नकोशे- यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्यं मुरारेरिति। न केवलं तावदेव, स्थावरजङ्गमात्मकं जगदपि भगवान् यत्कटाक्षतारतम्यं विलोक्य तारतम्येन सृजति। नित्यविभूतावपि सृष्ट्यादिकारणभूतस्य भगवतो रामस्य तादृशकारणतां स्वापाङ्गैः प्रसाधयन्ती रामवल्लभा तस्य परत्वस्योत्तम्भिका भवति। अङ्गीकारसूचिकया नयनलीलया स्वानुमोदनेन चेयं तादृशविधानव्यसनं सफलयति, अन्यथा जगत्सृष्ट्यादिलीला विरसा स्यात्। तदुक्तं- यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्, क्रीडेयं खलु नान्यथास्य रसदा स्यादैकरस्यात्तयेति। यथा चेयं वाल्मीकिपदधोरणी-

स्मितविकसितगण्डं क्रीडविभ्रान्तनेत्रं मुखमवनमयन्ती स्पष्टमाचष्ट सीतेति।

अत्र केचनाहुः- इयं भगवतो रामस्य सर्वविधायकस्याधिष्ठेया प्रकृतिः सत्ताहन्ताप्रभाशक्तिविद्येच्छाभोक्तृतोत्यादिरूपेण वर्तते शास्त्रेषु तत्र तत्र तथाव्यपदेशादिति तन्न आचार्यपादेन रामप्रियेत्युक्त्या चेतनत्वव्यपदेशात्तन्निरासात्। तादृशोक्त्या तदितरसर्वशेषित्वमुच्यते। **रामप्रियेति** कथनेन सर्वेश्वरोऽपि भगवान् रामः प्रीतिपारवश्यात्कदापि यदभिमतं नातिक्राम्यति, यत्प्रसादे सर्वेश्वरादपि भयं नास्तीति द्योत्यते। भगवता नित्ययोगान्नित्यापि सावतारदशायां लीलाविभूतौ **जनकजेत्याख्यायते**, अतिपवित्रेण निजचरित्रेण लोकस्य पावनी तद्वंशस्यालङ्कारभूतेति लभ्यते। मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यतीति प्रसिद्धोक्त्या ख्यातविरक्तेस्तादृशब्रह्मनिष्ठ- शुकाद्युपदेष्टृत्वेन प्रथितज्ञानस्य कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिना भगवता वासुदेवेन प्राथम्येन संस्मृतस्य च राजर्षिजनकस्यापत्यतया सत्कुलप्रसूतत्वरूपं महाभिजात्यं सूच्यते। यच्च निपुणं प्रत्यभिज्ञापयति वाल्मीकिः-

इयं सा धर्मशीलस्य जनकस्य महात्मनः।
सुता मैथिलराजस्य सीता भर्तृदृढव्रता।। इति।

पदपरामर्शः

तत्तपःसाधनजन्यं सुफलमेव सेति लभ्यते। यद्वा जनयतीति जा, जनीप्रादुर्भावे इत्यतो डः, जनकानामपि जा **जनकजेति**। उत्पत्त्यादिक्रियाजनकानां ब्रह्मादीनामपि जनिका उत्पादिका प्रयोजिकेत्यर्थः, ब्रह्मादीनां नियम्यतया, प्रयोज्यकर्तृत्वमस्याश्च नियामकत्वेन प्रयोजककर्तृत्वं लब्धं भवति। तदनुगुणसामर्थ्यप्रदानेन तदन्तर्यामितया नियोजिकेति भावः। **सेति** सर्वलोकप्रसिद्धिं सूचयति। वृद्धिस्थपरामर्शकसर्वनामाश्रयणेन "स्वादु स्वादु पदे पदे" इत्युक्तरीत्या प्रतिक्षणं नवनवायमानापरिमेय-दिव्यगुणास्वादनपरसहृदयैकानुभाव्यलक्षणं वैलक्षण्यं सूचितं भवति। अत एव शुभाः कल्याणमया असंख्येयाः सौशील्यपातिव्रत्यमाधुर्यसौकुमार्यौदार्यादिगुणाः सन्ति यस्याः सा **शुभगुणेति** विशिष्यते। गुण्यते आवर्त्यते पुनः पुनराश्रितैरनुसन्धीयत इति गुणः सौशील्यादिः। अत्रादौ स्वरूपगुणाः शुभगुणेति वात्सल्यसीमेत्यमितक्षान्तिरिति पदैरुच्यन्ते तदनु विद्युत्पञ्जसमानकान्तिरिति विग्रहगुणः कथ्यत इति पृथङ्निर्देशः। यथा च वाल्मीकीयेऽपि- गुणाद्रूपगुणाच्चापि प्रीतिभूयोऽभिवर्धत इत्युक्तम्। वस्तुतो यदवलोकनात्क्षुद्राणामपि गुणसिद्धिस्तस्या भर्तृशुश्रूषादिशुभगुणशालित्वे कथं कथ्यताम्। भगवतो यथा सौशील्यं निषादादिषु तथास्यास्त्रिजटादिषु प्रथितमेव। सम्प्रत्याश्रितसङ्ग्रहणसंरक्षणयोर्विशेषत उपयुक्तगुणो निर्दिश्यते- **वात्सल्यसीमेति**। वात्सल्यं दोषतिरस्कारिणी प्रीतिः, तस्य सीमा चरमावधिः निरवधिककारुण्येति भावः। निरवधिकत्वं च स्वापेक्षयोत्कर्षावधिराहित्यम्। यथा वाल्मीकीये भगवान् रिपूणामपि वत्सलः प्रोक्तस्तथेयन्तु वात्सल्यस्य सीमैव। अखिलजन्तून् प्रति मातृत्वाद्धितचिन्तारहितेष्वहितचिन्तकेष्वपि च तद्वात्सल्यम्, दुःसहनिरन्तरापराधे दाषैकनिधौ रावणेऽपि सोन्मादपुत्र इव जननीत्वेन जातवात्सल्या प्रसादयस्व त्वं चैनमित्यादिना तद्भ्रमप्रशमने प्रयतत इत्यादि कथाशतं परामृश्यते।

नित्यनिरवद्यस्य श्रीविग्रहस्य शोभां वर्णनद्वारा विशिनष्टि- **विद्युत्पुञ्जसमान-कान्तिरिति विद्युतस्तडितः पुञ्जेन समुदायेन समाना** सदृशी कान्तिर्दीप्तिर्यस्या सा। एतेन हिरण्यवर्णामित्यादिश्रीसूक्तोक्तार्थः सूच्यते। अमितापरिमया क्षान्तिः क्षमा यस्याः **सामितक्षान्तिः**। अव्यवहितपदस्थापनेन यथास्या भास्वदङ्गकान्तेः मातुमशक्यता तथा तदनुरूपमेवात्मगुणस्य क्षमाया अप्यमेयतेति भावः। न ह्यशक्तः क्षमां कुरुत इति पूर्वमैश्वर्यमुक्त्वा तदनु क्षमाशीलताप्रतिपादनं युज्यते। अनुग्रहैकस्वभावतया कदाचिद-

.................................................पदपरामर्शः.................................................

प्यत्यन्तापकारिष्वपि निग्रहरुचिर्न सम्भवतीति सापराधैरप्याश्रयितुं शक्येति लभ्यते। भगवांस्तु क्षमया पृथिवीसम इति वाल्मीकिनोक्तः किन्त्वियन्तु पृथिव्याः साक्षादपत्यभूतेति ततोऽप्यतिशय्य क्षमाशीलेति। शीताशयोऽपि भगवानविच्छिन्न-महापराधान् जीवान् प्रति कदान्निग्रहाभिमुखो भवति किन्तु कः कुप्येद्वानरोत्तमेति वदन्त्याः निग्रहभावलेशोऽपि न सम्भवति। इयन्तु क्षमापनयोग्यैरालोकालापादिभिर्भगवन्तं प्रसाद्य स्वजनयति। स्वविषयासह्यापचारकर्त्तारं जयन्तमपि भगवत्पादयोः संयोज्य क्षमापयति न कश्चिन्नापराध्यतीति तयोक्तेः। रावणादिवधापरिज्ञाने-ऽविरतापराधराक्षसीरपि हनूमन्तं चित्रवधान्निवार्य रक्षितवतीति क्षमाविशेषानुसन्धायक-वृत्तान्तशतं स्मारयत्य**मितक्षान्तिरि**त्यनेन। यदपाङ्गाश्रयं जगत्तदीक्षणसौष्ठवमभिधत्ते **सुपद्मेक्षणेति**। विशेषणेन नूतनत्वविकसितत्वादिगुणमहितं यत्पद्मं तद्वदीक्षणे लोचने यस्याः सा। निसर्गचारुत्वेऽपि सुपद्मवत् ईक्षणयोश्चारुत्वमाश्रितदर्शनप्रीतिविकासितत्वेन।

यच्च यस्य भवति स तद् दातुं प्रभवतीति रामप्रियैव रामप्रीतिं दातुमर्हति रामप्रीतिरेवाखिलसम्पद्, फलरूपतया तयैव कृतार्थता, भक्तिं लब्धवतः साधो किमन्यदवशिष्यत इति भागवतोक्तेः। अखिलसम्पत् सर्वस्वं भवति स्वशब्दस्य सम्पद्वाचकत्वात्। रामप्रियाया अखिलसम्पत्सर्वस्वं रामभक्तिः, भर्तुर्भक्तिं पुरस्कृत्येति जगदम्बोक्तेः। यद्वा सम्पद्भगवत्स्मृतिः, विपद्विस्मरणं विष्णोः सम्पन्नारायणस्मृतिरिति प्रसिद्धेः। भगवत्स्मृतावखिलत्वं नाम विजातीयस्मृतिशून्यतारूपमविच्छिन्नत्वम्। यद्यप्यभीष्टदान उभयोः समानाभिप्रायत्वम् तथापि प्रीतोऽपि पिता युक्तमेव ददाति हितपरतया पितुर्विमृश्यकारित्वदर्शनात्, मातुश्च प्रियपरत्वात् तदपेक्षयाभिमतदान औदार्याधिक्यं लोकानुभवसिद्धमतो याच्ञया मोघत्वासम्भावनया स्वाभीष्टं पराम्बामेव याचितुं युक्तमिति तामेव याचते- **दद्यान्नोऽखिलसम्पदं जनकजेति।** यथा पूर्वपद्ये भगवतो विशेषणाष्टकन्तथात्रापि श्रियो विशेषणाष्टकोक्त्योभयोरेश्वर्यतारतम्यं निरस्यते, शेषित्वस्योभयनिष्ठत्वात्। उभयोरपि ज्ञानानन्दस्वरूपत्वं जगदुत्पादकत्व-शरण्यत्व-प्राप्यत्वादि च समानम्, त्वं यादृशोऽसि कमलामपि तादृशीं ते दारान् वदन्ति युवयोर्न तु भेदगन्ध इत्युक्तेः। अत्रायमभिसन्धिः- यथा कर्मकाण्डे महेन्द्रदेवतात्वे नेन्द्रो देवता किन्तु महत्वविशिष्टेन्द्रो देवता तथैव श्रीविशिष्टो भगवान् ब्रह्म शेषी वा। पत्युः पत्न्या अपीति लोकात् उभयाधिष्ठानञ्चैकं शेषित्वम् अविभागस्मृतेः। पूर्वमीमांसायां-

पदपरामर्शः

षष्ठाध्याये लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायन इति सूत्रे यजेतेत्यत्रैकत्वेऽपि स्वत्वस्योभयनिष्ठत्वादुभाभ्यां द्रव्यत्यागस्य सम्पाद्यत्वर्णनं लभ्यते, किञ्चाग्नीषोमीययाग उभयोरप्येकदेवतात्वं यथा तथा श्रीश्रीमतोर्भगवतोरेकं शेषित्वमिति भावः। पद्येऽस्मिन् विद्युत्पुञ्जसमानकान्तिरित्यत्र विद्युत्पुञ्जसमाना कान्तिरिति आर्थी उपमा, अपि च सुपद्मेक्षणेत्यत्र सुपद्मे इव सुन्दरे ईक्षणे यस्या इति विग्रहाद् धर्मवाचकलुप्तोपमा स्पष्टा। आद्यपद्यद्वये शार्दूलविक्रीडितं छन्दः। स्थाने चेदं श्रीश्रीमतोर्भगवतोः शार्दूलवदप्रतिहतैश्वर्यवर्णने। भगवच्छस्त्रास्त्रसङ्घस्य तु माल्यवत् शोभाकरत्वसूचनाय तन्निरूपणे स्रग्धराच्छन्दोऽनुगुणतया प्रयुक्तम्।

**प्रत्यूहव्यूहभङ्गं विदधदुरुबलश्शक्तिमान् सर्वकारी**
**भूरिश्रेयःप्रतापो मुनिवरनिकरैः स्तूयमानो विमानः।**
**रक्षोदैत्यादिनाशी क्षुभितजलनिधिर्लोकजिल्लोकमान्यो**
**धन्यो नो मङ्गलौघं सपदि सुकुरुताद्रामशस्त्रास्त्रसङ्घः॥3॥**

पदपरामर्शः

पूर्वोक्तयोर्भगवतो महानीलमणित्वेन भगवत्याश्च विद्युत्पुञ्जकमनीयतया वर्णनादुभयोर्नित्ययोगाद् विद्युल्लसितेन्द्रचापाभिराममेघचारुतां संस्मृत्य प्रत्यासत्त्या सर्वाभिगमनीयताप्रयोजकं सङ्कल्पानुगुणसाधुपरित्राणदुष्टनियमनार्थमहावीरोचितविग्रहा-भरण दिव्यायुधोपसेव्यत्वं सूचयितुं परिकरभावेनावस्थितमचिन्त्यप्रभावं दिव्यशस्त्रास्त्र-सङ्घं विघ्नध्वंसपूर्वकं मङ्गलं प्रार्थयते- **प्रत्यूहव्यूहभङ्गमिति**। वस्तुतो मङ्गलानां मङ्गलन्तु भगवानेव, तदर्थभक्तेरप्यव्यवहितोपायतया च मङ्गलत्वम्, तादर्थ्यात्ताच्छब्द्यम्। तादृशध्यानवेदनादिशब्दवाच्याया भक्तेः सत्त्वविवृद्धिसाध्यतया तद्विरोधिपापान्येव प्रत्यूहभूतानि, अतस्तद्व्यूहभञ्जनस्य सुदृढमूलसंस्काराणां पापानां निरसनस्य

संवित्करः

जो समस्तविघ्नों की व्यूहरचना के भञ्जक एवं अपरिमितबल से सम्पन्न हैं, प्रबलशक्ति से युक्त, सर्वविध कार्यसम्पादन में समर्थ तथा कल्याणमय प्रचण्ड प्रताप वाले हैं। श्रेष्ठमुनिजनों द्वारा संस्तुत तथा अभिमानशून्य हैं। जो राक्षसदैत्यादि को नष्ट करने वाले, एवं अगाध समुद्र को भी क्षुब्ध करे देने वाले हैं। जो सर्वलोकविजेता एवं सर्वलोकसमादृत हैं। भगवान् श्रीरामके उन धनुष बाण खड्गादि दिव्य आयुधों का समूह हमारा शीघ्र परम मङ्गल करे।

..........................................................पदपरामर्शः..........................................................

सत्त्ववृद्धियथावदात्मज्ञानक्रमेण मङ्गलमयभक्तिं प्रति हेतुता सूचिता। सर्वाभीष्टमाङ्गल्यसम्पादनाय तत्प्रतिबन्धकीभूतपापानां निरासस्यावश्यकतया सर्वादौ तमेव विशेषणविधया कामयते। लोकमान्यत्वादिविशिष्टो रामशस्त्रास्त्रसङ्घो नः सपदि मङ्गलौघं सुकुरुतादिति वाक्ययोजना। रामस्य त्रिलोकीरक्षणविलक्षणस्य शस्त्राणां बाणखड्गादीनाम् अस्त्राणां ब्रह्मास्त्रादीनां निकरस्तत्पादप्रीतिमीहमानानान्तदनुगुणं प्रयतमानाना पुण्यतारतम्येनानेकभेदभिन्नानां सपरिकराणामस्माकं मङ्गलानां ततिं तन्यात्। सर्वविधं कल्याणं विदध्यादिति भावः। **व्यूह**शब्दो यथा शत्रुसैन्येन रक्षार्थमभेद्यागम्यव्यूहरचना कृतापि दिव्यास्त्रेण भज्यते तथानेन गहनप्रविष्टदृढतरपापमयविघ्ननिकरोऽपि भज्यताम् इति ध्वन्यते। आद्यपद्ये **"भजे"** इत्येकवचनस्य द्वितीयपद्ये प्रकृतपद्ये च **"नः"** इति बहुवचनस्य प्रयोगात् मदेकसाध्यभजनजन्यमङ्गलफलमन्यैरपि लभ्यतामिति तथाविधमहात्मोचितमौदार्यं गम्यते। एतेनास्मदो द्वयोश्चेति पाणिनीयमनुशासनं व्यापारितमिति च सूच्यते। **रामशस्त्रास्त्रसङ्घ** इत्यत्र **रामेति** घुणाक्षरन्यायेनापि यत्प्रत्यासत्तिर्महनीयजनकाम्या भवति तादृशनित्यसहचरभावेन सम्बद्धानां तेषां काचिन्नित्यसायुज्यधन्यता व्यज्यते। अतो **धन्य** इति तद्विशेषणं सङ्गच्छते। **सङ्घ** इत्यनेन न केवलं मर्त्तामूर्त्तानामनेकविधत्वं तेषामपितु भगवत्सङ्कल्पानुसारं यथाकालमेकस्यानेकरूपतापतिं सूचयति। स्वरूपतोऽपि तेषामप्राकृतत्वाद्भगवद- नुरूपापरिमेयता सूचिता भवति। अत्र धर्मकालेन्द्रविष्णुशिवचक्राणि, वारुणाग्नेयपाशुपतनारायणवायव्यकौञ्चगारुडादीनि दिव्यास्त्राणि, दयितमोहनप्रस्वापनप्रशमन-वर्षणशोषणसन्तापनविलापनमादनादि-गान्धर्वमानवपैशाचसौरत्वाष्ट्रप्रभृतीनि रामायणोक्तानि सङ्घशब्देनोच्यन्तो। एतेन **सर्वकारीति** विशेषणार्थ उच्यते। सर्वेषामायुधानां सर्वायुधकर्मकरणशक्तत्वं संसूच्याचिन्त्यशक्तित्वकथनं युज्यते, कुठारटङ्ककुद्दालादिकार्यशालशैलवसुधातलभेदना-दिकं तदेकबाणसम्पाद्यमिति रामायणे वर्णितम्-

बिभेद च पुनस्तालान् सप्तैकेन महेषुणा।
गिरिं रसातलञ्च जायन् प्रत्ययं तदा।
निष्पत्य च पुनस्तूर्णं तमेव प्रविवेश ह॥

शत्रुगतवीर्यबलदर्पोत्सेकानां समूलोच्छेदनसामर्थ्यन्तु साक्षात्पराम्बयैवोक्तम्-

स ते वीर्यं बलं दर्पमुत्सेकञ्च तथाविधम्।
अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे॥

..........................................................पदपरामर्शः..........................................................

तेषामन्यतमेनापि प्रलयान्तसर्वकार्यकरणं संभवति किमुत सङ्घेन। किञ्च रामाणामभिरामाणां शस्त्रास्त्राणां **सङ्घ** इत्यर्थकरणादनभिमतकाठिन्याद्यभावेन निरतिशयसुखस्पर्शत्वहेमरत्नमुक्तादिमयत्वादि तेषां बोध्यते। यद्यपि शस्त्राणां विनाशहेतुतया ततो मङ्गलविधिकथनं न युज्यत इति न, तत्कृतस्य व्यापादनादेरपि मोक्षजनकतया तथात्वोपपत्तेः, भगवन्मयानां कल्याणरूपत्वात्। तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम्। रामबाणासनक्षिप्तमावहत्परमां गतिम्।। इति रामायणोक्तेः। शस्त्रास्त्राणां पौष्कल्यानुगुणं सम्पाद्यमङ्गलानामपि प्राचुर्यं वक्तुं प्रयुक्तौघशब्दः सर्वथानुगुण एव, तादृशसङ्घेन मङ्गलस्यैकांशेन सम्पादनस्याननुगुणत्वात्। रामशस्त्रास्त्रसङ्घ इत्यत्रेतरव्यावर्तकरामपदं दिव्यत्वेन प्रथितेभ्यः पाशुपतादिभ्योऽपि कश्चिद्विशेष एवेति सूचनाय। अत एव युद्धे विष्णुचक्रपरिक्षतोऽपि जीवन् रावणः पश्चाद्रामदिव्यास्त्रेण व्यापादित इति रामायणोक्तं सङ्गच्छते। आयुधं किञ्च रामस्येतिपृष्टया शूर्पणखयोक्तार्थः परामृश्यते–

शक्रचापनिभं चापं निकृष्य कनकाङ्गदम्।
दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान्।।
नाददानं शरान् घोरान् विमुञ्चन्तं महाबलम्।
न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे ।।
हन्यमानं तु तत्सैन्यं पश्यामि शरवृष्टिभिः।
इन्द्रेणेवोत्तमं सस्यमाहतं त्वश्मवृष्टिभिः।। इति

उरु प्रभूतं बलं वेगो यस्येति विग्रहात् यथा राघवनिर्मुक्तश्शरश्श्वसनविक्रम इत्याद्युक्तार्थः प्रकाश्यते, तेन भगवत्सङ्कल्पानुगुणस्वरूपसामर्थ्यगतिप्रवृत्तिमत्त्वसूचनेन श्रमप्रसङ्गरहितसर्वधारणसामर्थ्यं बोध्यते। अतिशयिता शक्तिरस्येति मतुपा शक्तिमान्, तेन स्वेतरसर्वनिर्वाहकत्वबोधनेन सहकार्यनपेक्षत्व- निर्भयप्रवेशपरनिराक-रणपर्यन्तव्यापारत्वाकम्पनीयत्वाप्रतिहतत्वादिकं सूच्यते। विस्मयावहवेगेन सह पञ्चास्यवद्भीषणत्वञ्च कथ्यते। सर्वं कर्त्तुं शीलं यस्येति रामेष्टकारित्वमुच्यते। एतेनापि भगवतोऽधृष्यत्वं गम्यते- यथोक्तं वाल्मीकिना-

शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि।।

.........................................................पदपरामर्शः.........................................................

भित्वा वेलां समुद्रस्य लोकानाप्लवयेद्विभुः।
वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः।।

**भूरिश्रेयः प्रतापः**, अनल्पप्रशस्ततरप्रतापवानित्यर्थः, यथोक्तं रामायणे

स सायको राघवबाहुचोदितो
दिशः स्वभासा दश सम्प्रकाशयन्।
विधूमवैश्वानरभीमदर्शनो
जगाम शक्राशनिभीमविक्रमः।।
को ब्रह्मदण्डप्रतिमप्रकाशान्
अर्चिष्मतः कालनिकाशरूपान्।
सहेत बाणान् यमदण्डकल्पान्
समक्षमुक्तान् युधि राघवेण।।।

एतादृशाद्‌भुतप्रतापत्वादेव मुनिवरैरगस्त्यविश्वामित्रादिभिस्तस्य स्तूयमानत्वम्- एतान् राम महाबाहो कामरूपान् महाबलान्, गृहाण परमोदारान् क्षिप्रमेव नृपात्मजेति विश्वामित्रोक्तेः।

इदं दिव्यं महच्चापं हेमवज्रविभूषितम्।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा।।
अमोघः सूर्यसकाशो ब्रह्मदत्तश्शरोत्तमः।
दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ।।

इत्याद्यगस्त्योक्तेश्च। तथाविधमुनिवरस्तूयमानत्वेऽपि चेतनत्वबोधकविमानेत्यनेन परिकरत्वेन भगवत्प्रभाववेतृत्त्वं सूच्यते। एतेनास्य कैङ्कर्यानुरूपगुणविशेषः प्रोच्यते- यथोक्तं- रामायणे तद्दिव्यास्त्रैः स्वयम्-

इमे स्म नरशार्दूल शाधि किं करवाम ते।
उपतस्थुर्महास्त्राणि सर्वाण्यस्त्राणि राघवम्।।
ऊचुश्च मुदिता रामं सर्वे प्राञ्जलयस्तदा।
इमे च परमोदार किङ्करास्तव राघव।
यद्यदिच्छसि भद्रं ते तत्सर्वं करवाम वै।।

पदपरामर्शः

तस्यास्त्रसङ्घस्य रक्षोदैत्यादिदलनव्यसनित्वं सूचयितुमुच्यते- **रक्षोदैत्यादिनाशीति।** क्षुभितो जलनिधिर्येनेति विग्रहः। यत्सम्पर्केण प्रदीप्तोऽप्यग्निः शाम्यति, तादृशजलस्य निधिमप्यक्षोभयदित्यक्षोभ्यक्षोभणादशक्यसम्पादनवर्णनात् कालानलप्रतिमोऽतिलोकप्रभावः सूच्यते। लोके शीताशयो जनो नाचिरं क्षुभ्यति, अयन्तु जलनिधिरित्यनेन नितान्तमक्षोभ्यत्वं द्योत्यते। **रक्षोदैत्यादिनाशीत्यनेन** दुष्टात्मनिग्रहः, क्षुभितजलनिधिरित्यनेन भगवत्कार्यप्रतिबन्धकीभूतप्रकृतिनिग्रहश्च सूच्यते। तद्यथा रामायणोक्तम्-

चापमानय सामित्रे शरांश्चाशीविषोपमान्।
समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः।।
शरनिर्दग्धतोयस्य परिशुष्कस्य सागर।
मया निहतसत्त्वस्य पांशुरत्पद्यते महान्।।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः।

लोक्यत इति लोकः, स्थावरजङ्गमात्मकं जगत्, तन्निग्रहसमर्थतयास्य लोकजित्त्वं प्रोच्यते। लोकं जितवानिति **लोकजित्।** न केवलमवतारदशायामपितु सर्वदैवं लोकान्तरेऽप्यप्रतिहतगतितया यथाभीष्टनिखिलाभिभवनस्याकुण्ठसामर्थ्यं सूच्यते। एतेन त्रिभुवनप्रथितप्रभावस्य जयन्तादिनिग्रहवृत्तान्तोऽनुसन्धीयते। यथोक्तं वाल्मीकीये-

नहि पश्यामि मर्त्येषु नासुरेषु सुरेषु च।
यस्तस्य वमतो बाणान् स्थातुमुत्सहतेऽग्रतः।।

रामं विरुध्य लोकान्तरं गतस्यापि न देवेन्द्रः सन्नपि पिताभवच्छरणम्-

स दीप्त इव कालाग्निर्जज्वालाभिमुखं द्विजम्।
त्राणकाण इमं लोकं सर्वञ्च विचचार ह।।
स पित्रापि परित्यक्तः सर्वैश्च परमर्षिभिः।
त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः।।

अनिष्टनिवारणेऽतिनैपुण्येन प्रत्यनीकभयावहतया च लोकाञ् जयति वशीकरोति, यथाकामस्फुरिताकारतया लोकेषु सर्वोत्कर्षेण वर्तत इत्यर्थः। नित्यसूरिभिः समाविष्टतया भगवत्परिकरभावेनावस्थितस्य लोकमान्यत्वं सुतरां युज्यते, यद्वा **लोकजिल्लोकमान्य** इत्येकं पदम् लोकजितामपि लोकेन समूहेनापि मान्यः पूजनीय इत्यर्थः। **धन्य** इति न केवलमस्य नित्यभगवदङ्गसङ्गप्रयुक्तं सौभाग्यमुच्यतेऽपितु

............................................................पदपरामर्शः............................................................

नित्ययुक्तत्वाद् भगवता सह सेव्यमानस्य मुनिजनदुर्लभा भक्तजनकाम्यातिशयमञ्जुल-भगवत्करकमलयोर्धारणसंस्पर्शनाकर्षणविमोक्षणग्रहणाव्यवहितपरिष्वङ्गविहरणादिजन्या काचिद् धन्यता बोध्यते।

यश्च समर्थः सन् सर्वविधसेवाकर्मणि प्रवर्तते, हितावहगुणप्राशस्त्यान्मुनि-जनसंस्तूयमानो भवति, तथापि विमानः सन् तिष्ठति, स एव लोकमान्यो भवति, सर्वलोकं वशीकरोति, सर्वविधं दुरितं क्लेशञ्चापनेतुं प्रभवति, असाध्यं संसाध्य लोकमङ्गलं करोतीति भगवन्तमाश्रित्यैवैवंविधा महद्गुणाः भवन्तीतिवस्तुविशेषो गम्यते।

**तत्त्वं किं किञ्च जप्यं परमिह विबुधैर्वैष्णवैर्ध्यानमिष्टम्**
**मुक्तेः किं साधनं सत्सुमतिमतिमतो धर्म एकोऽस्ति कश्च।**
**धर्माणां वैष्णवास्ते गुरुवर! कतिधा लक्षणं किञ्च तेषां**
**कालक्षेपः किमाप्यं कथमुरुशुभदं कुत्र कार्य्यो निवासः॥4॥**

............................................................पदपरामर्शः............................................................

आचार्यवान् पुरुषो वेद, यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः, तद्विज्ञानार्थं गुरुमेवाभिगच्छेदिति श्रुतिगणेन सकलानर्थभूताज्ञाननिवर्तनाय यथावस्थितज्ञानाप्तये च गुरूपसत्तिरादिश्यते, आचार्य-प्रसादस्य सर्वसिद्धिहेतुत्वात्। मुमुक्षुभ्यो हि यथावस्थितं तत्त्वज्ञानं भक्तियोगाधिकार-निर्वर्तकं भवतीति तादृशज्ञानस्य साध्यभक्तौ साधकत्वनिश्च- यात्तत्वजिज्ञासया श्रीसुरसुरानन्दाचार्यः स्वाचार्यं तत्त्वज्ञानमहानिधिप्रदातारं भगवन्तं श्रीरामानन्दाचार्यवर्यं ज्ञेयविष्रयाणामानन्त्येऽपि मुमुक्षुजनवेद्यं दशस्वेवान्तर्भावयन् पृच्छति- **तत्त्वं किमित्यादिना।** तत्र तत्त्वानामपि सन्मिथ्यारूपभेदस्यारोपितानारोपितभेदस्य च दर्शनान्तरे प्रसिद्ध्या सिद्धान्ते सर्वादौ तत्त्वशोधनमावश्यकमिति तदेव प्रथमं पृच्छति- **तत्त्वं**

------------------------------------------------संवित्करः------------------------------------------------

श्रीसुरसुरानन्दाचार्य ने अपने सद्गुरु स्वामीश्रीरामानन्दाचार्यजी से अत्यन्त विनम्रतापूर्वक पूछा कि भगवन्! तत्त्व क्या है? भगवदाश्रितों द्वारा जपने योग्य मन्त्र क्या है? वैष्णवों के अभिमत ध्यान का स्वरूप क्या है? मुक्ति का साधन क्या है? सद्बुद्धिसम्पन्न मनीषियों द्वारा आचरणीय सर्वश्रेष्ठ धर्म क्या है? वैष्णव कितने प्रकार के होते हैं? वैष्णवों का लक्षण क्या है? वैष्णवों को कालक्षेप कैसे करना चाहिये? वैष्णवों का कल्याणप्रद प्राप्य क्या है? एवं श्रीवैष्णवों को कहाँ निवास करना चाहिये? इन दस प्रश्नों का समाधान करने की कृपा करें।

..............................पदपरामर्शः..............................

***किमिति***। *अनारोपिताकारेण यथावस्थितबुद्धिरेव हि तत्त्वज्ञानम्। तत्त्वं प्रामाणिकं वस्तु। जिज्ञास्यविषयज्ञानसम्पत्तिं सूचयन् जिज्ञासासमाधय औचित्यनिर्वाहकसामर्थ्यानुगुण-सम्बन्धमुखेनाभिमुखीकरोति-* **गुरुवर** *इति। अज्ञान- लक्षणान्धकारनिरोधकेषु श्रेष्ठ इत्यर्थः।*

*तत्त्वं किमिति प्रथमः प्रश्नः। इह विबुधैः सुधीभिर्वैष्णवैर्विष्णुदेवताकैः परं सर्वोत्कृष्टं जप्यं मन्त्ररूपेणावर्तनीयं किम् इति द्वितीयः प्रश्नः। इष्टमाभीक्ष्ण्येनातितरामभीष्टं ध्यानं किमिति तृतीयः प्रश्नः। अविद्यानिवृत्तिपूर्वकनिरतिशयानन्दरूपायाः मुक्तेः सत् साधनं किमिति चतुर्थः प्रश्नः। धर्माणां मुख्यः प्रज्ञावतामभिमतो धर्म कः इति पञ्चमः प्रश्नः। वैष्णवाः कतिविधा भवन्तीति षष्ठः प्रश्नः। वैष्णवलक्षणं किमिति सप्तमः प्रश्नः। वैष्णवाणां कालक्षेपः कथं कार्यः इत्यष्टमः प्रश्नः। वैष्णवाणाम् उरुशुभदमाप्यं किमिति नवमः प्रश्नः। वैष्णवाणां कुत्र निवासः कार्य इति दशमः प्रश्नः। अत्र पञ्चमप्रश्ने धर्मविशेषणतयोपात्तस्य सत्सुमतिमतिमत इतिपदस्यैवं विग्रहः सुष्ठु मतिः सुमतिर्येषां ते सत्सुमतयः, तेषां मत्या मतोऽभिमतः पूजितः* ***सत्सुमतिमतिमतः*** *इति। मतौ सुष्ठुत्वन्तु ग्रहणधारणोहापोहार्थविज्ञानादिविशिष्टत्वेन।*

*एतेषां दशानां प्रश्नानां समाधिज्ञानस्य सर्ववेदसारभूतभक्त्युपकारित्वं क्रीडीकृतसकलश्रुतिविषयत्वञ्च बोध्यते। अत्र स्रग्धराच्छन्दः।*

**इत्थं पृष्टस्त्वया यः सकलहितकरः प्रश्नराशिर्गरिष्ठो**
**वेद्यः सर्वश्रुतीनां जगति सुरसुरानन्द सद्यो मया सः[1]।**
**प्राचीनाचार्य[2]वर्यान् यतिपतिसहितान् सादरं सम्प्रणम्य**
**सम्यक् शास्त्रानुसारं गुरुनिरत! समाधीयते[3] श्रूयतां तत्॥5॥**

..............................पदपरामर्शः..............................

तस्मै स विद्वानुपसन्नाय प्राह- इति श्रुत्या वत्सलेव धेनुराचार्यवर्यः कण्ठोक्त्या

------------------------------संवित्करः------------------------------

भगवत्पाद श्रीरामानन्दस्वामी बोले- हे सुरसुरानन्द! तुमने सर्वकल्याणकारी तथा वेदज्ञान द्वारा जानने योग्य जिन गौरवपूर्ण प्रश्नों को पूछा है, मैं अपने आचार्यचरण स्वामी श्रीराघवानन्दजी तथा उनके भी पूर्ववर्ती श्रीमद्बोधायनाचार्य आदि प्राचार्यों को प्रणाम कर शास्त्रवचनों का आश्रय लेकर उनका समुचित समाधान करता हूँ। समाहित चित्त से श्रवण करो।

---

[1] पा. भे.- सद्यः स तुभ्यम्।

[2] पा. भे.- प्राचार्याचार्य।

[3] पा. भे.- गुरुवरवचसा प्रोच्यते।

.......................................................पदपरामर्शः.......................................................

*वेदान्तरहस्यं विशदं सरलभाषया प्रकाशयितुमुपक्रमते– स्वपरस्वरूपावगतिपूर्वक–त्याज्योपादेयविभागार्थं प्रकृत्यात्मभ्रमस्वतन्त्रात्मभ्रमनिवृत्त्यर्थं वेदान्तोक्तभोक्तृभोग्य–नियन्तृक्रमेण यथायथमवबोधयत्याचार्यवर्यः–* ***इत्थं पृष्टस्त्वयेति।*** *भगवत्कृपयैव तत्वविषयिणी जिज्ञासा समुदेति। स्वेनोपदिदिक्षितानामेव पृष्टत्वेन तत्कृतप्रश्नानां समाधेयतया शिष्यमनुरागातिशयेन सनामग्राहं प्रोत्साहयति–* ***सुरसुरानन्द*** *इति। सुराणामपि सुरो भगवान् तत्रानन्दो यस्येति विग्रहेण नाम्नापि भगवदासक्ति–लक्षणयोग्यता,* ***गुरुनिरतेत्य****नेन यथोक्तकारित्वानुगतत्वादिसूचनेन शास्त्रश्रवणपात्रता च सूचिता। उभाभ्यां सञ्जातमोक्षाभिलाषत्वं शमदमादिसम्पच्च लभ्यते। स्वगतस्यार्थस्य चिरं प्रतिपिपादयिषितस्य जिज्ञासुलाभेन सहर्षं सम्बोधयति–* ***स सद्यो मया समाधीयते।*** *एतदर्थम् अपेक्षमाणं समवधानताविशेषमालक्ष्य श्लाघते–* ***गुरुनिरत*** *इति। त्वत्सदृश एव गुह्यमपि श्रोतुमर्हतीति भावः। सकलहितकरत्वात्प्रश्नमभिनन्दति, बुधजनैः श्रोत्रियैः समादृतत्वाच्छ्रुतीनामेतदर्थप्रकाशनपरत्वाच्च "सर्वश्रुतीनां वेद्यः" इति प्रश्नराशिं विशिनष्टि। गहनाशयगर्भत्वेन विमृश्य समाधेयत्वाद्दुर्विज्ञेयत्वाच्च प्रश्नराशेर्गरिष्ठत्वम् न तु प्रश्नवैपुल्यात्। "गरिष्ठोऽपि प्रश्नराशिर्मया सद्यः सम्यक् समाधीयते" इत्यनेन सर्वोत्पनिषत्सारस्य करामलकवदुपस्थितिर्बोध्यते, अत एव समाधास्यत इत्यनुक्त्वा* ***सद्यः समाधीयत*** *इत्युक्तम्।*

*अनादिरपीश्वरकृपाचार्यकृपामपेक्षते, आचार्यकृपा तु तन्निग्रहमपि शमयति, ईश्वरस्य तु क्वचित्कर्मानुरोधेनाधोनिनीषापि श्रूयते, किन्तु गुरोः सर्वत्रोनिन्नीषैव। अतस्तदुचितां वृत्तिमालम्बते। यद्यप्याचार्यपङ्क्तिः स्वयमभिवन्द्यते तथाप्युपदेशारम्भ आचार्यपरम्परास्मरणवन्दनादेः शास्त्राचारसिद्धतया– शिष्यशिक्षार्थं चानुतिष्ठति–* ***प्राचीनाचार्यवर्यानित्यादि।*** *प्राचीनाचार्यास्तु श्रीमद्बोधायनप्रभृतयस्तान्, यतिपतयः स्वाचार्याः श्रीमद्राघवानन्दाचार्यास्तैः सहितान् सादरं प्रणम्येति कथनेनाभिलषितार्थलाभे पुनः समित्युपसर्गः श्रद्धातिशयं द्योतयति।* ***"शास्त्रानुसारं समाधीयते"*** *इति कथनाच्छ्रोतव्यः श्रुतिवाक्येभ्य इति शास्त्रार्थः स्मारितः, शास्त्रस्य यथार्थनिणये बाधकाभावात्। प्रतिपादने श्रुतिपरिग्रहप्रकर्षादाप्ततमत्वं सूच्यते, ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकमित्युक्तेः।*

**पृष्टानामेकमाद्यं त्रिकमपि शृणु तद्भेदतो नामभेदै-**
**र्नित्याऽज्ञाऽचेतना सा प्रकृतिरविकृतिर्विश्वयोनिश्शुभैका।**
**नानावर्णात्मिकाऽजा त्रिगुणसुनिलयाऽव्यक्तशब्दाभिधेया**
**निर्व्यापारा परार्था महदहमितिसूरुच्यते तत्त्वविद्भिः॥6॥**

पदपरामर्शः

*पृष्टक्रमेण समाधेरुचितत्वात् पृष्टानां दशप्रश्नानां यदाद्यं प्रथमं तत्त्वं किमिति तत्त्वविषयकप्रश्नमाश्रित्योच्यते-* ***पृष्टानामिति।*** *सिद्धान्ते प्रकृतिजीवेश्वराख्यस्य तत्त्वत्रयस्य स्वीकारात्त्रयस्यापि निरूपणीयतया तत्त्रिकमपि शृण्विति भावः।*
*भोक्ता भोग्यं प्रेरितारं च मत्वेति श्रुत्या- त्रिधा भिन्नस्यापि तत्त्वस्य प्रमाणसिद्धतया निर्विशेषचिन्मात्रं ब्रह्मैव सत्यं तदतिरिक्तं मिथ्येति वदन्तो दूरमुत्सारिताः। तत्रादौ तत्त्वेषु सर्वप्रत्यक्षतया सिद्धं प्रकृतितत्त्वं मिथः पृथक्त्वानुसन्धानेन परस्परव्यावर्तक-विवेचनेनावगमयितुमुपक्रमते-* ***नित्याज्ञाचेतना सा प्रकृतिरिति।*** *स्थूलात्सूक्ष्म-निरूपणस्यौचित्यात्। श्रुतिरपि हि अन्नमयकोशादारभ्यानन्दमय- कोशपर्यन्तस्य विवेचनं करोति। ब्रह्मसूत्रेषु ईक्षत्यधिकरणानन्दमयाधिकरणयो- र्यथाऽचेतननिरूपणानन्तरमेव चेतननिरूपणं तथाऽत्रापि पूर्वमचिन्निरूपणं ततश्चिन्निरूपणं शास्त्रसिद्धक्रमानुरूपम्।*

*या नित्या अज्ञा अचेतना अविकृतिर्विश्वयोनिरेका शुभा नानावर्णात्मिका अजा त्रिगुणनिलया अव्यक्तशब्दाभिधेया निर्व्यापारा परार्था महदहमितिसूः सा तत्वविद्भिः प्रकृतिरिति उच्यत इति पदानामन्वितिः। भगवता प्रकृतिं स्वामवष्टभ्य, विसृजामि, मयाध्यक्षेण प्रकृतिः सूयते सचराचरमित्युक्तेः। महदाद्यखिलजडवर्गमुत्पादयतीति तथाप्यविकृतिः स्वयं न कस्यापि कार्यभूता। उत्पादविनाशरहितत्वा**न्नित्या,** ज्ञानरहितत्वाद**ज्ञा,** चेतनाभ्यां जीवेश्वराभ्यां भिन्नत्वाद**चेतना,** विश्वस्य सर्वकार्य-*

संवित्करः

हे वत्स! तुम्हारे तत्त्वविषयक प्रथम प्रश्न का उत्तर सुनो। यथावस्थित प्रामाणिक वस्तु को तत्त्व कहते हैं, जो चित् (जीव) अचित् (प्रकृति) एवं ईश्वर के नाम से तीन प्रकार के होते हैं। उसमें अचित्तत्त्व (प्रकृति) नित्य, अज्ञ, अचेतन एवं परिवर्तनशील है। वह किसी की विकृति नहीं अपितु विश्व की कारणभूता है। एक होते हुए भी अनेक रूपों में दृष्टिगोचर होती है। वह सत्त्व रजः तमः नाम वाले तीन गुणों से युक्त रहती है। वह प्रकृति प्रधान अजा इत्यादि अनेक नामों से जानी जाती है। स्वयं तो निष्क्रिय है तथापि भगवदधीन है। वही महत् (बुद्धि), अहङ्कार आदि को उत्पन्न करती है, ऐसा तत्त्वज्ञ महापुरुष बताते हैं।

पदपरामर्शः

वर्गस्योपादानत्वाद् **विश्वयोनिः**, स्वरूपत एकाप्यनेकरूपतया शोभमानतया **एका शुभा** च। लोहितशुक्लकृष्णामिति श्रवणान्नानावर्णात्मिका, त्रिगुणेषु सत्वरजस्तमःसु सम्यङ्निलयः यस्या इति **त्रिगुणसुनिलया**, अव्यक्तशब्देनाभिधीयमानतया **अव्यक्तशब्दाभिधेया**, कृतेर्ज्ञानेच्छाजन्यत्वेन तस्याश्च जडत्वात् स्वतन्त्रतया व्यापाररहितत्वेन **निर्व्यापारा**, तथापि स्वप्रवृत्त्या परस्य पुरुषस्य भोगापवर्गौ भवत इति **परार्था**, किञ्च महदहङ्कारक्रमेण सर्वं सा सूत इत्यतो **महदहंसूरित्येवं** तत्वविद्भिः सोच्यते।

प्रकृतिश्च कार्यकारणोभयावस्थापन्ना भवति। कारणावस्थमचिद्द्रव्यमव्यक्तम्, महदादिविशेषान्तं तदारब्धदेवतिर्यङ्मनुष्यादिरूपं कार्यजातं व्यक्तमिति भावः।

**नित्यो ज्ञश्चेतनोऽजः सततपरवशः सूक्ष्मतोऽत्यन्तसूक्ष्मो**
**भिन्नो बद्धादिभेदैः प्रतिकुणपमसौ नैकधा सूरिवर्य्यैः।**
**श्रीशाक्रान्तालयस्थो निजकृतिफलभुक्तत्सहायोऽभिमानी**
**जीवः सम्प्रोच्यते श्रीरघुपतिसुमते[1]! तत्त्वजिज्ञासुवेद्यः॥7॥**

पदपरामर्शः

तरति शोकमात्मविदिति श्रुत्यात्मज्ञानस्य शोकतरणहेतुत्वेनोक्तेरात्मपदार्थोऽवश्यं ज्ञेयतामेति, अत्र क्षेत्रज्ञ आत्मा पुरुष इत्यमरे गृहीतनाम्नः क्षेत्रज्ञपुरुषपदबोध्यस्यात्मानो नूनं ज्ञातव्यता, प्राप्तुर्हि प्रत्यगात्मनो याथात्म्यदर्शनमुपासनाया अङ्गभूतम्। यावज् ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मन इति शेषत्वबोधो न भवति तावत्स्वस्वरूपा–

संवित्करः

हे भगवन्निष्ठ सुरसुरानन्द! चित्तत्त्व जीवात्मा है, जो नित्य, अल्पज्ञ, अजन्मा तथा सर्वदा भगवान् के अधीन रहनेवाला है, वह स्वरूपतः सूक्ष्म से भी अतिसूक्ष्म है, इसके बद्ध मुक्त आदि अनेक भेद होते हैं। प्रतिशरीर भिन्न-भिन्न होने से जीव अनेक माने जाते हैं। वह भगवान् से व्याप्त शरीर में रहकर अपने कर्मफल को भोगता है। सभी दशा में इसे भगवत्सान्निध्य प्राप्त रहता है अर्थात् इसकी आत्मा के रूपमें भगवान् विराजमान रहकर इसका सदा नियमन करते हैं। यह अज्ञान के कारण देहादि में अहंबुद्धि तथा अपने कृतकर्म के प्रति कर्तृत्वबुद्धि रखता है। इस प्रकार तत्त्वज्ञानियों ने जानने योग्य चित् (जीवात्मा) का स्वरूप निश्चित किया है।

---

[1] पा. भे.– श्रीहरिचरणमते।

पदपरामर्शः

नुगुणपुरुषार्थस्यापक्षैव न स्यात्, स्वशेषत्वानुसन्धानपूर्वकेण सहजसम्बन्धपरिज्ञानेन लब्धाधिकारस्यादेहपातादुपायनिष्पत्त्या कृतार्थतेति जीवात्मपरमात्मनोः प्रथमं चित्पदवाच्यं जीवात्मतत्त्वमुपदिश्यते- **तत्वजिज्ञासुवेद्यो जीव इति।** शिष्यं प्रीत्याभिमुखीकरोति- **श्रीरघुपतिसुमते,** श्रीरघुपतौ सुमतिर्यस्य, भगवत्कृपया विशदतमायां तव सुमत्यां रहस्यमचिरेण प्रस्फुरिष्यतीति सम्बुद्धेराशयः। सूरिवर्यैः नित्यत्वादिविशिष्टो जीवः सम्प्रोच्यते, इत्यत्र **सूरिवर्यपदं** सदा पश्यन्ति सूरय इत्याम्नायोक्त्या सततभगवत्साक्षात्कारवैभवप्रयुक्ताप्ततमत्वसूचनेन भ्रमप्रमादादेरत्यन्ता-संभावनीयता व्यज्यते, अतस्तत्प्रोक्तेऽप्रामाण्यप्रयोजकशङ्कानवकाश इति। तादृशैर्लक्षितो जीवो **नित्यः,** अनादिनिधनः प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगत्वरूप इति पूर्वानुभूतार्थप्रतिसन्धानान्न जायते म्रियते ज्ञाज्ञौ द्वावजावित्यादिश्रुतेश्च। किञ्च जीवानित्यत्वेऽकृताभ्यागमकृतविप्रणाशरूपदोषद्वयं प्रसज्येत। तथा च ब्रह्मसूत्रम्- नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य इति। आकाशादिवज्जीवस्याप्युत्पत्तिरस्तीत्याशङ्क्य समाधीयते- नात्माऽश्रुतेः, न जीवात्मोत्पद्यते, न तादृशी काचिदपि श्रुतिरस्ति यत्र जीवोत्पत्तिः श्रुता स्यात्, प्रत्युत श्रुतिभ्यो नित्यत्वमेवावगम्यत इति तत्रानन्दभाष्यम्। नित्यत्वादपरिणामित्वमुच्यते, प्रकृतिवत् सततपरिणामैर्नान्वीयते। इमानि भूतानि जायन्ते, प्रजा असृजत, इत्यादिश्रुतयस्तु जीवस्य देहसम्बन्ध उत्पत्तिस्तद्वियोगो नाश इति प्रतिपादनाभिप्रायेण नेयाः। एतेनात्मानित्यत्ववादिनो निरस्यन्ते।

**जीवो ज्ञः,** जानातीति ज्ञः, ज्ञातृत्वावगमाज्ज्ञानगुणको न तु ज्ञानमात्रस्वरूपः, न पश्यो मत्युं पश्यति, मन्ता बोद्धा कर्ता विज्ञानात्मा इत्यादिश्रुतिभिरात्मनो ज्ञातृत्वोक्तेः। अत एव ब्रह्मसूत्रमपि- ज्ञोऽत एवेति। यद्यपि ज्ञ इत्यनेन ज्ञानाश्रयत्वरूपं चेतनत्वमुच्यते तथापि जीवो न केवलं ज्ञानाश्रयरूपोऽपितु प्रत्यगपीति बोधनाय पुन**श्चेतन**पदम्। प्रत्यक्त्वं नाम स्वयमेव स्वस्मै भासमानत्वम्। स्वयम्प्रकाशत्वादयमनन्याधीनप्रकाशः, इदमेवास्याजडत्वम्। परस्य तु तज्ज्ञानविषयतयैव प्रकाशते, स्वस्यापि नियम्यत्वाणुत्वनित्यत्वादिविशिष्टरूपेण ज्ञानविषयत्वमस्त्येव। जीवोऽज्ञश्चेतनोज इति पाठे **अज्ञ** इत्यनेन तस्य धर्मभूतं नित्यं किञ्चिज्ज्ञानमस्ति किन्तु संसारदशायां कर्मणा तस्य सङ्कोचविकासदर्शनात्सङ्कोचावस्थायामल्पज्ञोऽनित्यज्ञानत्वादित्यर्थः।अनुदरा कन्येति-

.......................................................पदपरामर्शः.......................................................

वदीषदर्थे नञ्। एतेनास्य स्वयम्प्रकाशता ज्ञातृत्वञ्चोभयं सिद्ध्यति। तेन चिन्मात्रमेवेति, ज्ञातृत्वमेवेत्यादयः पक्षा निरस्यन्ते। वस्तुतः कर्मफलसम्बन्धा- द्देवमनुष्यादिशरीरेषु वसन्नपि स्वरूपतो जन्ममरणादिविकाररहित एवेति बोधयितुमुच्यते- **अज** इति। विनाशित्वनिराकरणेन जननादिकमप्यर्थतो निरस्तम्, जननादीनां देहधर्मत्वात्। वस्तुतोऽज इत्यनेन यथावस्थिताकारो विविच्याभिधीयते न तु देहसंयोगवियोगलक्षणजन्ममरणप्रतिक्षेपः क्रियते।

तस्य जीवस्येश्वराधीनत्वमभिदधाति- **जीवः सततपरवश** इति। अत्र परशब्देन ब्रह्मविदाप्नोति परमित्यादिश्रुतिबोधितः सर्वेश्वरो भगवान् रामः कथ्यते, तेनेश्वरनियम्यो जीव इति लभ्यते। अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा, आत्मानमन्तरो नियमयतीतिश्रुतेः। जीवस्य कर्तृत्वादिकं तदधीनमिति भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेति गीतोक्तेश्च। एतेन परात्तु तच्छ्रुतेरिति सूत्राशयः प्रकाशितः। अत एव च नियम्यनियामकभावप्रयुक्तो भेदोऽपि सुतरामेव सिद्ध्यति- पृथगात्मानं प्रेरितारञ्च मत्वेति श्रुतौ पृथक्शब्दस्योपादानात्। तथाविधसमर्थेनेश्वरेण नियमनात् कृतकर्मफल- भोक्तृत्वमसमर्थजीवस्य युक्तमिति चेन्न परात्मना दत्तैस्तदाधारैश्च करणशरीरादिभि- स्तदाहितशक्त्या च स्वयं जीवात्मा कर्मनिष्पत्तये स्वेच्छया प्रयत्नमारभते, परमात्मा च तदन्तरवस्थितः स्वानुमतिदानेन तं प्रवर्तयतीति जीवस्य स्वबुद्ध्यैव प्रवृत्तिहेतुत्वमस्ति, अतस्तस्य कर्तृत्वं विधिनिषेधभाक्त्वञ्च सिद्ध्यति, अन्यथा तस्य तदधीन- कतृत्वेनानियोज्यत्वमेव स्यात्तेन विधिनिषेधशास्त्राण्यनर्थकानि स्युः। तथा चेममर्थं समर्थयते- कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य इति ब्रह्मसूत्रम्। अतो जीवस्य शास्त्रवश्यत्वप्रतिपादनाय कर्तृत्वं तदनुगुणफलभोक्तृत्वञ्च वक्तुं विशेषणमुखेन लक्षयति- **निजकृतिफलभुगिति**। कर्तुरेव तत्फलभोक्तृत्वस्यौचित्यात् तयोरन्यः पिप्पलं स्वाद्वत्तीति श्रुत्यर्थः प्रकाशितः।

वैषयिकसुखदुःखोपभोगे प्रकृतिसंसर्गो हेतुः, गुणसङ्गस्य विहितनिषिद्धकर्मद्वारा तत्फलानामनुभवार्थं विचित्रजन्म प्रति हेतुत्वमस्ति, सदसद्योनिप्राप्तेः कर्ममूलत्वात्। एतेन जीवस्य साध्वसाधुकर्मफलप्रवाहरूपेण विचित्रानन्तयोनिसम्बन्धो जायते। देहजन्यकर्मफलभोगाय पुनर्देहावाप्तेर्बीजाङ्कुरन्यायेनानादित्वात्। आत्मत्वं हि प्रत्यात्मकर्मतत्फलतद्भोगार्थभेदात् शरीरप्रतिसन्धित्वमिति बोधनायोच्यते- **प्रतिकुणप-**

पदपरामर्शः

**मसौ नैकधेति।** प्रतिशरीरं जीवो भिन्नः कस्यचित्सुखित्वकालेऽन्यस्य दुःखित्वदर्शनात् शुकवामदेवादीनां श्रुत्या मुक्तत्वकथनात्। एकस्मिन् मुक्ते सर्वमुक्तिप्रसङ्गा-त्संसारोच्छेदापत्तिश्च स्यात्। नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानित्यादिश्रुतयः जीवानेकत्वे प्रमाणम्। नानात्मानो व्यवस्थात इति न्यायसूत्रेऽपि जीवानेकत्वमेव स्थापितम्। साङ्ख्यैरप्युक्तम्-

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्च।।

एकस्मिन् म्रियमाणे सर्वे म्रियेरन्, किन्तु जननमरणयोः काचिद् व्यवस्था दृश्यते, अतो हेतोः प्रतिशरीरं भिन्नो नाना जीव इति सिद्ध्यति। यद्यपि देहभेदस्तु नात्मभेदनियामको भवितुमर्हति सौभरिशरीरे जीवभेदस्यादर्शनात् तथापि सौभर्यादि-क्षेत्रज्ञव्यतिरिक्तस्थल एव देहभेदो जीवभेदस्य नियामक इति भावः। जीवभेदस्वीकारे जीवब्रह्मभेदोऽपि सिद्ध्यति। नेह नानास्ति किञ्चनेत्यादिश्रुतयस्तु सर्वस्य ब्रह्मशरीरतया तद्व्यतिरिक्तनिषेधार्थकाः। एतदेव हि ब्रह्माद्वैतम्, तस्य प्रकार्यद्वैते तात्पर्यात्। ब्रह्मशरीरभूतानां प्रकाराणां जीवानामनेकत्वेऽपि तेषां सर्वेषामात्मभूतस्य प्रकारिणो ब्रह्मण ऐक्यात्। मुक्तावपि न जीवब्रह्मणोरैक्यम्, सदा पश्यन्ति सूरय इति मन्त्रवर्णात्, किन्तु साम्यमात्रम् मम साधर्म्यमागता इति भगवदुक्तेः। जीवानेकत्वादेव बद्धमुक्तनित्यभेदेन त्रैविध्यं तस्य प्रतिपाद्यते, बद्धा अनिवृत्तसंसाराः, मुक्ताश्च भगवदनुकम्पया-ऽविर्भूतगुणाष्टकाः परमानन्दब्रह्मानुभववन्तो नित्याश्च कदाचिदपि संसारप्रसक्त्य-भाववन्तः श्रीहनुमदादयः।

ननु जीवात्मा विभुः शरीरव्यापिसुखाद्युपलब्धेः, देशान्तरेऽपि तद्भोग्य-वस्तूत्पत्तेश्च, तत्र हि जीवादृष्टं कारणम्, तस्य तत्र सन्निधानमपेक्षत, कार्यकारणयोः सामानाधिकरण्यनियमात्, तच्चादृष्टाश्रयमन्तरेण न संभवतीत्यगत्या जीवात्मनो विभुत्वमङ्गीकर्तव्यमिति पूर्वपक्षीयं जीवात्मनो विभुत्वं प्रत्याख्यायाणुत्वं प्रतिपादयितुमुच्यते- **सूक्ष्मतोऽत्यन्तसूक्ष्म** इति। अयञ्जीवोऽणुपरिमाण उत्क्रान्त्यादि-श्रवणात्। जीवस्य विभुत्वे उत्क्रान्तिर्गतिरागतिश्च याः श्रुत्युक्तास्ता नोपपद्येरन् तथा च श्रुतिः बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः सचानन्त्याय कल्पत इति। यद्यपि जीवात्मनो न सर्वशरीरव्याप्तिस्तथापि तद्धर्मस्य ज्ञानस्य

........................................................पदपरामर्शः........................................................

सर्वशरीरव्याप्त्या युगपदनेकविषयानुभवः सिद्ध्यति। सर्वगतस्य विभोर्गतिश्चागतिश्च नोपपद्यते, तस्मादात्मनोऽणुत्वमेवेत्यानन्दभाष्यम्। तादृशस्य जीवस्य स्थितिमाह- **श्रीशाक्रान्तालयस्थ** इति। श्रिय ईशो भगवान्, तेनाक्रान्ते आलये षाट्कौशिके शरीरे तिष्ठतीति भावः। यत्रान्तर्यामित्वेन भगवान्, तत्रैवात्मतया जीवोऽपि जीवाधिकरणमपि शरीरमीश्वरव्याप्तम्, एतेन ईश्वरस्य सर्वाधारतया जीवस्याधेयत्वरूपभगवदाश्रितत्वं प्रतिपाद्यते, जीवस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्त्यादिर्लभ्यते। ईश्वराक्रान्तालये कथं तत्स्थितिरित्यत आह- **तत्सहाय** इति। तदनुचर इति यावत्। अत एव समानवृक्षारूढपक्षिद्वयवदुभयोः सख्यं श्रुतिप्रतिपादितम्। नरकादावपि तदन्तर्यामितया न जीवं मुञ्चति भगवान्, सहायत्वात्, उभयोः सांसिद्धिक-सम्बन्धसत्त्वात्। यद्वा स भगवानेव सहायः सर्वथोपकारको यस्य, तादृशो जीवः। अतः सर्वभूतसुहृत्वकथनं भगवतः सङ्गच्छते, सकलदुःखनिवर्तनपूर्वकस्वरूपानन्दप्रापकत्वात्। किन्तस्य शत्रुहनने कपयः सहाया इति भागवतोक्त्या अल्पसत्त्वजीवकृतस्य तत्सहायस्य नितरामयुक्तत्वात्। ईश्वरस्य परमकारुणिकत्वात्ततोऽन्यो न तत्सहाय इति भावः।

अज्ञानवशाज्जीवो देहादावहम्भावं मत्वाऽहं स्थूलः कृश इति मन्यते। देहयोगादेव धनपुत्रादौ ममैतदिति भावस्तस्य जायते, अतो**ऽभिमानी**त्युच्यते। स्वरूप-याथार्थ्यविज्ञानानन्तरन्तु यथेष्टविनियोगार्हत्वरूपशेषत्वबोधोदयाद् दासोऽहं कोसले-न्द्रस्येत्याकारकाभिमानस्तिष्ठति स्वस्य विषयज्ञानचिकीर्षाप्रयत्नाश्रयलक्षणा कर्तृता गुणप्रयुक्तेत्युसन्धायाहं कर्त्तेत्यादिकं न मन्यते। तस्य न स्वरूपप्रयुक्तं कर्तृत्वमपितु गुणसम्पर्ककृतमिति, तथापि गुणाभिष्वङ्गादभिमन्यत इत्यभिमानीति भावः। शेषत्वे सति ज्ञातृत्वमिति लक्षणसत्त्वेऽपि विविधविशेषणमुखेन केषाञ्चित् स्वरूपनिरूपकधर्माणां कथनद्वारा प्रकृतिसंश्लिष्टतयाऽसंश्लिष्टश्च जीवस्तथा लक्षितो येन सिद्धान्तसम्मतं तत्स्वरूपमाविष्कृतं स्यात्।

वस्तुतोऽत्र नित्य इत्यनेन देहात्मवादादिनिरासः, ज्ञ इत्यनेन चिन्मात्रवा-दिशाङ्करमतनिरासः, चेतन इति ज्ञातृत्वमात्रवादिमतनिरासः, सूक्ष्म इति विभुत्व-वादनिरासः, नैकधेति- एकात्मवादनिरासश्च भवति। ईश्वरतत्त्वापेक्षया जीवतत्त्वस्य पूर्वनिरूपणे श्रौती सङ्गतिरपि दृश्यते- तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकाशीतीत्यत्र भोक्तृजीवनिरूपणात्परमीश्वरस्याभोक्तृत्वनिरूपणम्।

**विश्वं जातं यतोऽद्धा यदवितमखिलं लीयते यत्र चान्ते[1]**
**सूर्यो यत्तेजसेन्दुः सकलमविरतं भासयत्येतदेषः।**
**यद्भीत्या वाति वातोऽवनिरपि सुतलं याति नैवेश्वरो ज्ञः**
**साक्षी कूटस्थ एको बहुशुभगुणवानव्ययो विश्वभर्ता॥8॥**

.................................................पदपरामर्शः.................................................

*पूर्वमचित्तत्वं निरूप्य ततश्चेतनत्वात्तदपेक्षयोत्कृष्टं चित्तत्त्वं प्रतिपाद्येदानीं तत्त्वत्रयान्तर्गतं चरममीश्वरतत्त्वं बोधयितुमुपक्रमते-* ***विश्वं जातमित्यादिना।*** *तत्रेयं प्रकृतिः स्वगुणैर्यदधीनसत्ताका, पुरुषश्च यदपराधाद्बद्धः, यत्प्रसादाच्च मोक्ष्यते, उभयस्यापि यथेच्छनियमनाद्युभयापेक्षया नितान्तविलक्षणमेव वस्त्वन्तरमेवेश्वरतत्त्वम्। अत एव भगवदधीनत्वरूपसाम्यधिया चिदचिदोः स्वरूपमेकैकपद्येन समुन्नीय तदपेक्षया वैशिष्ट्यमाविष्कर्तुं तन्नियामकेश्वरतत्त्वं द्वाभ्यां निरूप्यते। मयि सर्वमिदं प्रोतम्, इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरमित्याद्युक्तप्रकारेण चिदचिदोरेक-देशवर्तित्वकथनात् तस्योभयात्मभूतस्यानुचिन्तनार्थमुच्यतेऽनितरसाधारणविशेषणैः। तत्रादौ श्रुतिसिद्धजगत्कर्तृत्वादिलक्षणमीश्वरत्वं पुरस्करोति-* ***विश्वं जातं यतोऽद्धा यदवितमखिलं लीयते यत्र चान्त*** *इति। अखिलमशेषं चराचरात्मकं विश्वं जगत् यतो जातमित्यन्वयः। यत इत्यत्र हेतौ पञ्चमी, तेन यद्धेतुकं जगज्जन्मादीति लभ्यते। यद्वा यतो जातं कार्यवर्गः, तत्र विपुलतरत्वद्योतनाय सर्वार्थकविश्वशब्दः। न केवलं सर्वं विश्वं यतो यस्मात्सर्वेश्वराज्जातं प्रादुर्भूतमपितु यदवितम्, येन पालितं रक्षितं सत् स्थितिं लभते, रक्षणार्थकावधातुप्रयोगात्। जननीवानिष्टान्निवार्य पयःपानादिना पुष्णातीति सर्वदोषप्रसहनानुगुणवात्सल्यं व्यज्यते। न केवलं कार्यकारणोभयावस्थजड-प्रकृत्यपेक्षयैवापित्वचिन्मिश्रात् क्षरपदवाच्यात् विशुद्धाच्चाक्षरपदवाच्याच् चेतनात् व्यापनाद्भरणात्स्वाम्याच्चेश्वरस्यान्यत्वं श्रुतिस्मृतिसिद्धम्।यस्य सर्वव्यापित्वन्तु* ***यस्मिंश्च***

---------------------------------संवित्करः---------------------------------

जिससे यह विश्व प्रकट होता है, पालित होता है तथा अन्त में जिसमें लीन हो जाता है। सूर्य चन्द्र आदि प्रकाशक जिसके तेज से प्रकाशित होते हैं, जिसके भय से वायु निरन्तर चलती है, पृथिवी पाताल में नहीं डूबती। वह सर्वनियामक, सर्वज्ञ, सर्वसाक्षी अविचल, एक, अविनाशी, अनन्तकल्याणगुणसम्पन्न, विश्वम्भर परमात्मा ईश्वरतत्त्व प्रभु श्रीराम हैं।

---

[1] पा. भे.-लीनमप्यस्ति यस्मिन्।

........................................................पदपरामर्शः........................................................

***पुनरन्ते प्रलयावसरे लीयते*** नामरूपविभागानर्हरूपेण संश्लिष्टं भवति। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्तीति श्रुतेः। ***अत्राद्धेतिपदं*** तत्त्वे त्वद्धाञ्जसा द्वयमित्यमरकोषाद्यथार्थपरम् तेनाद्वैतिसम्मतं जगदुत्पत्यादेः पारमार्थिकत्वाभावबोधकप्रातीतिकत्वादिकं निरस्यते, जातं विश्वमद्धा सर्वेश्वरस्य जनयितृत्वादिकं चाद्धेत्युभयान्वयात्। पर्यायशब्दस्यार्थान्तरसंश्लेषादद्धाशब्द-स्याञ्जसेत्यप्यर्थस्तेन जगदुत्पत्त्यादिकं सहायान्तरनिरपेक्षस्य तस्यानायासेन सङ्कल्पमात्रेणैवेति सूच्यते। ***अयमत्राभिसन्धिः-*** घटं प्रति मृत्तिकावत्कार्यरूपेण परिणामयोग्यं वस्तूपादनकारणम्, घटं प्रति कुलालवद्य उपादानवस्तुनः कार्यरूपेण परिणामं करोति स कर्त्ता निमित्तकारणं, घटं प्रति दण्डचक्रादिवत्कार्योत्पत्त्युपकरणं वस्तु सहकारिकारणञ्च भवति। अत्र सूक्ष्मचिदचिद्विशिष्टतयोपादानं बहु स्यामिति सङ्कल्पविशिष्टतया निमित्तं ज्ञानशक्त्यादिविशिष्टतया च सहकारिकारणमिति जगतस्त्रिविधमपि कारणं सर्वेश्वरो भगवान् श्रीराम एव। सहकारिकारणस्य निमित्तेऽन्तर्भावान्निमित्तोपादानकारणत्वं तस्योच्यते। यथैक एव जीवात्मा तैस्तैरुपायैः स्वसुखाद्युत्पादयति, स्वयमेव च तस्य समवायिकारणं भवति तथैवैकस्यापि भगवतो निमित्तोपादनोभयकारणता न विरुध्यते। अत्र यथोर्णनाभि सृजते गृह्णतेचेतिश्रुतिः प्रमाणम्। अत एव चैकविज्ञानेन सर्वविज्ञानमिति सङ्गच्छते। एतेन परमाणुकारणतावादः, परमाणूनामुपादानत्वमीश्वरस्य च निमित्तत्त्वमिति वदतो वैशेषिकस्य वादश्च प्रधानकारणतावादश्च यथायथं निरस्ता भवन्ति।

न केवलं जगदुत्पादकत्वादि तदैश्वर्यं वदत्यपितु चराचरभासकत्वमपि, पराग् भवतु प्रत्यग्वा सर्वं यद्धाम्नैव प्रकाशत इति सर्वप्रकाशकत्वं प्रस्तौति- ***सूर्यो यत्तेजसेत्यादिना।*** एष सूर्य एष इन्दुर्यत्तेजसैतत्सकलमविरतं भासयतीत्यन्वयः। लौकिकप्रकाशके सूर्येऽस्तङ्गते शान्ते चाग्नौ यश्च सर्वं प्रकाशयति, सर्वस्य तत्प्रकाशाधीनप्रकाशकत्वात्। अत एवोक्तं भगवता-

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति।।

ग्रहेशस्य नक्षत्रेशस्य चोपादानादिदमाकूतं भवति- याभ्यां लोको नियम्यते तयोरपि भगवन्नियम्यत्वम्। यश्च तेजो नियमयतीति श्रुतेः। सर्वस्यापि स्वस्वकार्य-

.................................................पदपरामर्शः.................................................

जनकत्वमेतदधीनमेवेति साक्षात्सर्वान्तयामित्वं भगवतो रामस्य, यच्च वाल्मीकिनाप्युक्तम् सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुरिति। एतेन तस्य भासा सर्वमिदं विभाति, तमेव भान्तमनुभाति सर्वमित्यादिश्रुत्याशयः प्रकाशितः। तत्र तत्र तदनुगुणशक्त्याधानेनान्तर्यामितया नियमयतीति भावः। अत्र विवक्षितभाः ज्ञानपरः, स चानन्दादेरप्युपलक्षणम्, तस्याविद्यानिवर्तकतया निरतिशयानन्दप्रत्वात्। यदुक्तं- मत्तः स्मृतिज्ञानमपोहनञ्चेति, यं लब्ध्वानन्दीभवतीति च। यथाग्न्यादिप्रकाशकस्य हि शीतापहारकत्वं भयनिवर्तकत्वं प्रकाशकत्वञ्च तथास्यापीति लभ्यते। प्रकाशकतायाः कादाचित्कत्वव्यावृत्तये- **सकलमविरतमित्युक्तम्**। अतो भागवते धाम्ना स्वेन सदा निरस्तकुहकमिति ध्येयं विशिनष्टि। भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति श्रौतमनन्याधीनशासकत्वं प्रस्तोतुं भीतिमुखेन चिदचिन्नियमनं दर्शयति- **यद्भीत्येति**। यद्भीत्या वातो वाति, अवनिरपि सुतलं न याति। एतेन भगवतः सागरनिग्रहणादिकं स्मारितम्। इदमेवेशितृत्वम्। नित्यासङ्कुचितज्ञानेभ्यो नित्येभ्योऽप्यप्रतिहतैश्वर्यम्। यथोक्ता नियमनगुणाः श्रीरामायणे- यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षण, इति हन्त्येव नियमाद् वध्यानिति च।

रामायणेऽपि तत्र तत्र नाशयामि जगत्सर्वमित्यादिना भयप्रदर्शनं दृश्यते। अतएव च यस्य बिभ्यति देवाश्चेति वाल्मीक्युक्तं सङ्गच्छते। यत्तदोर्नित्यसम्बन्धात्स इतीश्वरपदे प्रथमान्तेऽन्वेतव्यः। यस्यैवमतिलोककार्यम्, यश्च ज्ञः साक्षी कूटस्थोऽव्ययो बहुशुभगुणवान् स विश्वभर्त्ता ईश्वर एक इत्यन्वयः। ईश्वरः सर्वं स्वरूपतः प्रकारतश्च जानातीत्यतो **ज्ञ** इति तं विशिनष्टि। एतेन नैव तस्य ज्ञानस्य कालतो विषयतश्च सङ्कोचो विद्यते, तस्य नित्यज्ञानत्वात् यः सर्वज्ञः स सर्वविदिति श्रुतेश्च। साक्षात्काररूपज्ञानाश्रय एव लोके वेदे च **साक्षीति** व्यपदिश्यते, न ज्ञप्तिमात्रम्, यथाह पाणिनिः- साक्षाद्द्रष्टरि संज्ञायाम् इति। कारणादिव्यापारं विनापि ज्ञानसङ्कोचहेत्वभावात् सर्वदैवातिरोहितप्रकाश एव जगत्सर्जनाजीवकर्मफलदानादावुपादानादिविषयज्ञानवानेव तद्रचनायाम् प्रभवतीति भावः।

कूटे तिष्ठतीति **कूटस्थः**, स्वस्वरूपे न शैथिल्यादिरूपो विकार इत्यर्थः। कस्यामप्यवस्थायां न स्वरूपाच्च्यवते। पञ्चधा विभक्ते परव्यूहविभवार्चान्तर्यामिरूपे न

..........................................पदपरामर्शः..........................................

स्वरूपं व्यभिचरतीति भावः। अवतारादिदशायामप्यजत्वाव्ययत्वसर्वेश्वरत्वरूपा या पारमेश्वरप्रकृतिः, तां न कदापि जहाति, सदैकरूप इत्यर्थः। **अव्ययो** भगवान् विकारानर्हो विकारित्वग्राहकप्रमाणाभावात्। वस्तुतः कूटस्थोऽव्यय इति शब्दाभ्यां धर्मतः स्वरूपतश्च विकाराभावबोधनान्न पुनरुक्तिः। जीववदनेकत्वव्यावर्त**कैक**शब्दः। अन्यनिरपेक्षपरः, एकपदं न तद्व्यतिरिक्ततत्त्वाभावपरमपितु तत्तुल्यनिवारणपरम्, यद्वैकोऽन्यः जीवलक्षणपुरुषराशिबहिर्भूततया विलक्षण एव हि भगवान्, उत्तमः पुरुषस्त्वन्यः अक्षरादप्यतीतोऽस्मीति स्मृतेः। अत उक्तमादिकविना- साधुरेको विनिश्चित इति । एतेनाधिकसाम्यविमुक्तत्वमुच्यते, न तत्समश्चाभ्यधिकश्च दृश्यत इत्युक्तेः। एके मुख्यान्यकेवला इत्यमरान्मुख्यार्थतया, त्रिषु तत्त्वेषु मुख्य इत्यर्थः। अस्य त्रिषु मुख्यत्वं **विश्वभर्त्ते**त्यनेन प्रतिपाद्यते, भर्तृपदं धारणपोषणार्थकभृञ्धातोर्निष्पत्या "भर्ता धातरि पोष्टरि" इत्यमराच्च न केवलं स्वाम्यं सूचयति, अपितु धारकत्वं पोषकत्वञ्च। रूढ्यापि चराचरजगत्स्वामित्वन्तु गम्यत एव, पतिं पतीनां परमं परस्तादिति श्रुतेः। यदुक्तं भगवता- गामाविश्य च भूतानि धारयाम्यहमोजसा। पुष्णामि चौषधीः सर्वा सोमो भूत्वा रमात्मकः।। केवलं धारणपोषणप्रयुक्तं भर्तृत्वमेव न तस्य, अपित्वेवंभूतानेकप्रशस्तगुणास्तस्य सन्तीत्यत आह- **बहुशुभगुणवानिति**। वस्तुतः साक्षी कूटस्थो विश्वभर्तेति चेति कथनेन निर्दयनियमनौदासीन्यनिर्विकारत्वादिप्रतीत्या समाश्रयणीयताप्रयोजका जीवसङ्ग्रहणानुकूलतत्सौशील्यवात्सल्यादय आभिगमिकगुणा न स्युरित्यत आह- **बहुशुभगुणवा**निति। बहुपदमसंख्येयार्थमाह, सर्वभूतहितपरत्वात्त-दनुकूलकल्याणमयत्वं गुणानां वक्ति **शुभ**शब्दः। बहवश्शुभाः कल्याणमयाः गुणा अस्य सन्तीति प्रशंसायां नित्ययोगे च मतुप्, भूमप्राशंस्त्ययोस्त्ववयवार्थत्वात्। स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या गुणानामौपाधिकत्वव्यावृत्तिः। शुभगुणाना-मानन्त्येऽपि भगवतः कल्याणगुणाः वाल्मीकीयरामायणस्य बालकाण्डायोध्याकाण्डयो-राद्यसर्गयोरुपात्ताः केचन गुणा विशिष्टाः सन्निधाप्यन्ते, तथापि केचनात्र ततः सङ्गृह्योपन्यस्ता उपादीयन्ते-

सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम्।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे।।
आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः।

.....................................................पदपरामर्शः.....................................................

राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम्।।

**बहुशुभगुणवानित्यत्र** न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति नियमात् तदर्थप्रतिपत्तौ वृत्तिद्वयाश्रयगौरवं स्पृशति तथापि प्रत्ययस्थात्कादिति सूत्रेऽसुब्वत इति महाभाष्यप्रयोगेण तदनित्यत्वबोधनान्न दोषः। अत एव हंसचिह्न-दुकूलवानित्यादयः कालिदासप्रयोगाः सङ्गच्छन्ते। इत्थं जगदुत्पादकत्वप्रकाशक-त्वनियामकत्वनित्यज्ञानत्वनिर्विकारत्वाद्वितीयत्वविश्वभर्तृत्वादिलक्षणमीश्वरत्वं विशेषणमहिम्ना प्रकाशितम्।

**श्रीमानर्च्यः शरण्यो बहुविधविबुधैर्योगिगम्याङ्घ्रिपद्मोऽ-**
**स्पृश्यः क्लेशादिभिः सत्समुदितसुयशाः सूरिमान्यो वदान्यः।**
**शश्वच्छ्रीरामचन्द्रः सुमहितमहिमा साधुवेदैरशेषै-**
**र्निर्मत्युः सर्वशक्तिर्विकलुषविजरो गीर्मनोभ्यामगम्यः।।9।।**

.....................................................पदपरामर्शः.....................................................

पूर्वश्लोके विश्वभर्तृत्वाद्युक्त्या य ईश्वरो बोधितः स श्रीरामचन्द्र एवेत्यवधारयितुं प्रत्यभिज्ञाप्यते, तत्रापि प्रथमोपस्थितत्वान्निरवद्यविग्रहशोभां वदति- **श्रीमानिति।** श्रीशब्दस्य शोभासम्पद्वेषरचनाबुद्ध्यादौ दर्शनात् प्रशस्ता श्रीः शोभाऽस्त्यस्येति सर्वातिशायिशोभावैभवं सूच्यते, सर्वसमृद्धिबोधनाच्च परिपूर्णत्वं लक्ष्यते। रामानन्यास्तु श्रियो लक्ष्म्या ईः, श्रीः लक्ष्म्याः स्वामिनी श्रीसीता, तद्वान् नित्यं तद्युक्त इति व्याख्यान्ति। बहुविधाश्च विबुधा देवा विद्वांसश्च, **तैरप्यर्च्य** इति। न विदुषामैकमत्यमथाप्यत्रार्थे समानप्रवृत्तिदर्शनाद्भगवदर्चनस्य समुदायसिद्धमौचित्यं ध्वन्यते। विवुधा अविधिपूर्वकं यं कमपि नार्चन्ति, तेषामात्मानमुपासीतेति-श्रुत्यर्थपर्यालोचनया सुदृढबोधसम्पत्त्यात्मधिया भगवानेवार्चनीय इति निश्चयो भवतीति

-------------------------------संवित्करः-------------------------------

जो सर्वैश्वर्यविभूति से नित्यसम्पन्न श्रीजानकीपति शरणागतवत्सल हैं, जिनके चरणकमल ब्रह्मादि देवताओं द्वारा वन्दित तथा श्रेष्ठयोगिजनों के द्वारा ध्येय हैं, जो अविद्या अस्मितादि पञ्च क्लेशों से नितान्त असंस्पृष्ट हैं, जिनके सुयश का सत्पुरुष सर्वदा गान करते हैं, जो नित्यमुक्त एवं सतत कैङ्कर्यपरायण सूरिजनों द्वारा पूजित एवं परम उदार हैं। सभी वेद जिन्हें अजर अमर सर्वशक्तिसम्पन्न निर्मल नित्यकिशोर अविनाशी एवं मन एवं बुद्धि से परे बताते हैं, वे नित्यैश्वर्यसम्पन्न पुण्यश्लोक श्रीरामचन्द्र ईश्वरतत्त्व के रूपमें ज्ञेय हैं।

..........................................पदपरामर्शः..........................................

भावः। यथा चोक्तं ब्रह्मसूत्रे- आत्मेत्युपगच्छन्ति ग्राहयन्ति चेति। कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्निति भागवतोक्तेः। एतेन यत्र निर्दुष्टविबुधत्वं तत्र तत्र भगवदर्चापरत्वमिति काचिद्व्याप्तिर्विवक्ष्यते। न केवलं भगवतो ब्रह्मादिदेवार्चनीयता, अपितु तत्पादकमलयोर्योगिभिरपि समासाद्यतां वदति- **योगिगम्याङ्घ्रिपद्म** इति। नित्यं योगो ध्यानमेषान्तैः, योगः सेवया नित्यसङ्गतिर्भगवतास्त्येषान्तैः, यद्वा फलरूपतया प्रशस्तो योगः साध्यापायो भक्तियोग एषान्तैस्तदेकविषयचित्तवृत्तिभिः प्रयोजनान्तरैश्शरण्यान्तरत्यागिभिर्योगिभिः प्राप्ये अङ्घ्रिपद्मे यस्य स भगवानित्यर्थः। एतेन तत्पादपद्मयोर्भक्तैकभोग्यत्वं सूच्यते, भक्तियोगस्याव्यवहितोपायत्वात्।

अङ्घ्रिद्वयस्य पद्मोपमानेन सुरभित्वसुखस्पर्शशुचित्वादि व्यञ्जितम्, तेन योगिनां भक्तानां मधुकरत्वद्योतनेन तदेकजीवनत्वं तत्रापि सारतमग्राहित्वं ध्वन्यते। भगवानपि स्वस्य स्थिरभक्तियोगसुलभत्वमभिदधाति- तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिन इति। न केवलं लीलाविभूतावपितु भगवद्धाम्न्यपि त्रिकालेऽपि संसारप्रसक्तिरहितैरपहतपाप्मत्वादिगुणाष्टकप्राप्तैर्नित्यूसरिभिरपि **मान्यो** यथायथं पूजितो भगवानिति। एतेन मुक्तोपसृप्यत्वव्यपदेशादिति सूत्रार्थः स्मारितः। भूलोके देवलोके श्रीसाकेते च भगवदर्चावर्णनात्तस्य त्रिलोकपूज्यतां दर्शयति। पातञ्जलमीश्वरलक्षणमनुसन्धाय भगवन्तं श्रीरामचन्द्रं विशिनष्टि **क्लेशादिभिरस्पृश्य** इति। अत्रादिना कर्मविपाकाशयानां ग्रहणम्। जीवानामिव तद्वश्यत्वन्तुदूरमास्ताम्, तैस्तस्य स्पर्शोऽपि न, यथा सूर्यस्य तमसेति भावः। सर्वेश्वरो भगवान् रामचन्द्रश्शरण्यो .वदान्योऽर्च्य इति **सत्समुदितसुयशाः**। शरणे रक्षणे साधुश्शरण्यः, अनालोचितविशेषाशेषलोकशरण्य इति भावः। एतेन अभयं सर्वभूतेभ्यो ददामि, न त्यजामि कदाचनेत्यादि व्रतं घोषयन्, समाश्रितोऽरिरपि रक्षितव्य इति विधिमुच्चारितवान् प्रपन्नजनतासंरक्षणैकव्रती श्रीराघवः परामृश्यते। **वदान्य** इत्यनेन भगवतः स्मितपूर्वप्रियभाषित्वेन स्वात्मपर्यन्तसर्वस्वदानशीलत्वं सूच्यते। न भगवान् पात्रलाघवमाद्रियते न च देयगौरवम्, प्रभूतं प्रदायापि न तृप्यतीति प्रत्युपकारनिरपेक्षमौदार्यमुपस्थापयति- **वदान्य** इति। एतेन विभीषणाय राज्यदानादेः कथाऽनुसन्धीयते। भगवतो वदान्यशरण्यत्वादिगुणलुब्धहृदयैर्व्यासवाल्मीकिप्रभृतिभिः सद्भिर्गीयमानयशस्कतया याथार्थ्येन पुण्यश्लोकता लभ्यते।पुण्यैरपि श्लोक्यते इति तदर्थात्।अत एव विश्रामस्थानमेकं कविवरव चसामिति

.....................................................पदपरामर्शः.....................................................

युज्यते। वेदा इत्यत्र स्वतो निरवद्यतया तत्र साध्वितिविशेषणं न युज्यते, अतः साधवः सत्पुरुषा वेदाश्चेति द्वन्द्वेन विग्राह्यम्। पुरुषार्थावाप्तये येऽलौकिकमुपायं वेदयन्ति ते, परकार्यसाधनपरा निर्दुष्टाचरणाश्च साधवः तैः सुपूजितवैभवस्य भगवतः स्पृहणीयगुणाकरत्वं प्रतिपाद्यते। वस्तुतः साधुविशेषणं पूर्वभागं व्यावर्त्योत्तरभागीयान् वेदान्तान् बोधयति- एतेनाशेषैः **साधुवेदैरि**ति कथनेन सर्वश्रुतीनां तद्गुणप्रतिपादनपरत्वं विवक्ष्यते। तेन सर्वासां सविशेषविषयत्वमेव निश्चीयते।

एतेन सगुणश्रुतिभिः सविशेष ईश्वरो निर्गुणश्रुतिभिश्च सकलोपाधिविनिर्मुक्तं चिन्मात्रं शुद्धं ब्रह्म प्रतिपाद्यते, किञ्च सगुणनिर्गुणोभयश्रुतीनां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीस्त्वाद्बाधकत्वमिति वदतां मतं प्रत्याख्यातम्, तेषां मिथो विरोधाभावात्।वस्तुतो यथा सद्भिः क्रान्तदर्शिभिर्वाल्मीकि प्रभृतिभिरर्च्यशरण्यवदान्यसूरिमान्येत्यादिशुभगुणबोधकवचोभिर्भगवतो रामचन्द्रस्य महिमा गीयते, स एव वेदैरशेषैर्विकलुष-विजर-विर्मृत्यु-सर्वशक्ति-गीर्मनोऽगम्येत्यादि-शब्दैरभिधीयते। अत्रैष अपहतपाप्मा विजरो विमृत्युरिति च्छान्दोग्यश्रुत्यर्थ उपस्थाप्यते। **सर्वशक्तिरि**त्यनेन परास्य शक्तिर्विविधैव श्रूयत इति श्रुत्यर्थं स्मारयति। **गीर्मनोभ्यामगम्य** इत्यनेन यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुत्यर्थः सन्निधाप्यते। तेन वाङ्मनसापरिच्छेद्यत्वं भगवतो निरूप्यते। इत्थं वैदिकलौकिकशब्दराशिभिर्बहुधा वर्ण्यमानस्य भगवतो मङ्गलसमाख्योच्यते- **श्रीरामचन्द्र** इति। श्रीयोगस्य कादाचित्कत्वव्यावृत्तये **शश्वत्पदम्**। रामचन्द्रेति सञ्ज्ञामहिम्नैव पित्राज्ञापालनाश्रित- रक्षणप्रजारञ्जनाद्यनेकधर्मिष्ठगुणगरिम्णा सर्वलोक-प्रसिद्धं तदेकविषयं पुरुषोत्तमत्वं लभ्यते। रामश्चन्द्र इवेति नामैकदेशेनापि न केवलं सोमोऽस्माकंब्राह्मणानां राजेति श्रुतिसिद्धं ब्राह्मणरञ्जकत्वमुच्यतेऽपितु लोकाह्लादकत्वा-मृतमयत्वादिप्रयुक्तं सर्वसुखदत्वं द्योत्यते, तदुक्तं वाल्मीकिनापि- इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मल इति। किं बहुना रामेति रामचन्द्रेति नाम्नोर्नित्यशुभा-श्रयत्वमनुमाय ऋषिभिस्तद्गुणानुसन्धानेन लोकेऽप्येवमनुशिष्यते- द्व्यक्षरं चतुरक्षरं वा नाम कुर्यात्, कृतं कुर्यान्न तद्धितमिति। अत्र अस्पृश्योऽपि विबुधैरर्च्यः, गीर्मनोभ्यामगम्योऽपि- योगिगम्याङ्घ्रिपद्म इति विरोधाभासालङ्कारः। एवमेव श्रीमत्त्वे वदान्यत्वं, सर्वशक्तित्वे शरण्यत्वं महिमशालित्वे बुधजनानां भक्तानाञ्च समादरभाजनता, सेव्यता नित्यश्रीकत्वेऽपि निरवद्यविग्रहतेति स्पृहणीयगुणानां मणिकाञ्चनसंयोग इव दुर्लभसमवायो भगवत्येव युज्यत इति भावः।

**सञ्जप्यस्तारकाख्यो मनुवर इह तैर्वह्निबीजं यदादौ**
**रामो ङेप्रत्ययान्तो रसमितशुभदस्वक्षरः स्यान्नमोऽन्तः।**
**मन्त्रो रामद्वयाख्यः सकृदितिचरमप्रान्वितो गुह्यगुह्यो**
**भूताक्ष्युत्संख्यवर्णः सुकृतिभिरनिशं मोक्षकामैर्निषेव्यः॥10॥**

........................................................पदपरामर्शः........................................................

*प्रोक्ततत्त्वत्रय उत्कृष्टत्वादीश्वर इष्टदेवताप्रत्ययेन तत्सम्प्रत्ययार्थ स्वाध्यायादिष्टदेवतासम्प्रयोग इति पातञ्जलोक्त्या स्वाध्यायस्य कर्त्तव्यत्वे निश्चिते स्वाध्यायो वेदजपयोरित्युक्तेर्वेदमेव जपेन्नित्यमिति स्मृतेश्च वेदजपस्य विधेयता स्थीयते, स्मर्यते च सर्वाश्रमसाधारण्येन सिद्धिहेतुता जपस्य, जपात्सिद्धिर्वरानने इत्यनेन, उपबृंहितञ्च भगवता यज्ञान्तरेभ्यः प्राशस्त्यं जपयज्ञस्य, यज्ञानां जपयज्ञोऽस्मीति स्वविभूतिवर्णने, अतश्च युज्यते तत्त्वनिरूपणात्परं जपविषयिणी जिज्ञासेति जपनीयं निश्चिनोति-* **सञ्जप्य** *इति। सञ्जप्य इत्यत्र पुरुषप्रवृत्तिपर्यवसायित्वेन पोरदुपधादिति विधिबोधको यत्, प्रमाणान्तराप्राप्तार्थप्रापकत्वेन जप्तव्यो मन्त्रिणेति रामतापनीयश्रुतेः। अतोऽधिकारित्वाय गुरुतो गृहीत मन्त्रराज इति विषयतया सुतरां ज्ञातो भवति। अत्र पूर्वार्धेन षडक्षरमन्त्रराजस्याकार उत्तरार्धेन च मन्त्रद्वयस्य चरममन्त्रस्य चाकारो निर्दिश्यते। रामो मनुवरस्तारकाख्य इत्यत्र मन्त्रमन्त्रार्थयोस्तादात्म्याध्यवसायाभिप्रायेण सामानाधिकरण्यम्। अत एवादौ मन्त्रमभिलक्ष्य सञ्जप्यः, मन्त्रार्थमभिप्रेत्यान्ते निषेव्य इति युज्यते। जापकान् तृतीयान्तैरुपन्यस्यति-* **तैः सुकृतिभिर्मोक्षकामैरिति।** *न भगवत्कृपां विनाचार्यप्राप्तिस्तं विना चास्याधिगतिर्नेति, ये सुकृतिनस्त एव मोक्षकामा भवन्ति, अतः सुकृतिभिरुत्कटमुमुक्षायै मुमुक्षुभिश्च मोक्षाय जप्यो, मन्त्रस्य मोक्षफलपर्यवसायित्वात्। यद्वाक्षरराशिरूपमन्त्रबुद्ध्या सञ्जप्यः साक्षाद्ब्रह्मरूपतया च निषेव्य इत्युभयोरुपादानं शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीत्युक्तेः। संसारसागर-*

--------------------------------संवित्करः--------------------------------

जिसके आदि में वह्निबीज 'रां' है, मध्य में चतुर्थ्यन्त ''रामाय'' पद है तथा अन्त में नमः है, ऐसा परम गोपनीय षडक्षर तारक मन्त्रराज, श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये, श्रीमते रामचन्द्राय नमः इसप्रकार पच्चीस अक्षरों वाले द्वयमन्त्र एवं ''सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥ इस प्रकार बत्तीस अक्षरवाले चरम मन्त्र का जप पुण्यशाली मुमुक्षुओं को सर्वदा करना चाहिये।

**पदपरामर्शः**

समुत्तारणानुगुणसमाख्यामाह- **तारकाख्य** इति। रुद्रस्तारकं ब्रह्म व्याचष्ट इति जाबालश्रुतेरुपदिशाम्यहं काश्यामन्तकाले नृणां श्रुतौ, रामेति तारकं मन्त्रं तमेव विद्धि पार्वतीत्यानन्दरामायणे शिवोक्तेश्च। यथा भगवान् साकेतनाथः सर्वेषामवताराणामवतारी तथैव तदीयोऽयं मन्त्रः सर्वेषां मन्त्राणां मूर्ध्नि स्थित इत्यभिप्रायेणाह- **मनुवर** इति। मन्त्रश्रेष्ठोऽतो मन्त्रराज इति नाम्ना प्रसिद्धः। श्रियो जीवेषु कारुण्यात्तदनुरोधाद् भगवत आरभ्य दिव्यमहर्षिक्रमेण मर्त्यलोकेऽमृतविद्यैवोपलम्भित इति दुर्लभोपलब्धिमाह- **इहेति**। अतोऽत्यादरेण सञ्जप्य इत्यत्र **समा** अङ्गन्यासकरन्यासविनियोग- ध्यानादिविधिपूर्वकत्वं जपस्य विवक्षितम्। एवमेव निषेव्य इत्यत्रापि नियमेन सेव्य इत्यर्थः। मननात्त्राणनाद्भवतु प्रयोगसमवेतार्थस्मारकत्वाद्वा मन्त्रो भवतु, तस्य यथाविधि गुरुमुखोच्चारणानुच्चारणपुरस्सरलभ्यत्व एव यथार्थस्वरूपाधिगतिर्मन्यते, ब्रह्मविद्या- रूपत्वात्। अतश्चोरादिभ्यो दुर्लभमणिरिव परमगोप्य इत्यत्र **गुह्यगुह्य** उक्तो मन्त्रं तु गोपायेद्धीमानित्युक्तेः। गोप्यत्वादेवास्य सर्वत्र यथाश्रुतानुपूर्व्याः प्रकाशोऽयुक्त इति शास्त्रप्रथितपद्धत्याद्यन्तावयवसन्धानेन उपलभ्याकारतयोपलम्भयति- **यदादौ वह्निबीजं ङेप्रत्ययान्तो रामो नमोऽन्तः स्यादिति**। स्यादिति घुणाक्षरन्यास इव साक्षान्नि- र्देशाभावेऽपि पारोक्ष्येण कथनं देवस्य सिद्धप्रकृतिं सूचयति- परोक्षप्रिया हि देवाः प्रत्यक्षद्विष इत्युक्तेः। मन्त्राक्षरपरिमितिमपि तथैव शैल्याभिधत्ते- **रसमितिशुभदस्वक्षर** इति। रसपदं षट्सङ्ख्यापरम् रसनाग्राह्यरसस्य षट्त्वात् न तु काव्यशास्त्रीय- रसानुसन्धानम्। षट्परिमितानि शुभदानि स्वक्षराणि यत्र सः, षडक्षर इत्यर्थः। अक्षरेषु सुष्ठुता दग्धसंयुक्तविकटश्रुतिकटुत्वराहित्यात् अनुनासिकाल्पप्राणतया रसमयत्वेन माधुर्यापारुष्येण सौकुमार्यादर्थपौष्कल्येणौदार्याच्च। असंयुक्तो रेफोऽपि तेजोमयतया कान्तिं माधुर्यञ्चाभिव्यनक्ति, इत्थं नमस्कारगर्भप्रार्थनापरे मन्त्रे तदनुगुणरसा- भिव्यञ्जकवर्णसुयोगात्सुतरां सौष्ठवम्। मन्त्रघटितवर्णानां शुभदत्वन्त्वेतच्छ्लोकसिद्धम्-

मकारो मङ्गलं दत्ते नकारो मोददायकः।
लक्ष्मीं यः पापदाहेन सूते रेफः शुभं सदा।।

रामद्वयाख्यो मन्त्रो भूताक्ष्युत्संख्यवर्णः। भूतपदं पञ्चसङ्ख्यापरमक्षिपदञ्च द्वित्वबोधकम्, वामतो गत्या पञ्चविंशत्यक्षरात्मकं मन्त्रद्वयम्। प्रथमः तच्छरणप्रपदनपरः पञ्चदशवर्णात्मकोऽपरः श्रीमदादिनमोऽन्तो दशवर्णात्मकः। उभयोः रामपदघटितत्वेन

पदपरामर्शः

रामद्वयेत्याख्या प्रोक्ता। तृतीयञ्च मन्त्रं निर्दिशति- सकृदिति। श्रीरामायणे भगवतोक्तं प्रपन्नजनताया अभयदानायोदारघोषणारूपम्। सम्प्रदाये चरममन्त्रत्वेन प्रसिद्धिं सूचयति- **चरमप्रान्वित** इति। चरमपदं चरमोपायपरम्, चरमोपायेन भगवता प्रान्वितः सम्बद्धो बोद्धृबोद्धव्यान्वयेण युक्तः। यद्वा चरमं चरमोपायं प्राति पूरयति चरमप्रो भगवान्, तेनान्वितस्तदुच्चरितत्वात्सम्बद्धो मन्त्रश्चरमप्रान्वित इति। मन्त्रनिषेवणकालमवधारयति- **अनिशमिति**। वस्तुत एतत्कालावधारणं सामीप्याद् द्वयस्यैव, न तु मन्त्रराजस्यापि, तस्य त्वपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचिदित्यादिनारभ्य जपकालावस्थानिषेध-वर्णनात्। कलौ तु मानसजपस्य सर्वावस्थायामनुमतत्वम्, अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि, मन्त्रैकशरणो विद्वान् मनसैव सदाभ्यसेदित्युक्तेः।

**मन्त्राणां व्यापकानां भगवत इह चाव्यापकानान्तु मध्येऽ-**
**तिश्रेष्ठो व्यापकः स श्रुतिमुनिसुमतः शिष्टमुख्यैर्गृहीतः।**
**नित्यानामाश्रयोऽयं परित उरुशुभो राममन्त्रः प्रधानः**
**प्राप्योऽथ प्रापकश्च प्रचुरतरगुणज्ञानशक्त्यादिकानाम्॥11॥**

पदपरामर्शः

वैष्णवमन्त्रेष्वपि श्रीराममन्त्रस्य सोपपत्तिकं प्राधान्यमभिधत्ते- **मन्त्राणामिति**। सर्वेषां शब्दानामीश्वरवाचकतया देवतान्तरमन्त्रोऽपि भगवत एवेत्यभिप्रेत्याह- **भगवत** इति। शरीरभूतपरिच्छिन्नाकारदेवादिप्रतिपादकत्वादव्यापकानां सूर्येन्दुवह्निप्रभृतिदैवतमन्त्राणाम्, सर्वाश्रयभूतविशेष्यब्रह्मवाचकत्वादपरिच्छिन्नाकारसर्वात्मकभगवद्विषयकत्वेन व्यापकानां वैष्णवमन्त्राणाञ्च मध्येऽतिश्रेष्ठो राममन्त्रः प्रधानः, सर्वाधिष्ठानरूपत्वात् सर्वमूलतया परिपूर्णतया च सर्वार्थविभासकत्वाच्च। गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः, वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिक इति तापनीयश्रुतेः। अस्य वेदमूलकत्वमाह- **श्रुतिमुनिसुमतः**-वेदवेदार्थमन्तृजनसमादृत इति। वैदिकत्वेऽप्यन्यथा वैष्णवमन्त्रेष्वपि

संवित्करः

व्यापक एवं अव्यापक दोनों प्रकार के भगवन्मन्त्रों में श्रीराम मन्त्र ही सर्वश्रेष्ठ है। वेदों एवं मुनियों द्वारा सुसम्मत तथा सदाचारसम्पन्न महापुरुषों द्वारा जिसे धारण किया गया है। जो नित्यमुक्त श्रीआञ्जनेयादि भगवत्पार्षदों का आश्रय तथा सर्वमङ्गलप्रदायक मन्त्रों में परम प्रधान है। जो सद्गुरुओं से प्राप्य तथा ज्ञान भक्ति शक्ति आदि भगवद्गुणों के साथ भगवत्स्वरूप को प्राप्त कराने वाला है।

........................................पदपरामर्शः........................................

श्रीराममन्त्रस्य सोपपत्तिकं प्राधान्यमभिधत्ते- **मन्त्राणामिति।** सर्वेषां शब्दानामीश्वर-वाचकतया देवतान्तरमन्त्रोऽपि भगवत एवेत्यभिप्रेत्याह- **भगवत** इति। शरीरभूत-परिच्छिन्नाकारदेवादिप्रतिपादकत्वादव्यापकानां सूर्येन्दुवह्निप्रभृतिदैवतमन्त्राणाम्, सर्वाश्रय-भूतविशेष्यब्रह्मवाचकत्वादपरिच्छन्नाकारसर्वात्मकभगवद्विषयकत्वेन व्यापकानां वैष्णवमन्त्राणाञ्च मध्येऽतिश्रेष्ठो राममन्त्रः प्रधानः, सर्वाधिष्ठानरूपत्वात् सर्वमूलतया परिपूर्णतया च सर्वार्थविभासकत्वाच्च। गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः, वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिक इति तापनीयश्रुतेः। अस्य वेदमूलकत्वमाह- **श्रुतिमुनिसुमतः**-वेदवेदार्थमन्त्रृजनसमादृत इति। वैदिकत्वेऽप्यन्यथाप्रतिपन्नताव्यावर्तये मुनिपदम्।भ्रमप्रमादविप्रलिप्सादिदोषशून्यव्यासवाल्मीकिप्रभृतिमुनिसमवायेन विमर्शपूर्वक-सर्वाविरोधेन सर्वानवद्यतया संस्तुत इत्यर्थः। न केवलं तादृशामत्र सम्मतिरेवापितु शिष्टमूर्धन्यैस्तस्य स्वश्रेयसे सादरं परिग्रहणमपीत्याह- शिष्टमुख्यैर्गृहीत इति। वसिष्ठ-लोमशपराशरप्रभृतिभिः समुपात्तो लोकहिताय समुपदिष्टः। नित्यानां श्रीहनुमदादीनामपि जीवनाश्रयः परमाधारः। परित अरु अधिकं शुभं येन तादृशः सर्वतो मङ्गलाकारः।

आश्रितानामेश्वर्याद्युपलम्भकत्वमपि- स्वत एवानुष्ठातॄणां ज्ञानशक्त्यादिभिः सहानेकगुणलाभो भवतीति। अपेक्षितज्ञानशक्त्यादिलाभोऽनायासेनैव भवति। अत आचार्यादयं लब्धुं योग्यः स्वश्रेयस इति सङ्क्षेपः।

**यावद्वेदार्थगर्भं प्रणवि जगदुदाधारभूतं सविन्दु**
**प्रव्यक्तं रामबीजं श्रुतिमुनिगदितोत्कृष्टषड्व्याप्तिभेदम्।**
**रेफारूढत्रिमूर्तिं प्रचुरतरमहाशक्ति विश्वोन्निदानं**
**शश्वत्संराजते यद्विविधसकलसंभासमानप्रपञ्चम्॥12॥**

........................................पदपरामर्शः........................................

यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः, तथैव रामबीजस्थं जगदेतच्चराचरमिति तापनीयश्रुत्याशयमेव श्लोकात्मनावतारयति- **यावद्वेदार्थगर्भमिति।**

----------------------------------------संवित्करः----------------------------------------

जिसमें सम्पूर्ण वेदार्थ हीं नहीं वरन् वेदसार प्रणव भी समाहित है, जो सकल संसार का परम आधार है, वही बिन्दुसहित रेफ "रां" सम्पूर्ण सृष्टि का मुख्य कारण है। वेदों व मुनिजनों ने जिसकी उत्कृष्टता का निरूपण किया है। नाम रूप लीला धाम गुण एवं मन्त्र नामक छह व्याप्तियों से परिपूर्ण तथा उत्पत्ति स्थिति प्रलयरूप अदम्य महाप्रभावों का आश्रय है। अर्थात् बीज के रेफ पर ब्रह्मा विष्णु महेश नामक त्रिमूर्ति आरूढ हैं। जो जगत्कारण होने के साथ सर्वगोचर नामरूपात्मक जगत् के रूप में प्रकाशित होकर सर्वदा विराजमान हैं।

..........पदपरामर्शः..........

रामबीजं शश्वत्संराजत इति मुख्यांशोऽन्यत्सर्वं रामबीजविशेषणम्। शश्वत्संराजत इति नित्यत्वं गम्यते। यावद्वेदार्थमिति यावदवधारण इति समासः, तद् गर्भे यत्कुक्षौ विद्यत इति याथार्थ्येन बीजधर्मः, सूक्ष्मेऽपि महार्थसन्निवेशात्। वेदप्राणतया प्रसिद्धः प्रणव ओङ्कारोऽप्यत्रैव परिस्फुरतीति मत्वर्थीयान्तः प्रणवि, ओङ्कारप्रभवा वेदा ओङ्कारप्रभवाः स्वराः ओङ्कारप्रभवं सर्वं त्रैलोक्यं सचराचरमित्युक्तसर्वकारणतावत्प्रणवोऽपि तदन्तर्गत इति सर्वकारणमपि क्रोडीकृत्य तिष्ठतीति भावः। यश्चाक्षरत्रयात्मको वेदत्रयसारः प्रणवः सोऽप्यत्र, अकारं चाप्युकारं च मकारं च प्रजापतिः, वेदत्रयान्निरदुहद् भूर्भुवस्सुवरितीति च, भूरिति ऋग्वेदादजायत भुव इति यजुर्वेदात्सुवरिति सामवेदात्, तानि शुक्राण्यतपन्, तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त, अकारोकारमकार इति, तानेकधा समभरत तदेतदोमिति श्रुतेः। न केवलं वेदार्थो वेदप्राणो वापितु यदाधारेणैव सर्वं जगत्तिष्ठति, सत्तास्थितिप्रवृत्त्यादीनामखिलस्याधिष्ठानभूतम्। नाधारमात्रमपितु मुख्यकारणमपि तदेवेत्याह- **विश्वोन्निदानम्** इति। चराचरात्मके जगति कारणत्वादेव उत्कृष्टो षट्व्याप्तिभेदा यदीयाः श्रुतिभिस्तदर्थानुसन्धातृभिर्मुनिभिश्च गद्यन्ते, नामरूपगुणादीनां व्याप्तिभेदतयोक्तेः। अत्र ब्रह्मविष्णुरुद्ररूपिण्यस्त्रिमूर्त्तयो रेफमारुह्य विलसन्ति, वस्तुतो रामिति बीजे द्वयोरकारयोर्मकारस्य त्रिदेववाचकतया रेफाश्रितत्वादेवमुक्तिः, यदेकदेशमाश्रित्य त्रिदेवस्य स्थितिरिति लभ्यते। तच्च बीजं सबिन्दु, बिन्दूपलक्षितम्। मो महाबिन्दुरिति तान्त्रिकोक्तेः। बिदि अवयवे इत्यस्माद् बिन्दति प्रपञ्चयतीति बिन्दुः, तेन सहितो बिन्दुमान् विष्णुरित्युक्तेः। न केवलमेतावदेव, तेषां सर्वविधं विपुलं च सामर्थ्यमप्येतन्मूलमेवेत्याह- **प्रचुरतरमहाशक्ति**। यथा बीजे पुष्पफलाद्युत्पादनसामर्थ्यं तिरोहितं तिष्ठति तथैवास्य प्रचुरतरा महती च शक्तिरस्तीति एतेन बीजानुष्ठानेन तन्मध्यपतितन्यायेन ब्रह्मादिमन्त्रानुष्ठानं तद्युक्तोत्पादनस्थितिविनाश-प्रयोजकशक्त्यनुष्ठानमिच्छाज्ञानक्रियात्मकशक्तिसमाराधनं स्वतो जायते ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसञ्ज्ञक इति श्रुतेः। तदेव रामबीजं स्थावरजङ्ग-मात्मकजगद्रूपेण कार्यात्मना प्रविभागेनाभिव्यज्यते, इत्याह- **प्रव्यक्तमिति**। न केवलं प्रव्यक्तं स्फुटाकारेण प्रतीयतेऽपितु सर्वार्थप्रकाशकत्वादेव भोक्तृभोग्यभोगरूपेणावस्थितं सकलप्रपञ्चं भासयति, तस्य भासा सर्वमिदं विभातीति श्रुतेः। इत्थं बीज एवाविकलं ब्रह्मलक्षणं समन्वितं वाच्यवाचकयोस्तादात्म्यात्।

**तत्राद्येन पदेन रेण भगवान् सीतापतिः प्रोच्यते**
**श्रीरामो जगतां गुणैकनिलयो हेतुश्च संरक्षकः।**
**तच्छेषी पदतोऽप्यतो भगवतोऽनन्यार्हशेषत्वकं**
**व्यावृत्तिस्तु सुरान्तरादिगतसत्तच्छेषताया मुहुः।।13।।**

........................................पदपरामर्शः........................................

*वेदार्थज्ञानस्य प्रशस्त्यानर्थज्ञस्य स्थाणुत्वभारहारित्वादिवचनैर्निन्दनात् यदधीतमविज्ञातं निगदेनैव शब्द्यते, इत्याद्युक्त्या तन्नैयून्यप्रतिपादनादनर्थकं माधिगीष्महीत्यनेनानर्थप्रसक्त्या च मन्त्रार्थज्ञानस्यावश्यविधेयता लभ्यते, योगसूत्रकारेणापि तज्जपस्तदर्थभावनमित्यनेनार्थभावनपूर्वकजपो निरदेशीति मन्त्रार्थज्ञानस्यानिवार्यतां हृदि निधाय मन्त्राक्षरराशेरिव तदर्थस्याप्यधिकारिभ्य एव प्रदेयतां गोपनीयताञ्च द्योतयितुं तदर्थस्य रहस्यनाम्ना व्यवहारः। तदित्थं मन्त्रराजस्य रामिति बीजस्य श्रौतनिर्वचनाधारेण नित्यत्वसमाकलिताखिलनिगमार्थत्व-क्रोडीकृतप्रणवाक्षरत्व-जगत्कारणत्व-जगद्धारकत्व-विपुलार्थविस्तारत्व-वन्दितव्यापकत्व-त्रिमूर्त्याश्रयत्व-निहितानन्तशक्तित्व-सकलार्थविभासकत्वादिकं प्रतिपाद्य प्रस्फुरन्महासारतया पुष्पितफलितप्रतिमण्डितब्रह्माकारतया चाचिन्त्यप्रभाववर्णनेनाखण्डं महावैभवं प्रकाशितम्, इदानीं तदवयवार्थसमुन्निनीषया प्रवर्तते-* **तत्राद्येनेति।** *रेफाकारद्वयमकारा अत्रावयवाः, रेफस्य भगवत्परत्वं मकारस्य जीवपरत्वमकारस्य तु मिथः सम्बन्धबोधकत्वम्, अनन्यार्हशेषत्वेनापि शब्दशक्तिस्वाभाव्याद् व्यावृत्तांशः प्रकाश्यते तदिदमखिलमवयवार्थाविष्कारेणावगमयति। रेण श्रीरामः प्रोच्यते- रमन्ते योगिनो यस्मिन्निति श्रुतेः। राघृ सामर्थ्ये धातो राघते प्रभवति समर्थो वर्तत इति डप्रत्ययान्तो र्, तस्य सर्वसामर्थ्यलक्षणभगवत्तां वदति, रजति, रमयति रसयतीति च सीतापतित्वम्, रचयति रोहति रघ्यतीति जगद्धेतुत्वम्, राजते रुण्टतीत्यादि दीप्तिसौशील्यादिगुणैश्चित्तापहारित्वम्, रक्षतीति रक्षकत्वम्, राति*

--------------------------------संवित्करः--------------------------------

"रां" बीज में र्+आ+म् तीन पद हैं। प्रथम "र्" पद श्रीपदबोध्यश्रीसीता के पति साकेतनाथ उभयविभूतिनायक दिव्यगुणाकर जगत्कारण त्रिभुवनसंरक्षक सर्वशेषी भगवान् श्रीराम का बोध कराता है। मध्यवर्ती पद अकार जीव की अनन्यशेषता तथा अनन्यार्हता का बोध कराता है। इस प्रकार पुनः वही अकार निषेधविधया यह भी सूचित करता है कि मकारवाच्य जीव भगवान् राम के अतिरिक्त किसी अन्य देवता आदि का शेष या भोग्य नहीं है। अर्थात् जीव भगवान् की ही शेषता के अनुरूप होने से उन्हीं का अनन्य सेवक होने योग्य है।

..........पदपरामर्शः..........

*यथेच्छमादत्त उपयुङ्क्त इति यथेष्टविनियोक्तृत्वरूपं शेषित्वञ्चेति वृत्तित एव लभ्यम्। रेणेत्यत्र व्यञ्जनमात्रं विवक्षितम्, प्रत्ययस्थात्कादितिवत्। पश्चाद्वर्तिवर्णबोध्यमाह- **अतोऽपि पदतः**। "शब्दादर्थं प्रतिपद्यामहे" इतिवत्पञ्चम्यर्थेऽपादाने च तसिल् तसिश्च। सम्पूर्णमपि चराचरं जगद् भगवत एवानन्यार्हशेषभूतम्, नान्यस्येति व्यावृत्तिं दर्शयति- **व्यावृत्तिस्त्विति**। मुहुरित्यनेनेतरव्यावर्त्तकत्वादेवैतल्लभ्ये पुनर्निषेध-वाचकाकारेण द्रढयतीति भावः। अनिषेधे पुमान् विष्णावित्युक्तेः। ब्रह्मादिसुरान्तर-निरूपितशेषत्वस्य व्यावृत्त्या भगवन्निरूपितशेषत्वस्य निश्चयः। सत्यन्यस्मिञ् शेषिणि शेषस्य शेषत्वस्वीकारस्यायुक्तत्वात्। यथोक्तम्-*

*रकारार्थो रामः सगुणपरमैश्वर्यजलधि-<br>मकारार्थो जीवः सकलविधकैङ्कर्यनिपुणः।<br>तयोर्मध्याकारो युगलमथसम्बन्धमनयो-<br>रनन्यार्हं ब्रूते त्रिनिगमस्वरूपोऽयमतुलः।।*

*शेषत्वं न केवलं मवाच्यजीवनिष्ठमपितु चेतनाचेतनोभयवाचिजगन्निष्ठमिति नात्र मकारार्थकथनमिति ध्येयम्। अत्र तकारस्तु निसर्गतः सौख्यदायकस्तस्यावृत्त्या वृत्त्यनुप्रासः शब्दालङ्कारः। "आद्येन पदेन रेण", "पदतोऽप्यतो भगवतो" इति प्रथमतृतीयपादयोः समुच्छलत्पदशय्या च हृद्या।*

**पितापुत्रत्वसम्बन्धो जगत्कारणवाचिना।<br>रक्ष्यरक्षकभावश्च रेण रक्षकवाचिना।।14।।<br>शेषशेषित्वसम्बन्धश्चतुर्थ्या लुप्तयोच्यते।<br>भार्याभर्तृत्वसम्बन्धोऽप्यनन्यार्हत्ववाचिना।।15।।<br>अकारेणापि विज्ञेयो मध्यस्थेन महामते।<br>स्वस्वामिभावसम्बन्धो मकारेणाथ कथ्यते।।16।।**

..........पदपरामर्शः..........

*जगद्रचयति, जगद्रक्षतीति जगदुपपदाभ्यां निर्दिष्टधातुभ्यां डप्रत्ययेन*

----------संवित्करः----------

रेफ भगवान् श्रीराम की जगत्कारणता के साथ यह भी बोध कराता है कि जगत्पिता प्रभु के साथ जीव का अनादि पिता-पुत्र का सम्बन्ध है। जगत् के संरक्षक होने के कारण उनसे जीव का रक्ष्यरक्षकभाव रूपी सम्बन्ध भी स्वाभाविक ही है। *बीज में "र्" के आगे वाली चतुर्थीविभक्ति-*

.....................................................पदपरामर्शः.....................................................

तन्निबन्धनेनाभस्यापि टेर्लोपेन जगत्कारणवाची जगद्रक्षकवाची रेफो निष्पद्यते। यो जनयति स एव जनको भवति, स एव लोके पितेत्युच्यते, यश्च पिता भवति स एव रक्षति, पातीति तद्व्युत्पत्तेः। किन्निरूपितं जनकत्वं रक्षकत्वं वेत्याकाङ्क्षायां जन्यस्य रक्ष्यस्य च नियमेनोपस्थितेर्जन्यजनकभावो रक्ष्यरक्षकभावश्च सम्बन्धो मिथो लभ्यते, सम्बन्धस्य हि सम्बन्धिभ्यां भिन्नत्वे सति द्विष्ठत्वे सत्याश्रयतया विशिष्टबुद्धि-नियामकत्वात्। एतेन रेफेणोक्तं सम्बन्धद्वयं लब्धं भवतीति भावः। भगवद्वाचकात् शुद्धव्यञ्जनरूपाद्रेफात्तादर्थ्ये या चतुर्थी,तस्याः सुपां सुलुक्पूर्वसवर्णा-च्छेयाडाड्यायाजाल इति पाणिनीयसूत्रेण च्छान्दसो लोपः, तया लुप्तया चतुर्थ्या द्योत्यं सम्बन्धरूपमर्थमाह- **शेषशेषित्वसम्बन्ध** इति।

यथेष्टविनियोगार्हत्वं शेषत्वम्, यथेष्टविनियोक्तृत्वं शेषित्वमिति। तादृशशेषत्वे शेषः परार्थत्वादिति मीमांसासूत्रे यथा परोद्देश्यप्रवृत्तपुरुषकृतिव्याप्यमेव प्रयाजादीनां यागशेषं, तेन स्वोद्देश्याभावेन स्वार्थाभावः सिद्धस्तथैव भगवतातिशयाधानातिरिक्तस्य स्वार्थस्यात्राभावो विवक्ष्यते, न तेनाचेतनतुल्यतया चेतनत्वमेव व्यर्थमिति। यथोदारस्य परःदुखापनोदनार्थमेव प्रवृत्तिस्तदा तस्मिन् न शेषित्वमव्याप्तम् यतस्तस्य परार्थस्यात्मार्थत्वमेव। यथा एकस्मिन् स्वार्थपरार्थप्रवृत्तयोर्न मिथो विरोधः, दासादेर्वेतनग्रहणादिजन्यस्वसन्तोषार्थं प्रवृत्तावप्यत्यन्तसेवकस्य स्वसन्तोषोऽपि स्वामिसन्तोष एवान्तर्भवतीति स्वार्थं प्रवर्त्तमानोऽपि दासादिः परार्थमेव प्रवर्तते। चेतनस्य जीवस्य स्वार्थप्रवृत्तावपि तदंशस्यानुषङ्गिकतया परमात्मप्रयोजनस्यैव प्राधान्यमिति

-----------------------------संवित्करः:-----------------------------

का छान्दस लुक् (लोप) हो गया है किन्तु उस लुप्त चतुर्थीविभक्ति के द्वारा भगवान् श्रीराम तथा जीव का शेषशेषीभाव सम्बन्ध ज्ञापित होता है अर्थात् यह जीव भगवान् का शेष (स्वेच्छा से विनियोग योग्य) है और भगवान् इसके शेषी (स्वेच्छानुरूप विनियोग करने वाले हैं)। संक्षेपतः जीव भगवान् के लिये ही है इसके अतिरिक्त उसका दूसरा प्रयोजन नहीं। रेफ तथा मकार के मध्य में विद्यमान अकार इसी अनन्यार्हत्व का वाचक है, जिसके द्वारा जीवात्मा एवं परमात्मा के बीच भार्या-भर्तृ (पतिपत्नी) सम्बन्ध ज्ञात होता है अर्थात् सम्पूर्ण जीवसमूह के संरक्षण की योग्यता होने से जीवराशि भार्या तथा पुरुषोत्तम प्रभु श्रीराम सबके एकमात्र भर्त्ता है ऐसा बोधित होता है। ''रां'' बीज के अन्तिम वर्ण ''म्'' से जीवों का प्रभु के साथ स्वस्वामिभाव सम्बन्ध प्रतिपादित होता है अर्थात् जीव प्रभु की स्वाधीन वस्तु है और प्रभु इसके निरुपाधिक स्वामी।

......................................................पदपरामर्शः......................................................

तच्छेषतोपपद्यते। वस्तुतस्तु जीवस्याविवेकदशायां स्वानर्थाद्यर्थप्रवृत्तिदर्शनेन तस्याश्च भगवदर्थत्वे पर्यवसानायोगतः शेषत्वाप्रतीतावपि प्रबोधानन्तरकाले भगवन्मुखोल्लासार्थमेव तेन प्रवृत्तेः शेषत्वोपपतिर्भवतीति, नायं सम्बन्धः कादाचित्को न वा यत्नेनापि नाशयितुं शक्य इत्यनौपाधिकतया यावत्स्वरूपभावीति फलति। यदा स्वात्मनो निरुपाधिकभगवच्छेषत्वं निश्चीयते तदैव स्वभरसमर्पणपूर्वकं तच्चारितार्थ्यं भवति नान्यथा। प्रत्ययवाचकत्वपक्षमनुसन्धायाह- **उच्यत** इति। अन्यथा द्योत्यत इत्येव वदेत्। रेफमकारयोर्मध्यस्थेनानन्यार्हत्ववाचिनाऽकारेण भार्याभर्तृत्वसम्बन्धो विज्ञेय इत्याशयः। अवतीत्यः, अवते "विट्वलोपो दीर्घश्च वा" विटः सर्वलोपे धातोर्वलोपे च कृते "अ" इति सिद्ध्यति, दीर्घविकल्पाद् "आ" इत्यपि। रक्षितव्यास्त्वया राजन् गर्भभूतास्तपोधना इति रामायणोक्त्या जीवा व्यापारनिरपेक्षमप्यवश्यं भरणीया भार्या उच्यन्त इति। बिभर्तीति भरणाद् भगवान् भर्त्तोच्यते पतिं पतीनामिति श्रुतेः। यथा भार्याभर्तृसम्बन्धः शास्त्रकृतो यावद्देहं तथैवायं यावत्स्वरूपं तिष्ठति। यथा भार्यायाः परपुरुषयोगो महते पापाय, तथैव जीवस्यापि भगवद्व्यतिरिक्ते भर्तृत्वबोधो स्वरूपभ्रान्त्यैव जायमानोऽयुक्त एवेत्यनन्यार्हता गम्यते। आदिरन्त्येन सहेतेत्यस्य वृत्त्युक्तार्थवदत्राद्यन्तावयवाभिप्रायेणाकारस्य मध्यस्थत्वमुच्यतेऽन्यथा चतुर्वर्णात्मकतया समसङ्ख्याके बीजेऽकारस्य मध्यस्थत्वं नोपपद्येत। केचन रात्युपादत्ते ददातीति क प्रत्ययपक्षेऽकारान्तरेफाकारमकाररूपत्रिवर्णात्मकेऽकारस्य मध्यस्थत्वमक्लिष्टं साधयन्ति। प्रकृतश्लोकेऽप्येकस्यैवाकारस्यार्थकथनात्त्र्यवयवकत्वं गम्यते। यद्यपि तथा सति श्रुत्युक्तं रेफारूढत्रिमूर्तित्वं न सङ्गच्छेत, तथापि सञ्जातदीर्घाभिप्रायेण तन्मध्यस्थत्वं तस्योपपाद्यम्, तथात्वेऽकारेणापीत्यस्य स्थाने आकारेणेत्येवावक्ष्यात्। **महामत** इति गूढार्थावबोधनसामर्थ्यमनुचिन्त्योक्तम्।

मन्यते, मनुते वेति व्युत्पन्नेन जीववाचिना मकारेणात्र स्वस्वामिभावसम्बन्धः कथ्यते, सर्वस्वामिन ईश्वरस्य जीवेन सह तादृशसम्बन्धस्य निसर्गसिद्धत्वात्। राजपुरुष इत्यादौ स्वस्वामिभावसम्बन्धः क्रियाकारकभावपूर्वक एव, यतो राजा पुरुषाय द्रव्यं ददाति, ततोऽसौ पुरुषस्य स्वामी भवति, अश्रुतापि दानादिक्रियाऽनुमीयते, किन्तु प्रह्लादस्त्वत्र सोपाधिकत्वं निरस्यति-

आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः

.....................................................पदपरामर्शः.....................................................

न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः।
अहन्त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः
नान्यथेहावयोरर्थो राजसेवकयोरिव।।

जीवो भगवतः स्वमिति भगवत्स्वामिकः। भगवतः स्वामित्वमवगमयदन्यथानुपपत्त्या जीवे स्वत्वमवगमयति। इत्थं सर्वत्रान्यानपेक्षया स्वतन्त्रस्वामित्वं भगवतः, तस्य निरपेक्षस्वत्वं जीव इति तात्पर्यमवसीयते। इत्थं श्लोकोक्ताधारेण रामिति बीजेन पञ्च सम्बन्धाः प्रोक्ताः।

**आधाराधेयभावोऽपि ज्ञेयो रामपदेन तु।**
**सेव्यसेवकभावस्तु चतुर्थ्या विनिगद्यते।।17।।**

.....................................................पदपरामर्शः.....................................................

मन्त्रराजस्य बीजाक्षरगतवर्णबोध्यार्थं प्रकाश्य मध्यवर्तिनश्चतुर्थ्यन्तस्य रामायेति पदस्य प्रकृत्यर्थप्रत्ययार्थावधारणायाह- **आधाराधेयभावोऽपीति**। चतुर्थ्यन्तरामायेत्यत्र प्रकृतिभूतेन रामेति पदेनाधाराधेयभावस्तूत्तरवर्तिन्याः श्रूयमाणायाश्चतुर्थीविभक्तेश्च सेव्यसेवकभावो विनिगद्यते। आधाराधेयभावस्य प्रकृत्यर्थत्वे एष सेतुर्विधरणः, यत्प्रयन्त्यभिसंविशन्तीत्यादिश्रुतयः, यस्मिंश्च प्रलयं यान्ति, यस्मिन्निदं यतश्चेदमिति स्मृतिवचांसि, रमन्ते योगिनो यस्मिन्नित्यधिकरणसाधनविवृतिश्च प्रमाणम्। एतेन भगवतः सर्वाधारता तद्व्यतिरिक्तस्य च चराचरस्याधेयता प्रतिपाद्यते, यद्यपि भगवान् सर्वाधारस्तथाप्याधारस्याधेयतां प्रति साकाङ्क्षतया जगन्निष्ठाधेयतानिरूपिताधारता भगवन्निष्ठेति विवक्षिता चिदचितोर्नियताधेयत्वं स्वसत्ताव्यापकाधेयत्वमित्यर्थः, तेनाधेयत्वे सति चेतनत्वमिति जीवलक्षणं फलति आधेयत्वादेः लक्षणत्वकथनेन जीवस्य ब्रह्मशरीरत्वसिद्धिर्भवति। आधेयत्वसम्बन्धनियमात् कदाचिदाधेयत्वादिमतो

-------------------------------संवित्करः-------------------------------

तारक मन्त्रराज का मध्यम पद "रामाय" है, उसके प्रकृतिभूत राम पद के द्वारा सकल विश्व के आधारस्वरूप श्रीराम का जीवों के साथ आधाराधेय भाव सम्बन्ध प्रोक्त होता है अर्थात् चराचर विश्व आधेय एवं विश्वेश्वर प्रभु श्रीराम सबके आधार है ऐसा बोधित होता है। प्रकृतिबोध्य सम्बन्ध समझाकर ङे प्रत्यय (आय) के द्वारा नित्य सेव्यसेवकभाव सम्बन्ध सूचित किया गया है। अर्थात् जीवराशि सेवक एवं प्रभु श्रीराम नित्यसेव्य है। इस प्रकार का उभयनिष्ठ सम्बन्ध चतुर्थी द्वारा प्रतिपादित होता है।

.................................................पदपरामर्शः.................................................

घटपुत्रादेर्भूतलपित्रादिकं प्रति शरीरत्वव्युदासः। यत् यत् प्रति नियताधेयत्वादिमद् द्रव्यम् तत्तत्प्रतिशरीरमिति भावः। रामपदेन भगवत आधारत्वं जीवस्य चाधेयत्वमुपपाद्य रामपदोत्तरचतुर्थ्या जीवस्य विधेयत्वं सेवकत्वं कथ्यते- व्यत्ययो बहुलमिति- षष्ठ्यर्थे चतुर्थीस्वीकारात् सेव्यसेवकभावार्थोपपादनं सुकरम्। श्रीरामः सेव्यस्तद्व्यतिरिक्तः सर्वोऽपि जीवनिकरः सेवको। न हि तथाविधे सेव्ये सति सेव्यान्तरं सम्भवतीति भावः। स्वस्वामिभावसम्बन्धे स्वत्वं चेतनाचेतनसाधारणं किन्तु सेव्यसेवकभावस्तु चेतनैकनिष्ठ इति विशेषः, जुष्टस्ततस्तेनामृतत्वमेतीति श्रुतेः।

**नमःपदेनाखण्डेन त्वात्मात्मीयत्वमुच्यते।**
**षष्ठ्यन्तेन मकारेण भोग्यभोक्तृत्वमप्युत॥18॥**

.................................................पदपरामर्शः.................................................

नम इति पदमखण्डं सखण्डमिति द्विविधम्, तत्राखण्डेन नमःपदेनात्मात्मीयत्वं निरूप्यते, न मः इत्याकारेण सखण्डस्य च पुनश्चरमेन षष्ठ्यन्तेन मकारेण भोग्यभोक्तृत्वमुच्यते। अस्यायमाशयः- नम इति निपातः। नमनं नम इत्यत्र णम् प्रह्वीभावे इत्यतः सर्वधातुभ्योऽसुन्नित्यसुन्। नमनञ्च महत्तमे परस्मिन् युज्यते, स च नमनीय आत्मैवेत्यात्मात्मीयभावः फलति। तस्मादात्मा महान्परः, अधोक्षजो मे नमसा विधीयत इति भागवतोक्तेः। सखण्डपक्षे मीयते भुङ्क्त इति डे मो भगवान्, अत्ता चराचरग्रहणात्, भोक्ता च प्रमुखे चेतुक्तेः। यद्वा मानयत्याराधयतीति मः, रसमयत्वेनास्वाद्यतया भोग्यत्वं भगवतः, आस्वादयितृत्वेन भोक्तृत्वं जीवस्येति भावः तयोरन्यः पिप्पलं स्वाद्वत्तीति श्रुतेः।

भोक्तृत्वं भोगाश्रयत्वं, भोगश्चानुकूलतया प्रतिकूलतया वा कस्यचिदनुभवः। इत्थमात्मेश्वर आत्मीयं शेषभूतं तदतिरिक्तं सर्वं तन्नियम्यत्वात्। जीवस्य स्वाधीन-

------------------------------संवित्करः------------------------------

मन्त्रराज का अन्तिम अवयव नमः सखण्ड एवं अखण्ड भेद से दो प्रकार का विवेचित हुआ है। अखण्ड नमः पद से जीवात्मा एवं परमात्मा के मध्य आत्मात्मीय सम्बन्ध बताया जाता है अर्थात् श्रीराम सकल जीवों की आत्मा हैं तथा जीवसमूह उनका आत्मीय। सखण्ड पक्ष में (न+मः) षष्ठ्यन्त मकार से भोक्तृभोग्यभाव सम्बन्ध प्रतिपादित होता है। अर्थात् चेतनाचेतनरूप विश्व प्रभु का भोग्य है तथा परमप्रभु श्रीराम इसके भोक्ता।

........................................पदपरामर्शः........................................

भोक्तृत्वं भ्रान्तिसिद्धमिति तस्य स्वतन्त्रतया पापपुण्यफलभोक्तृत्वं नास्तीति। स्वातन्त्र्यं नाम स्वेच्छानुविधायिप्रवृत्तिशीलत्वम्, वायूदकप्रेरिततृणादिवत् परेच्छया प्रवर्तमानत्वं परतन्त्र्यम्। जीवो यथाकामं दृष्टार्थकृष्यादिषु प्रवृत्तिम् अदृष्टार्थ यागादिषु च प्रवृत्ति करोतीति तस्य स्वातन्त्र्यमेव। सर्वप्रकाशको भगवान् स्वप्रशासितृत्वसिद्धये चेतनाचेतनात्मके जगति भोग्यत्वमचेतनेषु भोक्तृत्वं चेतनेषु तदनुगुणज्ञानशक्त्यादिकञ्च सङ्कल्प्य विहरति तदनु जीवश्च भगवत्प्रदत्तज्ञानतया हिताहितमवधार्य भगवदाहितशक्त्या यथाप्रतिपत्ति तत्र तत्र प्रवर्तते, इत्थं जीवस्य भोक्तृत्वस्येश्वर-सङ्कल्पायत्तमेव। ईश्वराधीनप्रवृत्तित्वे यथा निगडितपुरुषे धावनादेशवत् स्वातन्त्र्यहानेस्तं प्रति शास्त्रीयविधिनिषेधसाफल्यं कथं भवेत्तत्रेदमुच्यते- यथा गमनादौ शरीरेन्द्रि-यादृष्टग्रामाद्यनेकपदार्थसापेक्षत्वेऽपि न जीवस्य विधेयत्वे विरोधस्तथैव दैवञ्चैवात्र पञ्चममित्युक्तेरीश्वरसापेक्षत्वेऽपि न विरोधः। स्वतन्त्रस्यापि भगवतो रामस्य जीवप्रवृत्तिं प्रतिं प्रत्यक्षप्रतिबन्धकाभावान्न निगडनतुल्यता। लोकेऽनन्याधीन-स्वव्यापारवत्त्वं कर्तृत्वं प्रसिद्धमिति कथमीश्वराधीनजीवस्य पुण्यपापकर्तृत्वं तत्फल-भोक्तृत्वं चेति तत्रोच्यते क्रियाजन्यफलशालितया कर्त्रभिप्रेतत्वमेव कर्मत्वं यथा तथैव कर्तृत्वं समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारवत्त्वमिति निर्णीतम्। सेवकः काष्ठैः स्थाल्यामोदनं पचतीत्यत्र सेवकस्य स्वामीच्छाधीन-प्रवृत्तिमतोऽपि समभिव्याहृतपाकक्रियाकारकान्तरकाष्ठादिव्यापाराधीनप्रवृत्तिमत्त्वाभावेऽपि पाकक्रियाकर्तृत्वमुच्यते, न हि सेवकस्य पाके स्थितं स्वातन्त्र्यं स्वामिपारतन्त्र्यविरोधि, न हि स्वामी पाकक्रियाकारकान्तरम्, येन तत्पारतन्त्र्यं सेवकस्य पाकक्रियास्वातन्त्र्यं विहन्यात्।। भगवता जीवः कर्म करोतीति प्रयोगदर्शनाद्भगवतः करणतया तदधीनस्य जीवस्य कथं तत्क्रियाकर्तृत्वमिति तत्रोच्यते- साधकतमं करणमिति सूत्रे तमपा प्रकर्षत्वलाभाद् भगवतः साधारणकारणतया जीवकर्तृकक्रियायां न करणत्वम्, उक्तप्रयोगस्तु हेतुतृतीयया साध्यः, हेतुतृतीयाया अकारकविभक्तितया न तदर्थः कारकमिति भावः।

**ज्ञानानन्दस्वरूपोऽवगतिसुखगुणे मेन वेद्योऽणुमानो**
**देहादेरप्यपूर्वो विविदितविविधस्तत्प्रियस्तत्सहायः।**
**नित्यो जीवस्तृतीयेन तु खलु पदतः प्रोच्यते स्वप्रकाशो**
**जिज्ञासूनां सदेत्थं शुभनतिसुमते! शास्त्रवित्सज्जनानाम्॥19॥**

..........................................................पदपरामर्शः..........................................................

*मकारवाच्यस्य जीवस्य नवभिर्विशेषणैः सिद्धान्तसम्मतं स्वरूपमाविष्करोति-* ***ज्ञानानन्दस्वरूप*** *इति। हे शुभनतिसुमते, तृतीयेन येन पदतो जीवः प्रोच्यते, यो जीवो जिज्ञासूनां शास्त्रवित्सज्जनानां सदेत्थं पूर्वोक्तविशेषणबोध्याकारो वेद्य इति वाक्ययोजना। शुभे नतिर्यस्य, सुष्ठु शोभना मतिर्यस्येति शुभनतिश्चासौ सुमतिस्तत्सम्बुद्धौ* ***शुभनतिसुमते।*** *यद्वा शुभनत्या सुमतिर्यस्य तत्सम्बुद्धौ शुभनतिसुमते। पूर्वेण विनयविवेकसम्पत्प्रकाश्यते, नत्याभिमानशून्यता स मत्या च जाड्यशून्यता, द्वितीयेन च भगवद्भागवतवन्दनपरायणस्य स्वयं सद्बुद्धिर्भवतीत्यर्थतः सिद्ध्या सदाचारस्य ज्ञानपर्यवसायित्वं बोध्यते, यथा चाह श्रुतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इति। तेनाचारे परिणतं ज्ञानं बिभ्राणस्य श्रीसुरसुरानन्दाचार्यस्य सच्छिष्यलक्षणं द्योतयित्वोपदेश-पात्रतोन्नीयते। तृतीयेन मेन पदत इत्यत्र पदपदात्तृतीयार्थे सार्वविभक्तिकस्तसिः, पदेनेत्यर्थः। मेन जीवः प्रोच्यते, मकारार्थो जीवः सकलविधकैङ्कर्यनिपुण इत्युक्तेर्मनुत इति व्युत्पत्तेश्च। स च जीवः क्षेत्रज्ञो ज्ञानानन्दस्वरूपः, ज्ञानमानन्दश्च स्वरूपं यस्य तथाभूतः, न केवलं ज्ञानानन्दस्वरूपोऽपितु ज्ञानानन्दगुणकोऽपीति। अवगतिर्ज्ञानं सुखमानन्दः। अवगतिसुखे गुणौ यस्य, तादृशः। उभयोरुपादानाद् धर्मधर्मिभावः सिद्धः। स्वरूपभूतं ज्ञानं, धर्मभूतं ज्ञानञ्चेति विवक्ष्यते। अहं जानामीत्यबाधित-प्रत्यक्षेणात्मनोऽहमर्थत्वम्, अत्रायं पुरुषः स्वयञ्ज्योतिर्न विज्ञातुर्विलोपेर्विपरिलोपो विद्यत इति श्रुत्यात्मनो ज्ञानस्वरूपतापि। ज्ञानस्य द्रव्यत्वाङ्गीकारेण ज्ञानस्वरूपस्याप्यात्मनो ज्ञानगुणकत्वे न गुणे गुणानङ्गीकारसिद्धान्तविरोधः, सुषुप्तावप्यत्मानुभवो विद्यत एव, एतावन्तं कालं सुखमहमस्वाप्सम् इति सुप्तोत्थितस्य परामर्शात्। सुषुप्तिकाले*

----------------------------------संवित्करः----------------------------------

हे विनयविवेकसम्पन्न सुरसुरानन्द! मन्त्रराज के तृतीयपद ''नमः'' के मकार का अर्थ जीव है, जो ज्ञानस्वरूप भी है तथा ज्ञानगुणवान् भी, आनन्दस्वरूप भी है तथा आनन्दगुणवान् भी। अत्यन्त सूक्ष्म होने से अणु परिमाण है, वह देहेन्द्रिय मन बुद्धि आदि से भिन्न एवं विलक्षण, बद्धमुक्तनित्यादि अनेक भेदों वाला है, वह नित्य एवं स्वयम्प्रकाश रूप भगवत्प्रिय है, भगवदात्मक है। इस प्रकार शास्त्रज्ञ मनीषी मकारवाच्य जीव का स्वरूप बताते हैं।

...........................................पदपरामर्शः...........................................

तद्व्यवहाराभावस्तु तदानीं धर्मभूतज्ञाविकासाभावादप्युपपद्यते। प्रत्यक्त्वैकत्वानुकूलत्व-विशिष्टतयात्मनः स्वरूपेण सर्वदा भानं भवति, नित्यत्वाणुत्वादिधर्मविशिष्टतयात्मनः सुषुप्तिभिन्नकाले धर्मभूतज्ञानेन भानमित्याशयः। अत्र केचन यद्यात्मा स्वरूपातिरिक्तेन धर्मभूतज्ञानेनापि भासेत तदा तस्यापि घटादिवज्जडत्वापत्त्या स्वयम्प्रकाशता न स्यात्, अनन्याधीनप्रकाशत्वस्यैव स्वयम्प्रकाशत्वरूपादिति, अत्रोच्यते- नित्यत्वाणुत्वादिना केनचिदाकारेण धर्मभूतज्ञानेन वेद्यत्वेऽपि प्रत्यक्त्वैकत्वादिनाकारान्तरेण तन्निरपेक्ष-प्रकाशत्वमप्यस्तीत्याकारभेदेनोभयोपपादनं कर्तव्यमिति नानयोरन्योन्यप्रतिक्षेपकत्वम्। घटमहं जानामीति त्रिपुटीसाक्षात्कारे मातृमेययोरिव मितेरपि भानात् तस्या अपि विषयप्रकाशनवेलायां स्वाश्रयपुरुषाय स्वयम्प्रकाशत्वमुपेयम्, सा च वेला वर्तमानावस्थैव ततश्च तस्या एव मितेः कालान्तरे ज्ञानान्तरवेद्यत्वमप्यविरुद्धम्। धर्मज्ञानस्य विषयप्रकाशनकाल एव स्वयम्प्रकाशतोक्त्या, बद्धस्य च कदाचिदेव विषयप्रकाशो भवतीति तदीयधर्मभूतज्ञानस्य सङ्कोचविकासः सिद्ध्यति, धर्मिणस्तु सदा स्वयम्प्रकाशत्वान्न सङ्कोचादिरिति भेदः। एतेन निर्गुणत्वान्न चिद्धर्मेति, ज्ञानं नैवात्मनो धर्मो न गुणो वा कदाचनेत्यादि वदन्तः साङ्ख्यादयः प्रत्याख्याताः। किञ्च विज्ञानघन एवेत्यत्रैवकारेण ज्ञानगुणकत्वव्युदास इति व्याचक्षाणा निराकृताः। वस्तुतस्तत्रैवकारो घनशब्दोक्तनैरन्तर्यस्य जडांशमिश्रत्वं व्यावर्तयति।

यत्तु सुखादेरात्मधर्मत्वेनान्यत्रापि सुखाद्युत्पत्तिस्थले तत्सत्त्वमावश्यकमिति तस्य सर्वगतत्वेन विभुत्वमवर्जनीयम्, नित्यः सर्वगतः स्थाणुरिति गीतोक्तेरिति वदतां मते प्रतिक्षिपन्नाह- **अणुमान** इति। अणुर्मानं परिमाणं यस्य सोऽणुमानो जीव इत्यर्थः। जीवस्याणुत्वं साक्षादेव श्रूयते- एषोऽणुरात्मा चेतसा वेदितव्य इति। श्रुतिरियमीश्वराणुत्ववत्सौक्ष्म्यादिपरतया न नेया, बालाग्रशतभागस्येत्यादिनाणुसदृशं किञ्चिद्वस्तूदाहृत्याणुत्व- प्रतिपादनात्तत्रैव तात्पर्यस्य दृढीकरणाय। यद्यपि जीवात्मनो न सर्वशरीरव्याप्तिस्तथापि तद्धर्मभूतज्ञानस्य सर्वशरीरव्याप्त्या युगपदनेकविषयानुभवः सिद्ध्यति। उत्क्रान्त्यादिश्रवणादप्ययमणुस्तद्यथा- उत्क्रान्तिस्तावच्छ्रूयते- तेन प्रद्योतेनैष आत्मा निष्क्रामपि चक्षुषो वा मूर्धनो वा अन्येभ्यो वा शरीरदेशेभ्यः, गतिरपि श्रूयते- ये चैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति। आगतिरपि श्रूयते- तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मण इति। विभुत्वे ह्येत उत्क्रान्त्यादयो नोपपद्येरन्।

........................................................पदपरामर्शः........................................................

नित्यः सर्वगतः स्थाणुरित्यादौ प्रकरणस्य जीवविभुत्वे तात्पर्यानिश्चयादेकैकस्य जीवस्य सर्वत्रानुप्रवेशयोग्यत्वादिकमेव तत्र विवक्षितम्। अटन्नपि मही कृत्स्नामिति स्मृत्याऽहं गच्छामीति स्वानुभवञ्चानुसृत्यञ्च तथोपपत्तेः भोक्तृविशेषविषयकप्रसादादिरूपादृष्टवत् सर्वगतेश्वरसंयोगस्य तत्र तत्राक्षततया भोक्तुस्तत्रतत्रासन्निधानेऽपि भोग्यपदार्थोत्पत्तेर्न हानिरिति भावः। यथा तत्र तत्र शरीरवत् तत्प्रत्युप्तात्मगमनस्यापि सिद्धौ तत एव शरीरस्येव तस्य विभुत्वमनपेक्षितम्। प्रदीपवदावेशमाह सूत्रमपि- तदर्थस्तु एकदेशे स्थितस्याप्यात्मनः सर्वशरीरेष्वपि चैतन्यद्वारानुप्रवेशो नानुपपन्नः प्रदीपवत्- एकदेशस्थस्यापि प्रदीपस्य यथा प्रभया देशान्तरेषु व्याप्तिस्तद्वत्। एतेनात्मविभुत्ववादो निरस्तः। अयज्जीवो देहेन्द्रियमनःप्राणादिभ्यो विलक्षण इत्याह- **देहादेरप्यपूर्व** इति। इदं शरीरमिति शरीरविषयिणी मतिः पराग्वृत्तिः, अहं जानामीति प्रत्यग्वृत्तिरहमिति मतिः सा चेदङ्कारगोचराद्भिन्नमेव स्वविषयमुपस्थापयति। किञ्च चैतन्यमपि देहे नोपपद्यते कार्यद्रव्यगतविशेषगुणानां कारणगुणपूर्वकत्वात्। अनुमानेनापि देहस्यानात्मत्वं सिद्ध्यति। तथा चोक्तम्-

उत्पत्तिमत्वात्परार्थ्यात्सन्निवेशविशेषतः।<br>
रूपादिमत्वाद्भूतत्वाद्देहो नात्मा घटादिवत्।।<br>
सच्छिद्रत्वाददेहित्वाद् देहत्वान्मृतदेहवत्।

चक्षुषा पश्यामीत्यादिप्रतीतिविरोधाद् द्रष्ट्रादिश्चक्षुरादिभ्यो भिन्न एव प्रतीयते। किञ्चेन्द्रियाणां प्रत्येकं चेतनत्वं सम्भूय वा, प्रत्येकचेतनत्वे इन्द्रियान्तर-दृष्टस्येन्द्रियान्तरेण प्रतिसन्धानाभावाप्रसङ्गः, तच्च भवति- यमहमद्राक्षं तमहं स्पृशामीति। न चेन्द्रियसमूहश्चेतनो न हि पञ्चभिरिन्द्रियैः सम्भूयैकं वस्त्वनुभूयते-ऽनुसन्धीयते वा। किञ्चेन्द्रियविगमे मरणप्रसङ्ग इति नेन्द्रियाणि जीवः। मनसोऽप्यजीवत्वम्- मनसो ज्ञानकरणत्वप्रतीतेः। सुखानि संवेदनानि करणवन्ति क्रियात्वात् रूपादिज्ञानवत् इत्यनुमानमपि प्रमाणम्, तदेवं ज्ञानकरणतयावगतस्य मनसः कथमिव ज्ञाने कर्तृत्वम्। प्राणोऽपि न जीवो मम प्राणा इति व्यतिरेकोक्तेः, किञ्च प्राणो न जीवो वायुत्वाद् बाह्यवायुवदित्युनुमानेनापि तदनात्मत्वप्रत्ययः। संविदः स्वयम्प्रकाशत्वात्तस्या एवात्मत्वमित्यपि न युक्तम्, स्वयम्प्रकाशकत्वं हि नात्मत्त्वस्य व्याप्यं किन्तु व्यापकम्, लाघवमप्यप्रयोजकम्, न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति

पदपरामर्शः

श्रुतौ संवित्तद्वतोः पृथगूदर्शनात्। किञ्च संविदो जीवत्वे पूर्वेद्युर्दृष्टमपरेद्युरहमदर्शमिति कथमिव प्रत्यभिजानीयादित्थं जीवो देहादितो नितान्तं विलक्षण एवेति स्थितम्। एकजीववादं प्रत्याख्यातुमाह- **विविदितविविध** इति। उपपादितभेदतयानेक इत्यर्थः। जीवः प्रतिशरीरं भिद्यते, अत एव कस्यचित्सुखित्वकालेऽन्यस्य दुःखित्वं दृश्यते, देहभेदस्तु न तन्नियामकः सौभरिशरीरे तददर्शनात्। किञ्च सुखदुःखयोरेकाश्रयत्व उभयप्रतिसन्धानमेकस्यैव स्यात्। वामदेवो मुक्त इति श्रुत्यैकस्मिन्मुक्ते सर्वेऽपि मुक्ताः स्युस्तथात्वे संसारोच्छेदापत्तिः। जीवैक्ये न बन्धमोक्षव्यवस्था स्यान्न वा शिष्याचार्यव्यवस्था भवेत्। देवतिर्यङ्मनुष्यादिभेदेन विषयसृष्टिश्च नोपपद्येत। चैत्रात्मा मैत्रतादात्म्यरहितस्तदनुभवजन्यस्मृत्यनाधारत्वात् कदाचिदपि तद्गतसुखादिप्रतिसन्धान-रहिताद्वेति प्रयोगोऽपि मानम्। नित्यो नित्यानां चेतनश्चेतनानामित्यादिश्रुतिरपि प्रमाणम्। अतएवेश्वरकृष्णेन जननमरणकरणानामिति कारिकामुत्थाप्य जीवानेकत्वं साधितम्। अत्र तु बद्धा मुक्ता नित्याश्च सर्वेऽप्यनेकधा विभक्ताः।

स भगवान् राम आत्मत्वेनानन्दमयत्वात्प्रियः प्रेष्ठो यस्य स **तत्प्रियः**। आनन्दो ब्रह्मेति व्यजानात्, एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मेति गोपीजनोक्तेश्च। न केवलं जीव एव तं प्रीणाति, सोऽपीति बोधयितुमाह- **तत्सहाय** इति। भगवानेव सहायोऽनुकूलबुद्धिसामार्थ्यादिदानेन सत्प्रेरणयोपकारको यस्य स तत्सहायः। साधु कर्म कारयतीति श्रुतेः, ददामि बुद्धियोगं तं येन मामुपयान्ति त इति स्मृतेश्च। प्रियकृत्प्रीतिवर्धन इति सहस्रनामोक्तेश्च। नरकादिष्वपि स्वशरीरेण जीवात्मना सहायत अन्तर्यामीति भगवान् सहायः प्रोच्यते। अतो यत्र देवा अपि मनुष्यगन्धमसहमाना छर्दनपूर्वकं कुत्सयन्तो योजनादुपरि स्थित्वा हरिराददते, भगवांस्तु मर्त्यलोके कौसल्यागर्भे वर्षमवस्थाय जात इत्यहो सहिष्णुत्वकाष्ठेत्यवर्णि भूषणकारेण। भगवान् सहायः सखा यस्य, सयुजा सखाया इति श्रुतेः, सुहृदं सर्वभूतानामिति स्मृतेश्च। यद्वा परोपकारव्यसनी भगवान् सहायोऽनुपकारिण्यपि किमस्य भविष्यति किं करवाणीति शुभाशंसी शोभनहृदयो भवति। यद्वा सहायते सहायः सहचरः सेवक इति। तस्य भगवतः स्वरूपत एव सहचरः सेवको भवति जीवः।

**पदपरामर्शः**

विज्ञानात्मवादिनामात्मक्षणिकत्वं प्राणेन्द्रियात्मवादिनामाशरीरस्थायित्वञ्च प्रत्याख्यातुमाह– **नित्य** इति। जीवो नित्यो नत्वनित्यः, पूर्वानुभूतार्थप्रतिसन्धानात्, न जायते म्रियते, ज्ञाज्ञौ द्वावजवीशानीशौ, इत्यादिश्रुतेरजो नित्य इति स्मृतेश्च। देहात्मवादे जन्मान्तराभावेनाकृताभ्यागमकृतविप्रणाशदोषप्रसङ्गः। जातमात्रो जन्तुः स्तन्यादि-वाञ्छायुक्तस्तदर्थप्रवृत्त्या निश्चीयते, तदवस्थस्य च रागादयो जन्मान्तरीय-संस्कारोदयमन्तरेण न युज्यन्ते। आत्मानमुत्तरकालानवस्थायिनं मन्यमानो न किञ्चिदुद्दिश्य प्रवर्तेत, प्रवृतिर्हि खलूत्तरकाले सुखं दुःखनिवृत्तिं वानुसन्धायैव भवति सा कथं घटेत, फलकाले स्वाभावात्, स्वकाले फलाभावात्। पारलौकिकं फलमभिसन्धाय यज्ञादौ प्रवृतिर्न स्यात्। जीवस्य ज्ञानरूपतया सुषुप्त्यादौ तस्य नाशो भवतीति तस्य नित्यत्वं नेति वक्तुं न शक्यते य एवाहं सुषुप्तः स एवाहं प्रबुद्ध इति प्रत्यभिज्ञाप्रत्यक्षेण पूर्वापरकालयोरात्मानुवृत्तिलाभान्नसुषुप्तावप्यात्मनाशः। दश्च प्राणेन्द्रि-यादिष्वन्यतमस्यात्मनो देहेन सह विनाशदर्शनान्न देहान्तरप्राप्तिं वदति तं प्रति भगवान् गौतम आह– वीतरागेति सूत्रेण। सरागस्यैव जन्मदर्शनादुत्तरजन्महेतुभूतो रागः पूर्वजन्म-न्यावश्यक इति तयोरेकात्मानुवृत्तिरावश्यकीति नात्मनो देहावधिकत्वं युक्तियुक्तम्। यदि जीवोऽनित्यः स्यात्तदा मोक्षमार्गोपदेशानर्थक्यं स्यात्। यथोक्तम्–

अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः।।

यच्च विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यतीति जीवविनाशः श्रूयते, तच्च लोकधीरूढानुवादमात्रम्। पुनश्च जीवो विशेषणविधया निरूप्यते– **स्वप्रकाश** इति। स्वयम्प्रकाशत्वमनन्याधीनप्रकाशत्वमिति यावत्। इदमेव तस्यासङ्गत्वम् अत्रायं पुरुषः स्वयञ्ज्योतिर्भवतीति श्रुतेः। जीवः स्वयम्प्रकाशो ज्ञानत्वाद्धर्मभूतज्ञान-वदित्यनुमानप्रकारः। ज्ञानाणुत्वामलत्वादयस्तस्य स्वरूपनिरूपकधर्माः, परस्य तु ज्ञान-विषयतयैव प्रकाशते, स्वस्यापि प्रमाणान्तरोक्ताणुत्वशेषत्वनियम्यत्वादिविशिष्टरूपेण ज्ञानविषयत्वमस्त्येव। शास्त्रवित्सु सज्जनानां जिज्ञासूनां सदेत्थं जीवो वेद्यः, शास्त्रं विज्ञायापि ये स्वदुरभिसन्धिना युक्तास्ते कामं नेत्थं विदन्तु किन्तु ये शास्त्रविदः सन्तः सज्जनास्तेषामित्थमेव जीवो वेद्य इति भावः। जिज्ञासुपदेन विषयप्राशस्त्याद् बुद्धिशौचं द्योतयित्वा तत्त्वज्ञानाधिकारः प्रकाशितः। शास्त्रविदित्यनेन स्वरूपयोग्यता, सज्जनपदेन

.......................................................पदपरामर्शः.......................................................

च कापट्यविरहात्पात्रता सूचिता, तेन जिज्ञासाच्छलेन बुद्धिपरीक्षण- विजिगीषादिदोषान् निरस्य बुद्धिनैर्मल्यं द्योतितम्। यतस्ते शास्त्रविदोऽतस्ते सज्जना अतस्ते सर्वदा जिज्ञासवो भवन्ति, तादृशानां वेद्यः। जिज्ञासुत्वं त्वयि प्रश्नकरणात्सुतरामेव सिद्धम् सज्जनत्वं शास्त्रवित्त्वञ्च सम्बुद्ध्यैव प्रकाश्यते- **शुभनतिसुमत** इति।

**मवाच्योऽहं रवाच्याय शेषभूतोऽस्मि सर्वदा।**
**इतीत्थमेव बोध्यो ज्ञैर्वाक्यार्थस्तद्विवित्सया।।20।।**

.......................................................पदपरामर्शः.......................................................

रवाच्यो भगवान् मवाच्यो जीव इत्यादिरीत्या ज्ञातवृत्तिकस्यैव शाब्दबोधो भवतीति पदपदाथोपस्थितौ बीजवाक्यार्थं निष्कृष्योपस्थापयति- **मवाच्योऽहमिति।** अहञ्जीवो मपदवाच्यो रपदवाच्याय भगवते रेफाव्यवहितोत्तरलुप्तचतुर्थी-बोध्यशेषशेषिसम्बन्धतया शेषभूतः सर्वदास्मीति बीजाक्षरस्य फलितार्थः, शेषशेषिभावस्य सम्बन्धत्वेऽपि तादर्थ्ये चतुर्थी वाच्येति चतुर्थी मुक्तये हरिं भजति, ब्राह्मणाय दधि, यूपाय दारु, इतिवत् साक्षात्परम्परया वा स एवार्थस्तदर्थस्तद्-भावस्तादर्थ्यं, तत्र ष्यञ्। ष्यञा सम्बन्धोऽभिधीयते, कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन। अत्रापि षष्ठीवत् सम्बन्धप्रतियोगिवाचकादेव चतुर्थी न तु सम्बन्धानुयोगिवाचकविशेष्याज्जीवात्। आत्महविरुद्देश्यभूतदेवतात्वं श्रीराम इति तादर्थ्यसम्बन्धविशेषः सिद्ध्यति। सम्बन्धस्य सांसिद्धिकत्वं विवक्षन् कादाचित्कत्वं वारयति **सर्वदेत्य**नेन। शेषवृत्तिर्भगवत्कैङ्कर्यं तदतिरिच्य मेऽन्यत्प्रयोजनं नास्तीति पदपदार्थतदन्वयार्थनिश्चयेनैवमेव बीजवाक्यार्थो जिज्ञासुभिर्विविच्यावगन्तव्यः। वाक्यार्थविवित्सया परस्परव्यावर्तकधर्मेण पृथक्त्वमनुसन्धाय पुनरन्वितार्थबुभुत्सयेत्यर्थः। अयं प्रकृत्यर्थोऽयं प्रत्ययार्थोऽयञ्च समुदितार्थ इति रीत्या विच्छिद्य हि वाक्यस्यामर्थ इति निर्धार्यते।

------------------------------संवित्करः------------------------------

राममन्त्र के प्रतिपद अर्थबोधन के अनन्तर उसका समुदित वाक्यार्थ इस प्रकार जानना चाहिये कि मकारवाच्य मैं जीवात्मा रेफवाच्य परमात्मा श्रीरामजी का सदा शेषरूप हूँ।

**रामायेति चतुर्थेन श्रिया देव्यास्तु सर्वदा।**
**चेतनाऽचेतनानाञ्च रमणाश्रयतेर्यते॥21॥**

..........................................................पदपरामर्शः..........................................................

*रामिति बीजार्थं विविच्य मन्त्रराजस्य रामायेति मध्ववर्ति चतुर्थ्यन्तं पदं प्रकृतिप्रत्ययार्थप्रबोधनेनोपलम्भयति-* **रामायेतीति।** *रामायेति चतुर्थेन पदेन रमणाश्रयतेर्यते प्रतिपाद्यते। चतुर्थेनेत्यनेन तत्पूर्ववर्तिनो बीजस्य त्रिपदात्मकता सिद्ध्यति। अत्र चतुर्थ्यन्तस्य रामेति प्रकृतिभागस्यार्थ उच्यते प्रत्ययार्थस्य श्लोकान्तरेण वक्ष्यमाणत्वात्, रमते रमयति श्रियं चेतनाचेतनान् चेति रामो रमयतां वर इत्यार्षनिर्वचनबलात् कर्त्तर्यपि कारके घञ्। नारकपूरुषादिवदन्येषामपि दृश्यत इति दीर्घः। रमणाश्रयतेत्यत्र रमणं भावे ल्युट्, तदाश्रयो रमणकर्त्ता तद्भाव ईर्यत इति। न केवलं स्वयं रमते, स्वरूपशक्त्याः श्रीदेव्याः श्रीसीताया वायं रमणोऽपितु चेतनाचेतनानामपि रमणः। चेतनः प्राणी तद्व्यतिरेकेणाचेतनो जडः, ज्ञानाश्रयचेतनरमणस्य सम्भवेऽचेतनरमणं कथं युज्यते, तत्रोच्यते- मोदते भगवान् भूतैर्बालः क्रीडनकैरिवेत्यत्रेव चेतनाचेतनोभयवाचकभूतशब्दप्रयोगवदत्रापि चेतनाचेतनपदं युक्तम्। यद्वेषदर्थे नञाचेतनतिर्यग्जातीयानां खगमृगादीनां विरहलीलायां स्थावरादिभ्यः स्वसंश्लेषदानेन च रमणं युज्यते। यद्वा चेतनः स्यात्सहृदय इति कोषात्सहृदयानां भक्तिद्रुतचेतसामसहृदयानामचेतनानां निसर्गक्रूरमनसां राक्षसानामपि स्वाभिरामगुणैः रमण इति। अतो रामः कमलपत्राक्षः सर्वसत्त्वमनोहर इति रामायणपद्ये बहुसत्त्वमनोहर इत्यनुक्त्वा सर्वसत्त्वमनोहर इत्युक्तम्। इत्थं भगवतो रामस्य स्वाधीनलीलोपकरणत्वमनितरचेतनप्रेर्यत्वं च रमणे लभ्यते।*

-------------------------------संवित्करः-------------------------------

"रामाय" इस चतुर्थ्यन्त पद के प्रकृति भाग से यह प्रतिपादित होता है कि प्रभु श्रीराम श्रीपदवाच्य श्रीसीता के साथ सभी चेतनाचेतन के रमणाश्रय है अर्थात् सबमें रमण करते हैं तथा सबको स्वयं में रमण कराने वाले हैं।

**स सर्वविधबन्धुत्वं सर्वप्राप्यत्वमेव च।**
**सर्वप्रापकता तेन तथा चोभयलिङ्गता।।22।।**
**उच्यते तत्पदेनैव सच्चिदानन्दरूपता।**
**यावद्विभूतिनेतृत्वं श्रीरामब्रह्मणो मतम्।।23।।**

**पदपरामर्शः**

*यतस्तेन रामेति प्रातिपदिकेन प्रथमं स राम उच्यते ततस्तद्वाचकप्रातिपदिकावयवार्थमहिम्ना लभ्यास्तद्गता धर्मविशेषा आश्रयणोपयुक्ताः प्रकाश्यन्ते- सर्वविधबन्धुत्वं सर्वप्राप्यत्वं सर्वप्रापकता उभयलिङ्गता सच्चिदानन्दरूपता यावद्विभूतिनेतृत्वञ्चैते धर्मविशेषा श्रीरामब्रह्मणस्तत्पदेनैवोच्यन्ते।* **मतमिति** *नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्येकशेषः। रमयति प्रीत्याबध्नाति स्वसौशील्यादिनेति राम इति व्युत्पत्त्या सर्वसम्बन्धनिर्वाहकत्वेन च सर्वविधबन्धुत्वमुच्यते ऐतदात्म्यमिदं सर्वमिति श्रुतेः। राति कुक्षौ विश्वं गृह्णातीति रः, अम्यते प्राप्यते इत्यमः, रश्चासावमश्चेति राम इति व्युत्पत्त्या प्राप्यत्वमुच्यते, इत्थममयति प्रापयति स्वमात्मानमिति रामस्तेन सर्वप्रापकतोच्यते, रैरिन्द्रियैर अम न प्राप्तिरस्येति राम इत्यनेन अवाङ्मनसगोचरत्वम्, रमयति कल्याणगुणैरिति शुभगुणाकरत्वरूपमित्युभयलिङ्गतोक्ता,। रमन्ते योगिनो यस्मिन् सत्यानन्दे चिदात्मनीति तापनीयश्रुत्या तु सच्चिदानन्दरूपतोच्यते। रापयति प्रकाशयतीति रं, रात्यानन्दमिति रं साकेताख्यं धाम, रं त्रिपादविभूतिः रौ भूमिराजानावितिकोषाद् रां भूमिञ्चामयति नियमयतीति रामः, एतेनोभयविभूतिनायकत्वं लभ्यते।*

**संवित्करः**

रामाय पद के प्रकृतिभाग से यह भी प्रतिपादित होता है कि वही श्रीराम जीवमात्र के सर्वथा बन्धु (विपन्निवारक), सभी के परमप्राप्य तथा अपनी प्राप्ति कराने में उपायभूत भी हैं। इसप्रकार वही पद उनके उभयलिङ्गत्व अर्थात् निर्गुणत्व (सर्वदोषराहित्य) तथा सगुणत्व (सर्वकल्याणगुणाकरत्व) दोनों का बोध कराता है। अथात् श्रीरामजी ही अकेले प्रियपरायण माता का वात्सल्य, हितपरायण पिता का संरक्षकत्व, सखा का, सौहार्द, भ्राता का सहायकत्व, गुरु का ज्ञानप्रदत्व, पति का आनन्दप्रदत्व आदि सम्बन्धमूलक भावों का निर्वाह करते हैं। सकलदोषरहित आनन्दमय परमब्रह्म होने से सबके प्राप्य तथा वात्सल्यशरण्यत्व सौशील्यादि गुणों से युक्त होने के कारण करुणावश जीव को स्वयं की प्राप्ति के हेतु (प्रापक) भी बन जाते हैं यही उनकी उभयलिङ्गता है। 'रामाय' इस चतुर्थ्यन्त पद के प्रकृतिभूत रामशब्द से परब्रह्म श्रीरामजी की सच्चिदानन्दरूपता (नित्यज्ञानानन्दमयता) के साथ यावद्विभूतिनेतृत्व (लीलाविभूति, एवं त्रिपादविभूति इत्यादि जितनी विभूतियाँ हैं, उन सबकी एक मात्र नायकता (स्वामित्व) का प्रतिपादन किया जाता है।

## रागादिकारणे बन्धौ तेनैव विनिवर्त्त्यते।
## बन्धुत्वप्रतिपत्तिश्च भासमाना विचारतः।।24।।

.......................................................पदपरामर्शः.......................................................

*सर्वं वाक्यं सावधारणं भवतीति पूर्वश्लोकनिर्दिष्टानुसारेण सर्वविधबन्धुत्वं भगवति श्रीराम एव नान्यत्र, अतस्तेनैव रामपदेन रागादिहेतुके लौकिकबन्धौ या भासमाना देहादिसम्बन्धेन कल्पिता बन्धुत्वप्रतिपत्तिरयं मे बन्धुरित्याकारको दुरवग्रहः, सा विनिवर्त्यते, स्वयमेव रामपदार्थस्य विचारतो विचारेण दूरमुत्सार्यते। बध्नातीति व्युत्पन्नो बन्धुशब्दः सम्बन्ध्यादिपरः, स स्वयमविद्यापाशबद्धः कर्मकूपे पतितः कालव्यालग्रासभूतः कथमन्यं रक्षेत्। वस्तुतः सर्वसम्बन्धनिर्वाहकः सर्वेषाञ्चेतनानां सर्वेषु जन्मसु सर्वविधोपकारको भगवान् श्रीराम एवेति स एव याथार्थ्येन हितसाधकोऽहितनिवर्तको बन्धुः। अतश्च त्वमेव बन्धुश्चेत्येवकारः सङ्गच्छते। अन्ये भगवत्प्रेरणया स्वानुकूलकृत्यमनुश्रित्य यथासामर्थ्यमेवोपकुर्वन्ति। भगवांस्त्वनन्यप्रयोज्यो निरपेक्षकः सर्वथोपकरोति। यथोक्तं भागवते- गुरुर्न स स्यात्स्वजनो न स स्यात्*

*पिता न स स्याज्जननी न सा स्यात्।*
*दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम्।।*

*भासमाना बन्धुत्वप्रतिपत्तिः यावत्स्वस्वरूपपरस्वरूपयोः याथार्थ्येन प्रतिपत्तिर्नास्ति तावद्रज्जौ सर्पख्यातिरिवातात्त्विकी प्रतीतिः। तेनास्या ज्ञाननिवर्त्यत्वं सूचितम्। देहसम्बन्धेन यो व्यवहारमयः स्नेहो रागो वा रागान्धता एव कारणं यत्र तस्मिन् सांसिद्धिकं सम्बन्धिनं गोचरयति। युक्तमाह रामायणे श्रीलक्ष्मणः-*

*अहन्तावन्महाराजे पितृत्वं नोपलक्षये।*
*भ्राता भर्त्ता च बन्धुश्च पिता च मम राघवः।।*

-------------------------------संवित्करः-------------------------------

इसी चतुर्थ्यन्त "रामाय" पद के प्रकृतिभाग से ही अज्ञानकल्पित, लौकिक माता पिता मित्र पुत्र कलत्र आदि में, राग आदि के कारण जो बन्धुत्व का (अपनेपन का) सहायकत्व का भ्रमात्मक बोध हो गया है, उसका निवारण भी हो जाता है। क्योंकि अच्छी तरह विचार करने पर यह बात समझ में आती है कि प्रभु श्रीराम ही मेरे अपने हैं, सार्वत्रिक सर्वकालिक बन्धु हैं, लौकिक सम्बन्धियों में जो बन्धुत्व की प्रतीति होती है, वह अज्ञानजन्य रागादि के कारण है, वास्तविक नहीं।

**तच्चतुर्थ्या सानुरूपकैङ्कर्यप्रार्थनोच्यते।**
**विषयान्तरसेवाऽपि प्राप्ता सा विनिवर्त्त्यते॥25॥**

.....................................................पदपरामर्शः.....................................................

*रामायेत्यत्र प्रकृतिभागस्य समुदायशक्त्याऽवयवशक्त्या च लभ्यमर्थजातं परिगणय्येदानीन्तदुत्तरवर्तिश्रूयमाणचतुर्थीविभक्तेर्बोध्यार्थ व्याचष्टे-* ***तच्चतुर्थ्येति।*** *तच्चतुर्थ्या तद्रामपदाव्यवहितपरवर्तिचतुर्थ्येत्यर्थः। तस्य चतुर्थ्येत्यत्रोद्देश्यविधेय-भावसम्बन्धं मनस्याधाय समास उपपाद्यः, न सामीप्यादिः षष्ठ्यर्थ इत्येवं प्रौढमनोरमादौ भूम्ना विमृष्टात्। उद्देश्यः सम्प्रदानचतुर्थ्यर्थ इत्यनुसन्धाय कुरुष्व मामनुचरमिति श्रीलक्ष्मणोक्त्यनुगुणं भगवत्कैङ्कर्यमेव जीवनोद्देश्यं शेषस्य, तदप्राप्त्या तस्य च भगवदिच्छाधीनतया तत्प्रार्थनायां तत्पर्यवस्यति। किन्तस्य शत्रुहनने कपयः सहाया इति भागवतोक्त्या पूर्णकामस्य सत्यसङ्कल्पस्य सर्वेश्वरस्य भगवतो न काचिदपेक्षा तथापि स्वरूपानुगुणशेषवृत्तिस्तत्कैङ्कर्य परमप्राप्यतया प्रार्थनीयमेव, दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मन इत्युक्तेः।* ***स्वानुरूपेति पाठः श्रेयान्,*** *तेन स्वल्पसत्त्वस्यापि बद्धजीवस्य यथाधिकारं यावद्बुद्धिबलोदयं साध्यं यदित्यर्थलाभः।*

*विचित्रा देहसम्पतिरीश्वराय निवेदितुमित्युक्तमुपेक्ष्य विषयान्तरप्रवणेन्द्रियाणां सदसद्विवेकायैवात्मानमुपासीतेति शास्त्रं प्रवृत्तम्। आत्मा खलु चिदचिदात्मा भगवान् श्रीराम एव, यस्य पृथिवी शरीरम्, यस्यात्मा शरीरमित्यादि श्रुतेर्जगत्सर्वं शरीरं त इति श्रीरामायणोक्तेश्च। तदुपासनविधानेन सेव्यविषयनियमनादसेव्यप्रतिषेधः सुतरामेव गम्यते, तद्यथा- पयोव्रतो ब्राह्मण इत्युच्यते, व्रतं नामाभ्यवहारार्थमुपादीयते, शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम्, तत्र नियमः क्रियते- पयसैव व्रतयेदिति यथा वा व्रीहीनवहन्तीत्यत्र व्रीहीणां वैतुष्यमवघातेनैव सम्पादनीयमिति नियमः प्रतिपाद्यते तद्वदत्र*

----------------------------------संवित्करः----------------------------------

"रामाय" पद में प्रकृतिभूत राम शब्द के आगे जो चतुर्थीविभक्ति अर्थात् ङेप्रत्यय है, उसके द्वारा अनुरूप कैङ्कर्य की प्रार्थना का प्रतिपादन किया जाता है। साथ ही वह श्रीरामजी के अतिरिक्त विषयान्तर देवादि की रागप्राप्त सेवा की व्यावृत्ति भी करता है। श्रीरामसेवा ही जीव के स्वरूप के सर्वथा अनुरूप है, विषयान्तसेवा स्वरूप के अनुरूप नहीं। अतः घटो न पटः इस स्वतः इतरव्यावृत्ति की प्रतीति के समान उसकी व्यावृत्ति स्वयं होती है। अर्थात् भगवन्! मुझे (इस जीव को) स्वरूपानुरूप आपके कैङ्कर्य का लाभ मिलना ही चाहिये। इस प्रकार की दीनप्रार्थना चतुर्थी विभक्ति द्वारा प्रतिपादित होती है।

..........पदपरामर्शः..........

*श्रीराम एव सेव्य इति नियम्यते। नियमस्यान्यनिवृत्तिफलकत्वादाह-* **विषयान्तरसेवापि प्राप्ता सा विनिवर्त्यते** *इति। रागतः प्राप्तौ, अर्थादिकामनया वा प्राप्ता विषयान्तरसेवा, ब्रह्मेन्द्रादिदेवतासेवा, तदितमनुष्यादिसेवा वा, सापि निवार्यते- यस्यादित्यश्शरीरमिति श्रुत्या इन्द्रादीनामप्यात्मभूतस्य परमपुरुषस्यैव साक्षादाराधनस्य विहितत्वाद् भगवद्-व्यतिरिक्तसेवाया अविधिपूर्वकत्वमाह भगवानपि-*

*ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।*
*तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्।।*

*आत्मस्वरूपस्य यथावस्थितज्ञानाभावे विषयान्तसेवाया रागप्राप्ताया अप्यविहितत्वा-न्निवृत्तिर्विधीयते चतुर्थ्येति भावः वस्तुतो विज्ञाते च तस्मिन्, तत्कैङ्कर्येहया धर्मशास्त्रसिद्धां मातापित्रादिसेवामप्यनादृत्य परिव्रजन्ति महात्मानः सर्वशरीरसेवायाः सर्वशरीरिसेवापर्यवसायित्वात्।*

**पदेन नेनात्र तु पञ्चमेन प्रकथ्यतेऽथो[1] तदनन्यशेषता।**
**हेयं तदन्यार्थमपि स्वतन्त्रता निवर्त्यतेऽतः सततं स्वकीया[2]।।26।।**
**पदेन षष्ठेन म इत्यनेन स्वस्वाम्यनन्यार्हकशेषताऽपि।**
**समुच्यते चेतनवाचिना तु तत्किङ्करत्वैकफलत्वमेव[3]।।27।।**

..........पदपरामर्शः..........

*मन्त्रराजीयचरमखण्डस्य ''नम'' इत्यस्य सखण्डतापक्ष आद्यक्षरनकारस्य गम्यार्थ*

----------संवित्करः----------

मन्त्र के चरम भाग नमः को सखण्ड (न+मः) मानते हुए उसके पूर्ववर्ती पञ्चमपद ''न'' के अर्थ का प्रतिपादन किया जा रहा है। इस पञ्चम पद 'न' के द्वारा जीव की अनन्यशेषता बतलायी गई है अर्थात् जीव प्रभुश्रीराम का ही अनन्यशेष है। इसी न पद के द्वारा जीव की अन्यार्थता (किसी अन्य जीव का शेष होना, उसके लिये ही होना तथा उसके अधीन होना) का परित्याग द्योतित होता है। इसी के साथ इस निषेधवाचक ''न'' के द्वारा जीव की स्वतन्त्रता की निवृत्ति भी प्रतिपादित होती है अर्थात् जीव के भगवदधीन होने से उसका कर्तृत्व स्वतन्त्र नहीं है। सखण्डपक्ष में मन्त्र का षष्ठ पद ''म'' है, जो ''मन्यते इति मः'' इस व्युत्पत्ति के अनुसार चेतनवाची होने से जीव का बोधक है। वह षष्ठ पद ''म'' जीव की अपने स्वामी प्रभु श्रीराम के प्रति अनन्यार्हशेषता का निर्देश करता है, साथ ही प्रभु का कैङ्कर्य ही उसका एकमात्र प्रयोजन एवं फल है, ऐसा बोध कराता है।

---

[1] पा. भे.- संप्रकथ्यते।
[2] पा. भे.- प्रहेयमन्यार्थमथो स्वतन्त्रता, निवर्त्यते जीवगणस्यसंततम्।
[3] पा. भे.- तत्किङ्करत्वैकपलाधिपत्यम्।

पदपरामर्शः

तेन पुनर्व्यावृत्तार्थञ्चाकलयति- **पदेनेति।** अथो मध्यमखण्डव्याख्यानन्तरम् अत्र मन्त्रराजव्याख्याने पारिशेष्यात्पञ्चमेन पदेन नेन जीवस्य तदन्यशेषता भगवतो रामस्यैवायं यथेष्टविनियोगार्हो जीवो नान्यस्य कस्यचिदन्यस्य शेष इति तद्वृत्तिधर्मः प्रकथ्यते। पर्युदासो नञ्द्योत्यः, अन्यशेषतायाः पर्युदासादनन्यशेषता प्रतिपाद्यते। नञो निवर्तनस्वभावात्स्वप्रतिपाद्यादन्यत्किं निवर्त्यत इति जिज्ञायासामाह- **हेयमिति।** अनन्य-शेषतामुक्त्वायं नकारो भगवदतिरिक्तप्रयोजनं हेयमिति निवर्तयति, तेनानन्यशेषत्व-मनन्यप्रयोजनत्वञ्चायातम्। अर्थः प्रयोजनम्,अन्यार्थ्यमन्यप्रयोजनत्वम्, तदन्यार्थ्यन्तदन्य-प्रयोजनत्वं हेयम्। किञ्च निवर्त्यान्तरमाह- **स्वतन्त्रेति** भगवदधीनतया स्वकीया स्वतन्त्रता निवर्त्यते, परायत्तकर्तृत्वाद् यथेष्टविनियोगार्हत्वाच्च शेषभूतस्य जीवस्येति।

द्रष्टा मन्तेति श्रुतेर्मनुत इति व्युत्पत्त्या 'म' इति जीववाची। नम इत्यत्र चरमेण षष्ठे पदेन मेन जीवात्मनः स्वाम्यनन्यार्हकशेषता समुच्यते, पतिं पतीनामिति श्रुतेर्जीवस्य स्वत्वं परमात्मनश्च स्वामित्वं निरूप्यते जीवस्य भगवद्व्यतिरिक्तः स्वामी न संभवति, यतः स तदैकशेष इत्यर्थः समुच्यते। तथाविधस्वामिनः कैङ्कर्यमेवैकं फलं जीवस्येत्यर्थोऽप्यपिना समुच्चीयते। अत्राप्यन्ययोगव्यवच्छेदार्थकेनैवकारेणान्यकैङ्कर्यं व्यवच्छिद्यते।

**उपायार्थपरेणासावखण्डनमसोच्यते।**
**उपायो हि मवाच्यस्य रवाच्यो राम एव सः॥28॥**

पदपरामर्शः

नमेति वर्णद्वयात्मकतया नमःशब्दस्य सखण्डस्य प्रतिवर्णमर्थमुक्त्वा तस्या खण्डपदस्यार्थमुन्नयति- **उपायार्थेति।** अखण्डनमसोपायार्थपरेणासावुच्यते। नमस उपायवाचकतया भगवानेवोपायो जीवस्येति प्रोच्यते। उपायतेऽनेनेतिव्युत्पत्त्या भगवदुपलब्धिसाधनत्वं बोध्यते, यदुक्तं तत्प्राप्तये प्रधानोऽयं पन्था नमनवानिति। नमस्तु भाववाचनम्, स च भाव इत्थं निर्दिष्टः-

भगवान् मे परो नित्यमहं प्रत्यवरः सदा।

संवित्करः

अखण्डपक्ष में "नमः" पद उपाय रूप अर्थ का बोधक है, जो मकारवाच्य जीव का लौकिक एवं पारलौकिक अर्थसिद्धि में रेफवाच्य श्रीरामजी ही एकमात्र उपाय है, ऐसा बोध कराता है।

.....................................................पदपरामर्शः.....................................................

इति भावो नमः प्रोक्तो नमसः कारणं हि सः।।

अहंममकारनिवर्तकत्वमपि निरुच्यते-

मे नेत्येवं समीचीनबुद्ध्या सात्र निवार्यते।
नाहं मम स्वतन्त्रोऽहं नास्मीत्यस्यार्थ उच्यते।।

स च नमसा निर्दिष्टोपायः क इत्यत्राह मवाच्यस्य जीवस्य रवाच्यो राम एव स उपाय इति यमेवैष वृणुते तेन लभ्य इति श्रुतेः। स न केवलमुपेयभावेन विलसति, अपितु साधनहीनप्रपन्नेषु करुणया प्रसह्यात्मानमुपलम्भयतीति प्रापकत्वादुपायभावमपि धत्ते, यमूर्ध्वं निनीषति तेन साधु कर्म कारयतीति श्रुतेः। यद्वा तपसि ते निष्ठा स एष मदनुग्रह इत्युक्तेराश्रितजीवस्य भगवदविषयकज्ञानेच्छाप्राप्त्यनुगुणप्रवृत्त्यादिकं यत्किमपि भवति तत्सर्वन्तदनुग्रहेणैव जायते, स्वविषये प्रवर्तकत्वात्स एवोपाय इति भावः। यश्चानुष्ठानवेलायामपि प्रियङ्करत्वात्सिद्धतया सिद्धोपायः, स्वभक्तेच्छापूर्तिसाधनतयो उपाय उच्यते। अत उक्तं सहस्रनामस्तोत्रे- सिद्धिदो सिद्धिसाधन इति। यो हि भक्त्यनुगुणदेहसम्पत्प्रदानेन समर्थकरणदानेन, प्रवर्तकानादिवेदविद्याप्रकाशनेन अवतीर्यो-दारचरितेन ध्येयस्वरूपोपलब्ध्या करुणया संसारमग्नान् स्वाभिमुखीकरोति। अत एव च अभ्यासेऽप्यरुसमर्थोऽस्तीत्यादिरीत्यानेकविकल्पप्रदानेन यथाकथञ्चिन्मामिच्छाप्तुं धनञ्जयेत्यधिकारि भेदादुपायप्रदर्शनं सङ्गच्छते। यश्च मां नमस्कुर्वित्यादेशेनापि न नमति तं शास्त्रविधिसम्पूर्त्यै नमयति। यथोक्तम्-

प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन्।
अतो वा नम उद्दिष्टं यत्तं नामयति स्वयम्।।
वाचा नम इति प्रोच्य मनसा वपुषा च यत्।
तन्नमः पूर्णमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते।।

नम इत्यनेन भगवानेवोपाय इति बोधनात्स्वाधीनस्वार्थकर्तृत्वाभोक्तृत्वादिभ्रमं निरस्य प्रार्थयिष्यमाणस्य परमफलस्य तदेकसम्पाद्यता प्रकाश्यत इति भावः।

**बीजेनैवाथ जीवस्य स्वरूपं प्रतिपाद्यते।**
**रामायेति परस्यापि चतुर्थ्या तत्फलस्य च।।29।।**
**उपायस्य त्वखण्डेन नमःखण्डेन चोच्यते।**
**सखण्डेन मकारेण षष्ठ्यन्तेन विरोधिनः।।30।।**

**पदपरामर्शः**

*वेदमहासारस्य मन्त्रराजस्य बह्वर्थरत्नाकरतां प्रदर्श्य ज्ञेयपौष्कल्येऽपीह मुमुक्षुजनवेद्यानां पञ्चस्वेवार्थेषु समावेशादवश्यवेदनीयतया प्रथितं प्राप्तृप्राप्यप्राप्त्युपायप्राप्तिफल-प्राप्तिविरोधिरूपमर्थपञ्चकमप्यत्र निहितमिति द्वाभ्यां दर्शयति-* **बीजेनैवाथेति।** *रामिति बीजेन रवाच्याय भगवते मवाच्योऽहं जीवश्शेषभूतोस्मीत्युत्तरपदार्थप्रधानतया ज्ञानानन्दस्वरूपस्य ज्ञानानन्दगुणस्य निरुपाधिकशेषस्य जीवस्य स्वरूपं प्रतिपाद्यते तेन प्राप्त्रर्थः सूचितः। रामायेति मध्यवर्तिनो भागस्य रामेति प्रकृत्या परस्य, तदुत्तरवर्तिचतुर्थ्या च भगवत्कैङ्कर्यं प्राप्तिफलमिति फलस्वरूपं प्रतिपाद्यते।*

*नम इत्यखण्डेन चरमभागेनोपायस्य स्वरूपं प्रतिपाद्यते, समित्साधनकादीनां यज्ञानां न्यासमात्मनः, नमसा योऽकरोद्देवे स स्वध्वर इतीरितः, नमस्कारात्मकं यस्मै विधायात्मनिवेदनमित्युक्त्या नमस्कारस्य भक्तिप्रपत्त्युभयसाधारणतया निरूपणादुपायतोक्तेः। सखण्डस्य नम इत्यस्य षष्ठ्यन्तेन मकारेण प्राप्तिविरोधिनः स्वरूपमुच्यते। अहं स्वतन्त्रः, अहं मम भगवदन्यस्य देवादेर्वा शेष इत्यादिभ्रमः प्राप्तिविरोधीति। यथोक्तम्-*

*अनादिवासनारूढमिथ्याज्ञाननिबन्धना।*
*आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः।।*
*मे नेत्येवं समीचीनबुद्ध्या सात्र निवार्यते।*
*विरोधिनः स्वरूपं तन्निरसनायोपादीयते।।*

**संवित्करः**

**मन्त्रराज में प्राप्ता, प्राप्य, प्राप्तिफल, प्राप्ति उपाय एवं प्राप्तिविरोधी रूपी अर्थपञ्चक का ज्ञान समाहित है, इसी आशय से बताया गया कि बीज अर्थात् "रां" से प्राप्ता (जीव) का स्वस्वरूप, "रामाय" पद के प्रकृतिभाग से प्राप्य अर्थात् परतम भगवान् श्रीराम का स्वरूप एवं चतुर्थी विभक्ति के द्वारा भगवत्प्राप्ति का नित्यशेषवृत्तिरूप फल बताया गया है। अखण्ड नमः पद के द्वारा भगवत्प्राप्ति के उपाय (भक्ति या प्रपत्ति की दृष्टि से स्वयं भगवान्) का सङ्केत है। सखण्ड (न+मः) पक्ष में षष्ठ्यन्त मकार खण्ड से अर्थात् मः इस षष्ठ्यन्त भाग से प्राप्तिविरोधी (अन्याश्रय एवं अहङ्कारादि) के स्वरूप का कथन हुआ है।**

**तात्पर्यार्थोऽशेषवेदशास्त्राभि[1]रुचिसंश्रयः।**
**वाक्यार्थः प्राप्यसम्बन्धिस्वरूपाभिनिरूपणम्॥31॥**
**तारकस्य प्राधानार्थस्वस्वरूपनिरूपणम्।**
**सम्बन्धस्यानुसन्धानम[2]नुसन्ध्यर्थ इष्यते॥32॥**

**पदपरामर्शः**

*श्रीरामतारकमन्त्रराजस्य रहस्यनिरूपणमुपसंहरिष्यन् तात्पर्यार्थवाक्यार्थप्रधानार्थानुसन्ध्यर्थनाम्ना चतुर्धा विभक्तमर्थजातं द्वाभ्यां सङ्गृह्णाति-* ***तात्पर्यार्थविति।*** *यदर्थविबोधयिषया शास्त्रं प्रवृत्तं तदर्थस्तात्पर्यार्थः, अशेषवेदानां तदनुगुणशास्त्राणां च यदर्थेऽभिरुचिस्तत्र भगवति श्रीरामे सर्वलोकानां संश्रयः समाश्रयणं जायतामिति मन्त्रराजतात्पर्यम्। अत्रार्थे वेदाद्यभिरुचिस्तत्रैव शास्त्रतात्पर्य मत्वा सर्वैरपि भगवद्रामचन्द्रचरणाश्रयणं कार्यमिति तात्पर्यार्थः। शास्त्रं हि तत्त्वमावेदयति हितञ्चानुशास्ति, तत्त्वतश्चिदचिद्विशिष्टं भगवन्तं श्रीसीतानाथमाह, हिततया च तत्प्राप्तिसाधनभूतां तद्भक्तिं विधत्ते। इत्थमर्थे शास्त्राभिरुचेस्तदनुगणं संश्रयस्यैव तात्पर्यार्थत्वात्। तात्पर्यज्ञानस्य वाक्यार्थज्ञाने हेतुतया वाक्यार्थनिरूपणात्प्राक् तात्पर्यार्थकथनं युक्तम्। वाक्यार्थमाह-* ***प्राप्यसम्बन्धिस्वरूपाभिनिरूपणमिति।*** *योग्यताकाङ्क्षादिविशिष्टस्य मन्त्रघटितपदजातस्य परस्परान्वयेन मुख्यवृत्त्या लब्धोऽर्थः प्राप्यभूतो भगवानेवेति तन्निरूपणं वाक्यार्थो भवति। सर्वविधबन्धुत्वादि-*

**संवित्करः**

सम्पूर्ण वेदादिशास्त्रों की अभिरुचि (अभिप्रेत अर्थ) भगवान् श्रीराम की भक्ति-प्रपत्ति है, उसका संश्रय अर्थात् जीव द्वारा समाश्रयण किया जाय, यही मन्त्रराज का तात्पर्यार्थ है। प्राप्य सम्बन्धी स्वरूप का निरूपण, यह उसका वाक्यार्थ है अर्थात् प्राप्यभूत भगवान् श्रीराम के तात्त्विक स्वरूप का प्रबोधन ही वाक्यरूप मन्त्रराज का अर्थ है। तारकमन्त्रराज का प्रधानार्थ स्व (जीवात्मा) के स्वरूप का निरूपण है तथा स्व एवं पर अर्थात् जीवात्मा एवं परमात्मा के स्वस्वामिभाव पितापुत्रादिभाव रूप अनेक सम्बन्धों का अनुसन्धान ही अनुसन्ध्यर्थ है।

---

[1] पा. भे.- समस्तानां शास्त्राणाम्।

[2] पा. भे.- सत्सम्बन्धानुसन्धानम्।

........................................................पदपरामर्शः........................................................

रूपेणान्वितपदार्थानां तत्रैव पर्यवसानात्। स्वस्वरूपनिरूपणं तारकस्य प्रधानार्थस्तत्र स्वपदेन जीवो विवक्षितः, देहादिविलक्षणस्य ज्ञानानन्दस्वरूपस्य तस्य भगवदनन्यशेषत्वादिरूपेण प्रतिपादनमेव प्रधानार्थः, तदुद्दिश्य कृत्यानुशासनमुखेन मन्त्रप्रवृत्तेस्तस्यैव शास्त्रवश्यत्वाच्च। आचार्यकृपया प्राप्तमन्त्रस्य मन्त्रार्थबोधादनन्तरं सततमनुसन्धेयमर्थमाह- **सम्बन्धस्यानुसन्धानमिति**। अत्र जीवात्मपरमात्मनोर्मिथो ये नवधा सम्बन्धाः प्रोक्तास्तेषाञ्चिन्तनम् अयमेव योगः प्रोच्यते। यथोक्तम्-

ईदृशः परमात्मायं प्रत्यगात्मा तथेदृशः।
तत्सम्बन्धानुसन्धानमिति योगः प्रकीर्तितः॥

**उक्त्वेत्थं तारकार्थं तु[1] द्वयार्थः प्रतिपाद्यते।**
**विमत्सराः प्रपश्यन्तु प्रगृह्णन्त्ववयन्तु च॥33॥**

........................................................पदपरामर्शः........................................................

इत्थमेवं तारकार्थं मन्त्रराजरहस्यमनेकधा विशदं प्रतिपाद्येदानीं द्वयमन्त्रस्यार्थो रहस्यं निरूप्यते, तं प्रतिपाद्यमानं विमत्सराः सन्तः प्रपश्यन्तु जानन्तु प्रगृह्णन्तु धारयन्तु तदनुगुणमेव जपादौ निश्चित्यावयन्तु ध्यायन्तु ग्रहणमननध्यानादीनामुत्तरोत्तरानुभव-वैशद्यद्योतनाय व्यापारत्रयोक्तिः। उत्तरार्धे द्वयार्थपरामर्शकं तमिति द्वितीयान्तमध्याहार्यम्। **विमत्सरा** इति रहस्यावगतौ चित्तशुद्धिनिबन्धना पात्रता निर्दिश्यते, यदभावे अपरे उप्तबीजमिव विफलो भवत्युपदेशः, परोत्कर्षासहनं मत्सरः खलु मनोमलः। निर्मत्सरे हृदि जले तैलमिवोपदिष्टार्थः प्रकामं प्रसीदति। एतेन सल्लक्षणमुक्तम्, रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथेति श्रीरामायणोक्तेः।

------------------------------संवित्करः------------------------------

इस प्रकार श्रीरामतारक षडक्षरमन्त्रराज के रहस्य का प्रतिपादन कर अब द्वयमन्त्र के स्वरूप एवं रहस्य का प्रतिपादन किया जा रहा है। विद्वज्जन इसके रहस्य एवं प्रभाव का मत्सररहित होकर विचार करें, इसे स्वरूपतः ग्रहण करें तथा उपपत्तिपूर्वक हृदयङ्गम करें।

[1] पा. भे.- तारकार्थं निरूप्याथ।

**श्रीरामद्वयमन्त्रमद्भुततमं वाक्यद्वयं षट्पदम्।**
**बाणाक्षिप्रमिताक्षरन्तु खलु विद्धि त्वं दशार्थान्वितम्[1]।।34।।**
**युक्तं तत्त्रिपदैस्तु[2] तत्र सुमते पूर्वं शुभस्यास्पदम्।**
**वाक्यं पञ्चदशाक्षरं तदनु दिग्वर्णात्मकं तूत्तरम्।।35।।**

पदपरामर्शः

*एकस्यैव मन्त्रस्य वाक्यद्वयात्मकत्वाद् द्वाववयवावस्य तद्द्वयम्, द्वयं मन्त्र इति द्वयमन्त्रः, द्वयोर्वाक्ययो रामपदघटितत्वाच्छ्रीरामद्वयमन्त्रत्वम्। अत एव मन्त्रमित्येकवचनं सङ्गच्छते, अतश्च मन्त्रद्वयमिति नोक्तम् मन्त्रस्य वाक्यपदाक्षरात्मनाऽर्थतश्च स्वरूपमाह- श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये, श्रीमते रामचन्द्राय नम इति वाक्यद्वयम्, प्रतिवाक्यं त्रीणि त्रीणि पदानीति* ***षट्पदम्।*** *बाणाक्षिप्रमिताक्षरं पञ्चविंशतिवर्णात्मकं वक्ष्यमाणरीत्या दशविधैरर्थैरन्वितं युक्तमिति। श्रौतत्वात्स्वयं सिद्धत्वाद् वस्तुप्राशस्त्याच्चास्याचिन्त्यप्रभावमाह-* ***अद्भुततममिति।*** *विमत्सराः प्रपश्यन्तिति पूर्वं सामान्येनोक्त्वापि वात्सल्याच्छिष्यं तदर्थगौरवं सूचयन्नात्मीयतातिरेकाद्युष्मदा सम्बोधयति-* ***त्वं विद्धीति।*** *तस्य ग्रहणधारणाद्यनुगुणयोग्यतामाचष्टे-* ***सुमत*** *इति। उत्तरार्धे पूर्वोत्तरवाक्यभेदेनोभयत्र वर्णान् परिगणपति- पूर्वं वाक्यं पञ्चदशाक्षरं तदनूत्तरं दिग्वर्णात्मकं दशाक्षरमिति। वाक्यपदं पूर्वमुत्तरमित्युभयत्रान्वयि। एवमेव त्रिपदैर्युक्तं*

संवित्करः

श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये, श्रीमते रामचन्द्राय नमः यह श्रीरामजी का परम विलक्षण तथा कल्याणप्रद द्वयमन्त्र है। पूर्व वाक्य में तीन पद तथा पन्द्रह अक्षर हैं तथा उत्तरवाक्य में तीन पद तथा दस अक्षर हैं। इस प्रकार षट्पदात्मक एवं पच्चीस अक्षरों वाला यह मङ्गलास्पद द्वयमन्त्र दस अभिप्रायों को प्रकाशित करने वाला है।

---

[1] पा. भे.- दशभिः स्वर्थैर्युतं विद्धितम्।
[2] पा. भे.- संयुक्तं त्रिपदेन।

.....................................पदपरामर्शः.....................................

शुभस्यास्पदमिति च विशेषणद्वयमुभयान्वयि। पूर्वं तदन्विति पदाभ्यां नियतानुपूर्वीतां विज्ञाप्य क्रमेऽभिनिवेशं संसूच्यैकमन्त्रत्वं विवक्षितम्। सकलशुभाकरयोः श्रीरामेति पदयोर्योगादमोघभगवच्छरणवरणे विनियुज्यमानतया च शुभास्पदत्वं लब्धम्।

सर्वादौ प्रपदनक्रियावसितपूर्ववाक्यस्य यदाद्यं सर्वसौभाग्यसूचकं सकलमङ्गलस्याकरं श्रीतिपदं तद्बोध्यतत्प्रयोजनप्रभावरहस्याविष्कारेण व्याचष्टे– **सर्वाधीशेश्वरस्येति।** **त्विति** कोषोक्तरमादिप्रसिद्धार्थव्यावृत्त्यर्थम्। अत्र नित्याम्नाय-सिद्धस्य श्रीसम्प्रदायस्य द्वयमन्त्रे श्रीत्यनेन सीताभिधीयते। शक्तं पदमित्यभिप्रायेणाह– **पदेनेति।** शब्देनेत्यर्थः, पद्यते ज्ञायतेऽनेनेति करणे घञ्, सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभावः। श्रीश्च ते लक्ष्मीश्चेति मन्त्रे लक्ष्म्याः पृथक्तया तदपेक्षयाभ्यर्हितत्वात्प्राथम्येनोपात्ततया श्रियः समाख्याविशेषं यथाशास्त्रं स्थिरयति–**सीतेति।** यद्यपि अथ मे कृषतः क्षेत्रं लाङ्गल्यादुत्थिता ततः, क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुतेति जनकोक्त्या सीराग्रान्निर्गता यस्मात्सीतेत्यत्र प्रगीयत इत्यानन्दरामायणोक्तेश्च लोकसिद्धत्वं सञ्ज्ञाया ज्ञायते तथापि सीते वन्दामहे त्वेत्याम्नायस्तूयमानतयानादित्वं सिद्ध्यति। सूयते चराचरम्, सवतीष्टे, स्यति भक्तक्लेशम्, सुवति भगवत्कैङ्कर्ये प्रेरयति, सिनोति बध्नाति स्वदिव्यगुणैर्भगवन्तमित्याद्यनेकधातुभिः पृषोदरादित्वादिदं व्युत्पाद्यते शाब्दिकैः। सीतया भाति चन्द्रचन्द्रिकया यथेति श्रुतेः। यच्चरित्रेण रामायणं जीवति– श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्र इति श्रीगुणरत्नकोशोक्तेः।

**सर्वाधीशेश्वरस्याप्तेर्हेतुरत्राभिधीयते।**
**सीता पुरुषकारार्था श्रीत्यनेन पदेन तु।।36।।**

.....................................पदपरामर्शः.....................................

साक्षात्साध्यप्रापणानुगुणं तस्याः प्रभावविशेषमाह– **सर्वाधीशेश्वरस्याप्तेर्हेतुरिति।** जगज्जनन्येव जगत्पितुरभयोत्सङ्गोपलम्भने प्रभवति नान्यः कश्चित्तस्या एव तत्र

---------------------------------संवित्करः---------------------------------

पूर्व वाक्य में श्रीपद से श्रीसीताजी का ग्रहण होता है, जो सर्वेश्वर भगवान् श्रीराम की प्राप्ति में कारणस्वरूपा हैं, इसके साथ ही वह मुमुक्षुजीव एवं परमप्रभु के मध्य घटक (जीव को प्रभु के समक्ष उपस्थित कर उसे स्वीकार करने हेतु आग्रह करने वाली पुरुषकाररूप) मानी जाती है। अर्थात् इनकी कृपा के विना भगवत्प्राप्ति असम्भव है।

........................................................पदपरामर्शः........................................................

प्रभुत्वादानुगुण्यादधिकृतत्वाच्च। **आप्तिहेतुरिति** पाठे पदार्थैकादेशान्वयदोष इत्याप्तेर्हेतुरिति व्यस्तपाठो निर्दुष्टः। **आप्तेर्हेतु**रित्यत्राप्तिपदेन सायुज्यमुच्यते तेन ज्ञानदर्शने तु कैमुत्यसिद्धे। **हेतु**रित्यनेन मुख्यहेतुरुक्तस्तेनान्वयव्यतिरेकाभ्यां तदनुकम्पां विनेश्वरावाप्तेरशक्यत्वं सूचितम्, यथोक्तं तच्चरणाश्रितैः- श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृत इति। ब्रह्मविदाप्नोति परमिति श्रुत्यनुगुणं सर्वेश्वरलक्षणं पारम्यं भगवतो रामस्य प्रथमषष्ठ्यन्तेन सूचयति- **सर्वाधीशेश्वरस्ये**ति। सर्वाधीशश्चासावीश्वरश्चेति कर्मधारयः, तस्य। सर्वाधीशेत्यनेन सर्वनियामकत्व-मीश्वरेत्यनेन स्वरूपस्वभावान्यथाभावराहित्यं च सर्वकर्माराध्यत्वसर्व- फलप्रदत्वसत्य-सङ्कल्पत्वाद्युच्यते, तेनात्र न पुनरुक्तदोषः। तदित्थं सर्वशरीरित्वेन सर्वावस्थशुभाश्रयत्वेन च स्पृहणीयनित्यज्ञानानन्दमयत्वादीप्सिततमत्वं द्योत्यते। वस्तुतस्तु लोके ब्रह्मरुद्रादीनामधीश्वरशङ्कास्पदानामपीश्वरस्य नियामकस्येत्यर्थस्तेषामीश्वरत्व-व्याप्यत्वेन सोपाधिकस्वामित्वेन परापेक्षकर्तृत्वेनोपायनिष्ठत्वेनेश्वरधार्यत्वेन चेशितव्यत्वात्। तस्याः सापराधजीवेष्वपि जननीसुलभवात्सल्याद्दोषक्षमापणादिविधिना निग्रहाभिरुचिवारणेन तत्प्राप्तावनितरसाधारणं विनियोगमाह- **पुरुषकारार्थेति।** लोके यथा परावरयोर्मिथःसम्बन्धसिद्धौ कश्चित्कुशलः पुरुषो घटकतयाश्रीयते, तद्वदियं जीवात्मपरमात्मनोः। घटकतया प्रापकत्वं स्वयमीश्वरकोटावनुप्रवेशाच्च प्राप्यत्वञ्चास्या इति विशेषः। अस्या घटकत्वममोघमिति युज्यते, यथोक्तं तन्माहात्म्यचिन्तकैः-

अर्थस्वभावानुष्ठानलोकदृष्टिगुरूक्तिभिः।<br>
श्रुत्या स्मृत्या च संसिद्धं घटकार्थावलम्बनम्।।

एवंविधमहनीयार्थस्य वाचकमाह- **श्रीति।** श्रीयते भक्तैः, श्रयते भगवन्तम्, शृणोति प्रार्थनाम्, श्रावयति व्यथाकथां भगवन्तम्, शृणाति दुःखततिम्, श्रीणाति सुफलं पचति भक्तेभ्य इत्यनेकधा व्युत्पत्त्यैव तन्माहात्म्यं स्फुटति।

**मता मुरुषकारस्य नित्यसम्बन्ध उच्यते।**
**रामचन्द्रेति पदतो वात्सल्यादिगुणस्य च॥37॥**

**पदपरामर्शः**

*श्रीपदाभिधेयामभिधाय तदुत्तरवर्तिमतुपो मतुबन्तविशेष्यभूतरामचन्द्रेति पदस्य लभ्यमर्थमुदीरयति-* ***मतेति।*** *मतेति तदस्यास्त्यस्मिन्निति मतुबिति विहितस्य मतुपोऽनुबन्धविनिर्मुक्तस्वरूपस्य तृतीयान्तेन निर्देशः, भूमनिन्देति श्लोकवार्तिकेन परिगणितेष्वर्थेषु नित्ययोगे मतुब्विधानात्तेन मतुपा श्रीश्रीमतोर्नित्यसम्बन्ध उच्यते, अनन्या राघवेणाहं भास्करेण यथा प्रभेति श्रीरामायणोक्तेः। मतुपा नित्ययोगं विवक्षता मणिप्रभादीनामिव कदाचिदपि विश्लेषप्रसङ्गराहित्यं द्योत्यते, भगवान् अपूर्वो मणिः स्वयं प्रकाशते अन्यप्रकाशने तमोनिरसने च प्रभास्थानपत्नीं श्रीसीतादेवीं प्रतीक्षते। यथोक्तं प्रभावान् सीतया देव्या परमव्योमभास्कर इति। मतुपा पुरुषकारस्य घटकस्य नित्ययोगमुक्त्वा तदीयाभयदानसमाश्वासनस्य साफल्येऽसन्देहो गम्यते, पुरुषकारस्य केन सह नित्यसम्बन्ध इत्यनुयोग्याकाङ्क्षायां श्रीमत्तया स्वयं भगवान् समुपतिष्ठते, तेन श्रीप्रतियोगिको भगवदनुयोगिको नित्यसम्बन्ध इति फलति। मतुबन्त-श्रीमत्पदोत्तरवर्तिरामचन्द्रपदगम्यमाह-* ***वात्सल्यादिगुणस्य नित्ययोग उच्यते*** *इति। विदितः स हि धर्मात्मा शरणागतवत्सल इत्याद्युक्त्वा वात्सल्यादिगुणयोग लभ्यते, आदिपदेन सौशील्यमाधुर्यौदार्यदृढव्रतत्वसत्यवादित्वसामर्थ्यसौन्दर्यादयो गुणाः संसूचिताः-*

*रघोः कुलेऽखिलं राति राजते यो महीस्थितः ।*
*स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः॥*
*राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवेति श्रुतेः।*
*आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः।*
*राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम् ॥*
*इति श्रीरामायणोक्तेः। अत एव पौरैरुक्तम्-*
*बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते।*

**संवित्करः**

**पूर्व वाक्य के मतुप्प्रत्ययान्त श्रीमत् शब्द के मतुप् प्रत्यय द्वारा श्रीमान् भगवान् श्रीराम का पुरुषकारस्वरूपा श्रीवाच्यश्रीसीताजीके साथ नित्यसम्बन्ध बताया गया है। रामचन्द्र पद से श्रीरामप्रभु के साथ वात्सल्य सौलभ्य सौशील्य कारुण्य शरण्यत्वादि अपरिमित गुणों का नित्ययोग ज्ञात होता है। अर्थात् ये कल्याणमय गुण कभी भी प्रभु से पृथक् नहीं होते।**

........................................................पदपरामर्शः........................................................

*गुणान् गुणवतो देव देवकल्पस्य धीमतः।।*
*प्रियानानन्दनान् कृत्स्नान् प्रवक्ष्यामोऽद्य तान्शृणु।*

*नाम्नापि रमणाश्रयता लोकाभिरामंसौम्यतामृतस्राववित्वपोषकत्वप्रकाशकत्वादयो गुणा अर्थतः सिद्धा भवन्तीति* **रामचन्द्रेति** *पदतो वात्सल्यादिगुणस्य नित्ययोग उच्यते इत्युक्तम्।*

**चरणावित्यनेनैव वात्सल्यादिकसीतयोः।**
**विलक्षणस्य दिव्यस्य विग्रहस्याश्रयस्य च।।38।।**

........................................................पदपरामर्शः........................................................

*अत्र प्रपदनकर्मीभूतं चरणाविति विशिष्टं शक्तिस्वाभाव्यादाधारपरतयाश्रयं सूचयति, तस्य स्वानुयोगिनं प्रति नित्यसाकाङ्क्षतया विशेषणार्थानुसन्धानेन तन्नित्ययोगार्थाध्याहारेण च व्याख्याति-* **चरणावित्येति।** *पूर्वं श्रीपदेन पुरुषकारभूता श्रीसीतोक्ता, मतुपा नित्ययोगः, रामचन्द्रेपदेन वात्सल्यागुणस्य तत्र नित्ययोग इत्युक्त्वा अत्राश्रयभूतचरणयोस्तदाश्रयताभिधीयते। वात्सल्यादिकं सीता च वात्सल्यादिकसीते, सीतेत्यस्याल्पाच्त्वेऽपि षष्ठीसमासभ्रमवारणाय परप्रयोगः, तयोराश्रयस्य च मिथो नित्ययोगश्चरणावित्यनेनोच्यते वात्सल्यादिगुणानामाश्रयस्य च नित्ययोगः सीताया-श्चाश्रयस्य च मिथः नित्ययोग उच्यते, न केवलं तयोरेवापितु विलक्षणदिव्य-विग्रहस्याप्याश्रयस्य च मिथो नित्ययोग उच्यते इति पदानामन्वयः।* **चरणावित्य-** *नेनान्याङ्गापेक्षा सौलभ्यन्तु स्वतो गम्यते, तावेव सम्पूर्णविग्रहस्याश्रयभूतावित्यपि सर्वानुभवसिद्धम्। भगवच्चरणावाश्रित्य विलसतो भगवद्विग्रहस्य वैशिष्ट्यमाह द्वाभ्यां पदाभ्याम्-* **विलक्षणस्य दिव्यस्येति।** *प्रतिक्षणमदृष्टपूर्वतया निरतिशयौज्ज्वल्या-पूर्वरूपसंस्थानवैभवादिविस्मयावहत्वेन नवनवायमानत्वेन चानुभूयमानतयाद्भुतत्वमेव विलक्षणत्वम्। तदेव शुभाश्रयत्वेऽपि सुकुमारौ महाबलावित्यादिना विरुद्धगुणाश्रयत्वरूपं विलक्षणत्वमाहादिकविः अत उक्तम्-*

*रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम्।*

--------------------------------संवित्करः--------------------------------

"चरणौ" पद से यह ज्ञात होता है कि जैसे वात्सल्यादि गुणों तथा श्रीसीता के नित्य आश्रय भगवान् श्रीराम हैं, वैसे वे अपने अद्भुत सच्चिदानन्दमय दिव्यश्रीविग्रह के भी नित्य आश्रय हैं। अर्थात् दिव्यगुण, एवं श्रीसीताजी के साथ जैसे उनका नित्ययोग है वैसे उनके अप्राकृत दिव्य श्रीविग्रह के साथ भी नित्य योग है।

.....................................................पदपरामर्शः.....................................................

दद‍ृशुर्विस्मिताकारा रामस्य वनचारिणः।।

नित्यकैशोर्येण समस्तहेयराहित्येन शुद्धसत्त्वमयत्वाच्चाप्राकृतत्वं द्योतयति- **दिव्यस्येति।** अत एवोक्तं ब्रह्मणा- अस्यापि देववपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि, नेशे महित्ववंसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः। यश्च सेव्यते स एव सेवकस्याश्रयो भवति भर्तुः पादच्छाया विशिष्यत इत्यभिदधानाया श्रीसीतादेव्या भगवच्चरणावाश्रित्यैव जीवन्त्या तदेकाश्रयत्वन्तु सिद्धमेव, सा श्रीः स्ववासमरविन्दवनं विहाय तत्पादसौभगमलं भजतेऽनुरक्तेति भागवतोक्तेः, वने निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य संमतेति रामायणे श्रीसीतादेव्युक्तेश्च। या खलु पाताल-प्रवेशावसरेऽपि मनसा तावेवाश्रयन्ती विवरं प्राविशत्- ध्यायन्ती रामचरणौ विवरं प्रविवेश हेति भागवतोक्तेः। आश्रयभूतयोश्चरणयोर्वात्सल्यादिगुणैर्नित्ययोगस्तु निपुणतरमुपपाद्यते ध्येयं सदा परिभवघ्नमभीष्टदोहमिति भागवतपद्यमाश्रित्य। तथाहि सदा ध्येयमिति, सौन्दर्यसौलभ्यादि, परिभवघ्नमि नीचानादृतजनदोषाद्यविचारेण स्वीकरणं सौशील्यम्, अभीष्टदोहमित्यौदार्यम्, तीर्थास्पदमिति परमपावनत्वम्, शिवविरिञ्चिनुतमित्यनेन महैश्वर्यम्, शरण्यमित्याश्रितवात्सल्यम्, भृत्यार्तिहमिति कारुण्यम्, प्रणतपालेत्यस्य समस्तपूर्वावयवतया विशेषणत्वपक्षे आश्रितरक्षकत्वं भवाब्धिपोतमिति संसारार्णवतारकत्वमिति सूचितगुणैर्नित्ययोगः प्रतिपाद्यते **चरणावित्यनेन।**

**शरणेतिपदेनैवोपायस्तद्विग्रहो बुधैः।**
**उपायाध्यवसायस्तु प्रपद्य इति वर्ण्यते।।39।।**

.....................................................पदपरामर्शः.....................................................

''शरणं प्रपद्ये'' इति पदद्वयगम्यमर्थमेकैकमभिधत्ते- **शरणेतीति।** रक्षाप्रार्थनायां रक्षितोपायो भवति स चात्र शरणपदेन वर्ण्यते शरणं गृहरक्षित्रोरिति कोषात्। अहिर्बुध्न्यसंहितायामप्यस्योपायपरत्वमुक्तम्- उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम्

-----------------------------संवित्करः-----------------------------

**शरण पद से उपाय विवक्षित है, वह उपाय प्रभु का करुणामय विग्रह (स्वभाव) ही है, (जिसे गोस्वामीजीने ''प्रभु मूरति कृपामयी है'' इस शब्दों से व्यक्त किया है) प्रपद्ये इस क्रिया पद से उपायाध्यवसाय अर्थात् उपायविषयक निश्चयात्मिका अन्तःकरण की वृत्ति का निर्देश किया गया है।**

पदपरामर्शः

वर्तते साम्प्रतस्त्वेष उपायार्थैकवाचकः। शरणं न केवलमुपायस्तद्विग्रहोऽपि। रक्षितुर्गोप्तृत्वेन वरणविधौ शब्दात्मना मन्त्रे तन्निवेशाच्छरणमित्युक्तेरुपायाकारता, शरणमित्युक्तिक्षमं रक्षतीत्युक्तेः।

**प्रपद्ये** इति प्रपूर्वकाद् दिवादिगणस्थात् पद गताविति धातोः कर्तरि लट्युत्तमपुरुषैकवचने रूपम्। सोपसर्गधातुविशेषोऽयमत्राध्यवसायवैशिष्ट्यं व्यनक्ति। अतः प्रपत्तिरिति वैष्णवनिकाये सविशेषं प्रथते, सा च शरणशब्दान्वितप्रपद्येपदप्रयोगेण प्रार्थनान्वितो भरन्यासः।

यद्यपि प्रपद्य इत्यत्र गत्यर्था बुद्ध्यर्था इति रीत्या बुध्यर्थकेन धातुनाऽध्यवसामात्रमुपस्थाप्यते तथापि समभिव्याहृतशरणशब्दार्थपरामर्शादुपायाध्यवसाय इत्युच्यते, तेन प्रार्थनाद्यन्वितात्मभरन्यासं विदधामीत्युक्तं भवति। विषयमधिकृत्य गौरेवायमित्यवसायो निश्चय एवाध्यवसायो भवति। व्यवहर्त्ता स्वकर्तव्यमध्यवसीयैव प्रवर्तते, तत्र योऽयं कर्त्तव्यमिति विनिश्चयः स बुद्धेरसाधारणधर्मरूपोऽध्यवसायः प्रोच्यते। अत्र रक्षकत्वेन वृत उपायभूतो भगवान् नूनं मां रक्षिष्यतीत्येवं बुद्धेर्निश्चय एवोपायाध्यवसायः, स च प्रपद्य इति क्रियापदेन निरूप्यत इति भावः। अत्र लटा विधीयमानो वर्तमात्वव्यपदेशोऽनुष्ठानकालाभिप्रायेण, यथा बर्हिर्देवसदनं दामीतित्यत्र दामीत्यनुष्ठानकालमभिप्रत्यैव प्रयुक्तं तद्वदिति। इत्थं शरणं प्रपद्ये इत्यनेन गोप्तृत्ववरणमात्मनिक्षेपश्चेति द्वयं सम्पद्यते।

**प्राप्यं मिथुनमेवेति श्रीमते पदतो मतम्।**
**रामचन्द्रेति पदतः स्वामित्वं प्रतिपाद्यते॥40॥**

पदपरामर्शः

उत्तरवाक्यस्य "श्रीमते" इति चतुर्थ्यन्तस्य पदस्याभिप्रेतार्थमाह- **प्राप्यमिति।** ब्रह्मविदाप्नोति परमिति श्रुतिबोधितं परपदबोध्यं प्राप्यं मिथुनं युगलं श्रीसीतारामात्मकमुभयोर्नित्ययोगादित्येवार्थः "श्रीमते" इत्यनेनाभीष्टः। **मिथुनमिति** कथनादेव तदतिरिक्तस्य प्राप्यत्वनिवृत्त्यात्रत्यैवकारेणोभयोर्गौणमुख्यभावो व्युदस्यते। महेन्द्रदेवता-

संवित्करः

उत्तरवाक्य के "श्रीमते" पद से यह प्रतिपादित होता है कि जीवमात्र के प्राप्य युगल स्वरूप श्रीसीतारामजी हैं। रामचन्द्र पद से प्रभु का निरुपाधिक सर्वस्वामित्व प्रतिपादित होता है।

.....................................................पदपरामर्शः.....................................................

कयागवदुभयोरात्महविरुद्देशार्हत्वं सर्वविधकैङ्कर्यप्रतिसम्बन्धित्वञ्चैतेन सूच्यते- शेषित्वस्योभयनिष्ठत्वात्। उत्तरार्धेन रामचन्द्रेति पदावसेयमाह- **स्वामित्वमिति।** निरुपाधिकशेषित्वमित्यर्थः। देवतान्तरस्यास्वामित्वात्कषायपानवद् विरसमपि हितबुद्ध्या तदुपासनं सम्बन्धाज्ञानमूलम्। **रामचन्द्रेति** नाम्नैवा विषयाभिरूप्येण विकृतभयङ्कर-तत्त्वान्तरभजनाद्व्यावृत्तिर्भवति। "स्वामिन्नित्यैश्वर्ये" इत्यनुशासनादैश्वर्य एव स्वामि-न्निति निपातनात्पदमिदमीश्वरविषयम्। राजादिषूपचारतो नियमनवैभवादितल्लेशदर्शनात् प्रयुज्यते, नित्यनियमनव्यापनसार्वरयादिसामर्थ्यवति श्रीरामे भगवति तु स्वामित्वयोगगो युक्त एव, तदतिरिक्तस्य सर्वस्य तन्नियम्यत्वात्। अतो राजा रामचन्द्र एव, अद्यापि लोके राजा रामः रामराज्यमित्याद्यनन्यसाधारणतया जोघुष्यते। समुदायस्य सञ्ज्ञात्वेऽपि प्रत्येकं स्वामित्वं श्रुतिस्मृत्यादिसिद्धम्। राजते यो महीस्थित इति श्रौतनिर्वचनाद्रामपदेन सोमोऽस्माकं ब्राह्मणानां राजेति श्रुतेश्चन्द्रपदेनापि राजलक्षणं स्वामित्वं प्रकाश्यते। अत एव भगवन्तमुद्दिश्य दण्डकारण्ये तापसैरुक्तम्- नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर इति।

**विभक्त्यायेतिपदतः शेषवृत्तिर्महात्मभिः।**
**विरोधिनो निरासस्तु नमः पदेन वर्ण्यते॥41॥**

.....................................................पदपरामर्शः.....................................................

रामचन्द्रायेत्यस्य प्रकृतिभागस्य स्वामित्वरूपमर्थमभिधायेदानीन्तदुत्तरवर्ति-चतुर्थ्येकवचनस्य ङेस्थानिकयादेशतन्निमित्तकदीर्घविशिष्टाकारतां प्राप्तस्यायेत्यस्य विभक्तित्वातिदेशेन तदर्थमवधारयति- **विभक्त्यायेतीति।** महात्मभिर्विशद-बुद्धिभिश्चतुर्थ्याऽत्र शेषवृत्तिर्भगवदधीनताप्रत्ययदार्ढ्येन तत्कैङ्कर्यमिति वर्ण्यत इत्यर्थः। प्रत्ययमात्रस्यापि कृते पदशब्दव्यवहारः प्रत्ययवाचकतापक्षमाश्रित्य शेषवृत्तिरूपो-ऽर्थविशेषः पद्यते ज्ञायतेऽनेनेत्यर्थविशेषाभिधायकत्वाभिप्रायेण। वस्तुतः शाब्दिकनये

-----------------------------------संवित्करः-----------------------------------

"रामचन्द्राय" पद की चतुर्थी विभक्ति (ङेस्थानिक आय) के द्वारा जीव की शेषवृत्ति अथात् कैङ्कर्यपरायणता का निर्देश किया गया है तथा नमः शब्द से भगवत्प्राप्ति के विरोधी का निरास अथात् प्रातिकूल्यवर्जन सूचित किया है।

..........................................................पदपरामर्शः..........................................................

वाक्यस्फोटस्य मुख्यत्वे प्रकृतिप्रत्ययविभागस्य तु काल्पनिकत्वमेव। यथोक्तं हरिणा- उपेयप्रतिपत्त्यार्था उपाया अव्यवस्थिता इति। शेषस्य वृत्तिर्व्यापारः, भगवदर्थोऽहमिति तदधीनशेषस्य मम वृत्तिर्भगवदर्थवर्तनमनन्यकैङ्कर्यं तदनन्यदास्यमिति। यथा "सौर्यं चरु" इति सूर्यदेवतोद्देश्यकमिति भगवदुद्देश्यकजीवस्य तादर्थ्येन वर्तनमित्यर्थः। तादर्थ्ये चतुर्थी वाच्येति वार्तिकेन तादर्थ्यस्य चतुर्थीविभक्त्यर्थतयोक्तेः। यदा च तादर्थ्यस्य सम्बन्धत्वेन प्रत्ययस्तदा भगवतोऽहमित्यादौ षष्ठ्यपि जायते। चरमपदत्वेनोपस्थितस्य "नमः" इत्यस्य सखण्डतां मनस्याधाय मः मृपदवाच्यस्य जीवस्य जीवः शेषो नेत्यर्थबोधनाज्जीवो भगवतो नित्यशेषः स भगवद्व्यतिरिक्तस्य कस्याप्यन्यजीवस्य स्वस्य वा शेषो भवितुं नार्हतीत्यर्थः। भगवदनन्यशेषस्य जीवस्य तदतिरिक्तशेषत्वे सहानवस्थानत्वरूपो विरोधः, अनन्यभगवच्छेषत्वस्यान्यशेषत्वस्यैकस्मिन्नधिकरणे सहानस्थानस्ययुक्ततया तन्निरासस्य युक्ततया नमःपदेन विरोधिनो भावस्य निरासो वर्ण्यते। नित्यभगवदैकशेषत्ववृत्तेर्जीवस्यान्यशेषत्वनिवृत्त्या विरोधिनो भावस्य निरासो जायते। वस्तुतो सर्वशेषित्वं भगवत्येव, जीवस्य नित्यभगवच्छेषत्वम्, तथात्वे तस्य पुनरन्यशेषत्वभ्रमः स्वरूपविरोधी, नित्यभगवदैकशेषे तदन्यशेषत्वस्यायुक्तत्वात्, न ह्युपाधेरुपाधिर्भवतीति। युक्तमाह- महाभाष्यकारेणोभयत आश्रयणे नान्तादिवदिति विवेचनावसरे- लोके यो द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोतिं, यदा तु तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदा यद्यसाविरोधार्थी भवति तत उभयोर्न करोति। किम्पुनः कारणमुभयोर्न करोति, यौगपद्यासम्भवात्, पारतन्त्र्यविरोधादिति भावः। यद्वा कैङ्कर्यनिष्ठाचार्यनिष्ठाद्यभावः कामादिविकारसत्त्वम्, वैराग्याद्यभावोऽकृत्यकरणं विहिताचारोपक्षेत्यादयो दोषा भगवत्प्राप्तौ विरोधिनः, इत्थम्भूतविरोधिनो निरासो नम इत्यनेन वर्ण्यते।

**तात्पर्यार्थोऽस्य विज्ञेय आचार्यरुचिसंश्रयः।**
**वाक्यार्थो मन्त्ररत्नस्य त्वथ निर्णीयते बुधैः॥42॥**
**प्राप्यप्रापकसम्बन्धस्वरूपाभिनिरूपणम्।**
**प्रधानार्थस्तु तद्युग्मकैङ्कर्यस्य प्रधानता॥43॥**
**स्वदोषाभ्यनुसन्धानमनुसन्ध्यर्थ उच्यते।**
**एवमेवानुसन्धेयं मोक्षकामैरहर्दिवम्॥44॥**

.......................................................**पदपरामर्शः**.......................................................

*द्वयमन्त्रस्य मन्त्ररत्नमिति श्रौती सञ्ज्ञा, यो दाशरथेर्द्वयाख्यं मन्त्राणां प्रवरं मन्त्ररत्नमधीते, स सर्वान् कामानश्नुते विपश्चिता तेन सह मोदत इति श्रुतेः।* ***मन्त्ररत्नेत्यनेन*** *शास्त्रोदधिमन्थनसमुत्थिततया दुर्लभत्वमद्भुतत्वं महासारत्वममूल्यत्वं रक्षणीयत्वञ्च बोध्यते। तादृशमन्त्ररत्नस्य तात्पर्यार्थ- वाक्यार्थ-प्रधानार्थानुसन्ध्यर्थनिकरो बुधै यथासम्प्रदायं मन्त्राक्षरस्वारस्यकोविदैर्निर्णीयते विमृश्येदमित्थमिति निश्चीयते। अथ तात्पर्यार्थमाह-* ***अस्य मन्त्ररत्नस्याचार्यरुचिसंश्रयस्तात्पर्यार्थो विज्ञेयः।*** *आचार्यस्य मन्त्रोपदेष्टू रुचेः जीवो मुक्तये श्रीश्रीमतोः सीतारामचन्द्रयोश्चरणावुपायधिया प्रपद्येतेत्याकारकाभिलाषस्यानुसारेण संश्रयः प्रपत्त्यनुष्ठानं विधेयमिति तात्पर्यार्थः। वक्तुराचार्यस्येच्छाविषयस्यैव तत्त्वाद् गङ्गायां घोष इत्यस्य शीतत्वपावनत्व-प्रत्यायनेच्छयोच्चरितत्ववत्। वाक्यगतपदार्थानां मिथोऽन्वयेन निश्चितं वाक्यार्थमाह-* ***प्राप्यप्रापकसम्बन्धस्वरूपेति।*** *पूर्ववाक्ये प्रपद्य इत्यनेन प्रपदनक्रियाश्रय-प्रापकस्वरूपमुत्तरवाक्येन च नमस्करणक्रियाविषयभूतस्य श्रीसीतारामात्मकस्य प्राप्यस्य स्वरूपं प्रकाश्योभयोः स्वस्वामिभावादिसम्बन्धस्य निरूपणं क्रियते। पूर्वं प्रापकस्य*

-------------------------------**संवित्करः**-------------------------------

आचार्य की रुचि (यह जीव परमप्रभु श्रीरामजी का शरणापन्न हो उनकी भक्ति करें, इस प्रकार के आशय) का संश्रय (अनुसरण करना) यह इस मन्त्र का तात्पर्यार्थ है। प्राप्य (सर्वेश्वरश्रीरामजी) तथा प्रापक (जीव) के स्वरूप एवं परस्पर सम्बन्ध की दृढ भावना, मन्त्र का वाक्यार्थ है ऐसा विद्वज्जनों ने निर्णीत किया है कि युगलप्रभु श्रीसीतारामजी के कैङ्कर्य की प्रधानता ही प्रधानार्थ है। ''सर्वदा अपने दोषों का अनुसन्धान कर उसके परिमार्जन के लिये जागरुक रहना'' यह अनुसन्ध्यर्थ है। मुमुक्षुओं को इस प्रकार मन्त्रार्थ का सर्वकाल अनुसन्धान करते रहना चाहिये।

.........................................पदपरामर्शः.........................................

पश्चात्प्राप्यस्योक्त्यापि समासेऽल्पाच्त्वादभ्यर्हितत्वाच्चोक्तिक्रममुपेक्ष्य प्राप्यपदस्य पूर्वप्रयोगः। सम्बन्धस्य मिथोनिरूपितत्वेनोभयनिष्ठत्वाच्चत्रोभयोरुपादानम्। किमुद्दिश्य यदुपजीव्य मन्त्रः प्रवृत्तस्तदेव प्रधानार्थस्तमाह– **प्रधानार्थस्त्विति।** युग्मस्य श्रीसीतारामात्मकस्य परमसेव्यस्य युगलस्य यत्कैङ्कर्यं दास्यं तदेव प्रधानार्थस्तस्यैव वाक्ये प्राधान्यात् तन्नित्यकैङ्कर्यप्राप्तेरेव परमपुरुषार्थभूतमोक्षरूपत्वाच्च। मोक्षकामै-र्मुमुक्षुभिरहर्दिवं प्रतिदिनं किमनुसन्ध्येयमित्यतोनुसन्ध्यर्थमाह– **स्वदोषानुसन्धानमिति।** अन्यशेषत्वादिभ्रमप्रयुक्तदोषाणां स्वकीयानामनुसन्धानं विचारः सर्वदोषाणां मिथ्याज्ञान-मूलत्वात्। एतेनात्मकार्पण्यमुक्तम् यद्यप्यत्र दोषाणां निवारणीयतया तन्निवारणे साधकजागरुकता विवक्षिता तथापि निवारणप्रवृत्तेः प्राक्तेषां हेयतया स्वस्मिन् विद्यमानताबोध आवश्यकः, लोके स्वदोषानपि गुणतयां परिगणय्याभिमन्यमानामपि दर्शनात्। न मे धर्माद्यनुष्ठाने प्रवृत्तिः, परमपुरुषार्थे वाभिरुचिः, प्रत्युत शास्त्र-विधानोत्क्रमणं जगति विद्यादेर्मिथ्याभिमानो निर्दयता कामक्रोधदम्भादयो भगवत्कृतोपकारविस्मरणमित्यादीन्यनन्तान्यतिघोराणि पापानि सन्तीति महत्तरदोष-भराक्रान्तत्वादेव मयि परमकारुणिकोऽपि भगवान्न मोक्षमार्गे प्रवर्तयत्येवं भूयो भूयो विचार एव स्वदोषानुसन्धानम्, बद्धस्यापराधयोगस्तु निसर्गसिद्धो, न कश्चिन्नांपराध्यतीति श्रीरामायणे जगज्जनन्युक्तेः।

**प्रोक्ता वत्सक! मन्त्ररत्नविवृतिः सन्मानसाभीष्टदं**
**सद्वेद्यं सकृदित्यवेहि चरमं निर्णीतवाक्यार्थकम्।**
**रामीयं हि तदीयमन्त्रनिरतैरुद्बोधनीयं परं**
**द्वात्रिंशत्प्रमिताक्षरं मनुपदं द्व्यर्द्धं जगद्विश्रुतम्।।45।।**

.........................................पदपरामर्शः.........................................

विशदतमार्थावबोधनसमर्थेन तवाचार्येण मयका मन्त्ररत्ननाम्ना प्रथितस्य द्वयस्य विवृत्ती

-----------------------------संवित्करः-----------------------------

वत्स! मैंने पूर्वश्लोकों द्वारा मन्त्ररत्न (द्वयमन्त्र) का विवेचन किया, अब सन्तों को अभीष्ट फल देने वाला, सत्पुरुषों द्वारा जानने योग्य, निर्णीत वाक्यार्थ वाला, राममन्त्रपरायण साधकों को अवश्य बताने योग्य, अभयदायी श्रीरामजी का उदारघोषणास्वरूप, जो जगत्प्रसिद्ध चरममन्त्र (सकृदेव प्रपन्नाय तवास्मीति याचते, अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम) है, जिसमें बत्तीस अक्षर, चौदह पद तथा पूर्वार्ध एवं उत्तरार्ध के रूप में दो विभाग हैं। उसका रहस्यात्मक विवेचन श्रवण करो।

.........................................................पदपरामर्शः.........................................................

रहस्यानुसन्धानार्था पदपदार्थान्वयविच्छित्त्या महता प्रागल्भ्येनोक्ता, इदानीं क्रमप्राप्तं चरममन्त्रं तद्रहस्यं विवक्षता पूर्वं शब्दात्मना तदाकारमवधार्य तदर्थानुचिन्तनस्य वैष्णवैरवश्यकर्त्तव्यतामभिधातुमुपक्रम्यते- **प्रोक्तेति।** तत्रादौ वक्ष्यमाणार्थ-गौरवानुगुणापेक्ष्यमाणावधानतायै द्रवद्वात्सल्यसिक्तसम्बुद्ध्याऽभिमुखीकरोति- **वत्सक** इति। अत्रानुकम्पार्थको ह्रस्वार्थकश्च तद्धितः **कः** परामौचितीं बिभर्ति। स्तन्यमात्रा-वलम्बिनो स्तनन्धयस्येवानुपेक्षणीयत्वाभिव्यञ्जनेनाचार्यकृपामात्रैकपरिपाल्यत्वं द्योत्यते, उपदेशस्य च वात्सल्यैकप्रयोज्यत्वम्। सकृदित्यारभ्यमाणं वाल्मीकीयरामायणोक्तं पद्यं त्वं चरममन्त्रेत्याकारेणावेहीति वाक्ययोजना। **चरमम**ित्यस्य विशेष्यभूतं द्वितीयान्तपदं मन्त्रमित्यध्याहार्यम्- मन्त्रार्थविवेचनप्रस्तावात्। चरममन्त्रस्वरूपञ्चैवम्-

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥

अत्र मन्त्रस्याद्यैकदेशसकृत्पदमुपादाय तदादिसकलपदघटितश्श्लोकः परामृष्टः। लोक **इति**पदं पदार्थविपर्यासकत्वात्समभिव्याहृतशब्दस्वरूपद्योतकम्। इतिशब्दस्यादि-परत्वमपि, तेन सकृदादिपदकदम्बकलसितमित्यर्थः। रामायणस्थो यः सकृदित्यारभ्य-माणश्श्लोको जगति भगवत्प्रतिज्ञावाक्यतया विश्रुतः, तं पूर्वाचार्यैश्चरममन्त्रतया समादृतं सेवितञ्च वैष्णवत्वात्तदनुगामी त्वं चरममन्त्र इत्याख्ययावधारयेति भावः। अत एव **जगद्विश्रुतमित्युक्तम्।** सर्वावतारेषु सर्वाधिकप्रसिद्धस्य श्रीरामस्य वेदात्परं सर्वादौ काव्यात्मनाऽवतीर्णं तत्पावनचरितोत्तम्भकं रामायणमेव विश्रुतम्, तत्रापि वैष्णवसिद्धान्तजीवातुभूतप्रपत्तिस्वरूपोपस्थापकतया भगवत्प्रतिज्ञावाक्यत्वेनोदाराभय-दानोद्घोषकतया च सर्वस्वभूतं निहितार्थगौरवेण जगद्विश्रुतमितिभावः, गुरूपदेशाभावे-ऽपि रामायणतः पाठकमात्रेणोपलब्धेः। ये न रामभक्ताः सन्ति न वा वैदिक-धर्मानुष्ठातारस्तादृशेष्वपि प्रसिद्धमिति यावत्। अतोऽस्य सम्प्रदायान्तरेऽपि समादरो बोधितः। शास्त्रान्वितत्वात्परिनिष्ठितशब्दमात्रस्य सम्यग्ज्ञानप्रयोगद्वारकं कामधुक्त्वं शास्त्रे प्रोक्तमस्य तु मन्त्रत्वेन दिव्यशब्दराशित्वात्तत्सुतरामित्याह- **सन्मानसाभीष्टदमिति।** सतां तदुपासकानां मानसाभीष्टं मनोरथं ददातीत्यर्थः। यद्वा सन्निर्मलं मानसं येषां तादृशां विमलचेतसामभीष्टदं वाञ्छितपूरकमिति। तेनास्य भगवत्प्रापकत्वमपि सूचितं भवति, न हि निर्मलान्तःकरणानां सतां भगवद्व्यतिरिक्ते वस्तुनीष्टताबुद्धिर्जायते।

....................................................पदपरामर्शः....................................................

मन्त्रस्य विषयप्राशस्त्यमाह- **सद्वेद्य**मिति सद्भिः साधुभिर्वेद्यं वेदितुं योग्यम्। न हि सन्तोऽसद्वस्तु बुद्धावानयन्तीति- **सद्वेद्यं नाम परमार्थवस्तु।** न गुरुमुखात्त-दक्षरराशिग्रहणमात्रे पर्यवसेयमपितु पदार्थावधारणद्वारा यथावस्थिताकारेण तद्रहस्यं निश्चेयमिति भावः। यद्वा सच्छब्दस्य प्रशस्ताभ्यर्हितयोः सत्त्वात् प्रशस्तज्ञेयमिति। अभयहेतुप्रतिपादकत्वादभ्यर्हितत्वमपि। यथोक्तं वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनमिति। **चरम**मिति मन्त्रार्थस्य सर्वापवादतया विद्यान्तराबाध्यत्वं सूच्यते, न हीमं सम्यग् विज्ञाय किमपि ज्ञातव्यं शिष्यत इत्यमोघाभयफलोपधायकतया पर्यवसितमिति यावत्। चरमोपायप्रतिपादकत्वाच्च**रमत्वम्।** प्रसादगुणसम्भृतत्वान्निर्णीतः प्रभूतोपोहापोहेन विविच्य निर्धारितो वाक्यार्थः पदानामन्वित्या विमृष्टसमुदायार्थो यस्येति बहुव्रीहौ समासान्तः कप्। नात्र पदाध्याहारापेक्षा, नानन्वितार्थकता, न दूरान्वयता न वा जर्फरी तुर्फरीतिवन्निरर्थकपदकदम्बकमिति प्रतीतिसौकर्यमुक्तम्।

अभयप्रदाता स्वयं भगवानेवास्याद्योपदेष्टेति वक्तृमूलकं वैशिष्ट्यमाह- **रामीयमिति।** रामप्रोक्तं रामसम्बन्धि वार्थः। रामाल्लब्धतया तस्य प्रसादरूपतेत्यतः **परमुत्कृष्टमनुपेक्षणीयम्।** अहो उपेय एव करुणयोपायतां गत स्वावाप्ताव-निष्टनिवारणस्यामोघसाधनं प्रयच्छतीत्यौदार्यकाष्ठा। यथाक्षरसमाम्नायो महेश्वरा-त्पाणिनिना लब्धस्तथा सत्यसङ्कल्पात् अप्यहं जीवितं जह्याम् रामो द्विर्नाभिभाषत इत्येवं दृढप्रतिज्ञतया लोकविश्रुतनामधेयाद्रामात्प्राप्तमिति भावः। तदैश्वर्यानुरूपनिरुपाधिक-कारुण्यात्प्रपन्नजनतासंरक्षणदीक्षिताद् भगवत ऋषिभिरवाप्तम्। तथाविधसर्वसमर्थस्य तस्यैवंविधं प्रतिज्ञानं युज्यते नान्यस्येति सूचयितुं विशिनष्टि- **रामीयमिति।** तेन प्रतिज्ञातुराप्ततमत्वात्तल्लब्धस्य यथावस्थिताकारेण परिग्रहौचित्यं सूच्यते। रामीयत्वात्परमुत्कृष्टं तत एव तदीयमन्त्रनिरतैरुद्बोधनीयमिति हिर्द्योतयति। **परमुत्कृष्टम्,** परशब्दस्य केवलार्थतया, तदर्थोद्बोधनेऽपि कल्याणं ध्रुवमिति। **तत्पदेन** पूर्वोच्चारितपदप्रकृत्यर्थो रामः परामृश्यते। राममन्त्रानुष्ठानपरायणैराचार्यैरुद्बोधयितुं योग्यम्। **निरतै**रित्यनेन नामार्थयोरभेदधिया मन्त्रे परमासक्तिर्ध्वन्यते। णिच्यणिचि रूपसाम्यात्तदर्थवेतृभिराचार्यैरुद्बोधनीयं ज्ञाप्यम्, तज्जिज्ञासुभिः साधकैश्च ज्ञेयमिति चार्थः परमासक्त्या मन्त्रपरिग्रहेण सञ्जातसत्त्वशुद्ध्याऽचिरेण तदर्थः प्रस्फुरतीति भावः। यद्यपि साधकपक्षे प्राप्तमन्त्रजपावसरेऽपि सामान्यः पदपदार्थोपस्थित्या कश्चिदर्थस्तु

..............................पदपरामर्शः..............................

*नियमेन प्रतीयत एव, तथापि निरन्तरानुष्ठानेन निर्मलचेतस्सु तात्पर्यविशेषावतयेऽभिलाषो जायत इत्याकूतम्। तेन मन्त्रार्थग्रहणपात्रता तेषां सूच्यते।* **उद्बोधनीयमित्यनेन** *जपापेक्षयाऽभिप्रायानुसन्धानस्य समधिकफलप्रदत्वं विवक्षितम्। चतुष्पादात्मकस्य चरममन्त्रस्य तदानुपूर्वीशब्दस्वरूपं तद्घटिताक्षरपदादिपरिच्छेदेन परिचाययति-* **द्वात्रिंशत्प्रमिताक्षरमित्यादि।** *अनुष्टुप्त्वाद् द्वात्रिंशता संख्यया प्रमितानि-अन्यूनानतिरिक्तवृत्त्या परिगणितान्यक्षराणि यस्मिन् तम्, पूर्व साधनं कृतेति समासस्ततो बहुव्रीहिः। अत्र प्रमितशब्दादक्षराणामेव प्रमितत्वं न तु तदाशयस्य, रहस्यवैपुल्यादित्यर्थो ध्वन्यते। अक्षरत्वन्तु शुद्धस्य विशिष्टस्य च वर्णस्य, शुद्धवर्णवाचित्वे तु त्वत्रानुष्टुभं स्वरूपं नोपपद्येत, अतो रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिन इति वचनं सङ्गच्छते। यथाक्षरसमाम्नाये क्रमविशिष्टैः प्रमिताक्षरैर्ब्रह्म प्रतिपाद्यते, तथैवात्र नियतानुपूर्व्या परिमितैरेव वर्णैः शास्त्रसार इति। पदपरिगणनमुखेनाचष्टे-* **मनुपदमिति।** *मनुपदं चतुर्दशसङ्ख्यापरम् तेन मनुमितानि चतुर्दशपदानि यत्र, चतुर्दश-पदात्मकमिति यावत्। यद्वा मनोर्मनीषिजनमाननीयतयोत्कृष्टता तादृशमुत्कृष्टं पदं स्थानं यस्येत्यर्थो वा। शरणागतिप्रधानभागवतधर्मवक्तृषु भागवतस्य मनोरप्यन्यतमत्वेन भागवतोक्तेः, पदशब्दस्य च व्यवसित्यर्थकतया मनोरप्यत्रार्थे व्यवसित्या प्रपत्तेर्मुख्यधर्मता निरूप्यते।* **द्व्यर्धमित्यनेन** *चरममन्त्रस्य पूर्वार्धोत्तरार्धभेदेन स्वरूपविभागः प्रोक्तः, वस्तुतस्त्वत्र तवास्मीत्यनुसन्धानाकारः, अभयं ददामीत्यन्तो व्रताकारश्चेति पूर्वोत्तरार्धयोर्ज्ञानाकारद्वयघटितत्वमपीति विशेषः। चरमश्लोकगतानां चतुर्दशपदानां यथाक्रमं तल्लब्धं रहस्यं प्रतिपादयति सप्तभिः। तद्यथा सकृत्पदेनोपायान्तरस्य निवृत्तिः, एवकारेणोपायनिरपेक्षता, प्रपन्नायेत्यनेनोपायस्थानम्, तवेत्यनेन भगवत उपायत्वम्, अस्मीत्यनेनोपायस्वीकार इतिशब्देनोपायानन्यता, चकारेणान्य उपायः, याचत इत्यनेनोपायसंसेविनोऽधिकारिणो लक्षणम्, अभयमित्यनेन प्राप्तौ प्रतिबन्धकस्य वारणम्, सर्वभूतेभ्य इत्यनेन प्राप्यस्य प्राप्तौ प्रतिबन्धकम्, ददामीत्यनेनोपायस्य सर्वशक्तिता, एतदित्यनेनासंशयत्वम्, व्रतमित्यनेनोक्तार्थदार्ढ्यम्, ममेत्यनेन निर्भरत्वानुसन्धानञ्च प्रतिपाद्यत इति प्रतिपदमर्थसङ्ग्रहः।*

**अत्रोपायान्तरस्याथो निवृत्तिः प्रतिपाद्यते।**
**सकृदित्येवकारेण तूपायनिरपेक्षता[1]।।46।।**
**प्रपन्नायेतिपदतस्तूपायस्थानमुच्यते।**
**उपायत्वं भगवतस्तवेति पदतस्तथा।।47।।**

**पदपरामर्शः**

*तत्रायमभिसन्धिः– यद्यपि **सकृच्छब्दस्य** सहैकवारयोरर्थयोवृत्तिस्तेनावृत्तिनिषेधो गम्यते किन्त्वाचार्यस्तु सूक्ष्मदर्शित्वात्ततोऽपि गहनमर्थं पश्यतीत्युच्यते– **अत्रेति।** क्रियाजन्मगणनवृत्तेः सङ्ख्याशब्दात् स्वार्थे तद्धितविधानक्रमे "एकस्य सकृदित्यनेन सकृदादेशेन सह सुचो विधानात्सकृदिति पदं निष्पद्यते, तत्रैकशब्दः क्रियाविशेषणम्, तत्रापि कोषे "एके मुख्यान्यकेवला" इत्येकशब्दार्थेषु केवलार्थकस्योपादानात् तेन तद्व्यतिरिक्तस्य निवृत्तिः शक्तिस्वाभाव्यात्सुतरामेव बोध्यत इत्युक्तम्– **उपायान्तरस्य निवृत्तिः प्रतिपाद्यत** इति। प्रपत्तौ भगवानेवोपायतयावस्थितः अतस्तादृशमुपायं विहायोपायान्तरस्यावलम्बनान्तरस्य सुदृढनिवर्तनमेव सकृदित्यनेन बोध्यत इति विवक्षितम्। **एवकारेण** चोपायनिरपेक्षता प्रतिपाद्यते। प्रसक्तमेव निवार्यतेऽत्र भगवत्प्रपत्तौ प्रपत्तिव्यतिरिक्तसाधनानां यागप्रभृतीनामपेक्षैव नास्ति, तस्याः प्रपत्तेस्तस्य वोपायभूतस्य भगवतः साध्यसाधनरूपतया सर्वार्थसाधकत्वादिति भावः। भगवत्प्रपत्त्यैव नित्यकैङ्कर्यप्राप्तिपर्यन्तं च फलमविनाभावेन लभ्यते। अत्रोपायान्तरव्यवधाननिपरेक्षता एवकारेण द्योत्यते। **"प्रपन्नायेति तृतीयपदेनोपायस्थानमुच्यते"** इत्यस्यायमाशयः उपायभूतायाः प्रपत्तेः कुत्रावकाशः? किं वा प्रवृत्तिस्थलम्? यत्र प्रपत्तिश्चरितार्था भवति, यन्निमित्तं तस्या उपायभावः, स च प्रपन्न एव, भयनिवृत्तये सर्वभावेन भगवन्तमाश्रितः यत्र भगवत आश्रितपरिग्रहणादिकं चरितार्थं भवति। तादृशो*

**संवित्करः**

इस चरम मन्त्र में आवृत्ति का निषेधबोधक जो सकृत् पद है, उससे भगवान् श्रीराम से अतिरिक्त सभी साधनों की निवृत्ति बतायी जा रही है अर्थात् प्रपत्ति की दृष्टि से भगवत्प्राप्ति में भगवान् ही उपाय है, अतः यहाँ साधनान्तर का उपायबुद्धि से आश्रयण मान्य नहीं है। एवकार के द्वारा यह सूचित किया जाता है कि भगवत्प्रपत्ति में किसी अन्य उपाय (साधन) की अपेक्षा ही नहीं होती है। प्रपन्नाय पद से उपायभूत भगवान् के उपर ही पूर्णतः आश्रित जीव का रक्षास्थानत्व अर्थात् भगवत्कृपाविषयत्व प्रतिपादित होता है प्रपन्न, निश्चय ही भगवत्करुणा का भाजन बनता हुआ अभय प्राप्त करता है अथवा प्रपत्तिरूप उपाय का अनुष्ठाता होने या भगवान् की प्राप्ति के लिये उपायान्तर से निवृत्त हो उपायभूत भगवान् में सुदृढ स्थिति होने से उसे उपायस्थान कहा जाता है। "तव" पद से भगवान् श्रीराम की परमोपायता कही जाती है।

---

[1] पा. भे.– अन्योपाय निरपेक्षता।

...........................................पदपरामर्शः...........................................

*भगवदेकाश्रयो जीवः प्रपत्तेः स्थानमिति तृतीयपदेनोच्यते। गोप्तृत्वेन भगवद्वरणकर्ता प्रपन्नः स्वरक्षणं याचमानस्तद्व्रतविषयभूतो भवतीति भावः,. विभीषणो वा सुग्रीव यदि वा रावणः स्वयमिति सामान्यतः प्रतिज्ञातत्वात्।* **तवेति** *षष्ठ्यन्तं चरमश्लोकस्य चतुर्थ पदम्, तदुच्यमानविशेषमुन्नयति-* **भगवत उपायत्वमिति।** *युष्मदर्थ उपेय एवोपायभावं गतः, तद्व्यतिरिक्तस्य अल्पज्ञस्याल्पसत्त्वस्य कस्यचिज्जीवस्य देवतादेर्वा सर्वभूतेभ्यो-ऽभयदानं न युज्यते, अतोऽत्र- प्रपत्तौ भगवत एवोपायत्वमिति चतुर्थपदेन गम्यते। मोक्षदाने तस्यैवाधिकृतत्वादन्यस्य तु रक्ष्यत्वादभयदानस्य सम्प्रदानरूपत्वादिति भावः। अत एवोक्तम्-*

*अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः।*
*त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः।।*

*रक्षिता जीवलोकस्य इति रामायणोक्तेः। भगवानेवोपायः, न पुनः क्षणिकं तत्क्रियास्वरूपं तत्साध्यं किञ्चदपूर्वादिकं वा। अभयं ददामीति वक्तर्येवोपायबुद्धिरुचितेति भावः।*

**अस्मीत्यनेन चोपायस्वीकारः प्रतिपाद्यते।**
**समाप्त्यर्थेतिशब्देन तूपायानन्यतोच्यते।।48।।**

...........................................पदपरामर्शः...........................................

**अस्मीति** *तिङन्तेन पञ्चमपदेनोपायतया प्रपन्नद्वारा भगवतः स्वीकरणं सर्वतोवरणं प्रतिपाद्यते, क्रियापदस्य स्वीकरणक्रियाप्रतिपादनौचित्यात्। भगवानेव मे परमोपायः शरणं रक्षकोऽभयदातेत्याकारेण वरणमिति। तत्रोपायभूते भगवत्यनन्यते***तिशब्देन** *षष्ठेन पदेन बोध्यते। अस्मीत्यन्वयेन उपायभूतभगवद्वरणम्, इतिना व्यतिरेकेण तद्व्यतिरिक्तस्त्रिकालेऽपि उपायो नास्त्येव तत्रानन्यतोच्यते। अन्यत्रोपायताधीस्तस्य समाप्ता भवति, इतेः समाप्त्यर्थकत्वात्। तथा चोक्तममरे- इति हेतुप्रकरणप्रकाशादिसमाप्तिष्विति।*

-----------------------------संवित्करः-----------------------------

"अस्मि" इस क्रियापद से भगवान् को उपायबुद्धि से स्वीकार करना प्रतिपादित होता है। यहाँ इति पद समाप्त्यर्थक है, अतः उससे उपाय के प्रति अनन्यता बोधित होती है। अर्थात् भगवान् को उपाय के रूप में पाकर उपायान्तर के प्रति अनुधावन की समाप्ति।

**चकारतोऽनुक्तसमुच्चयार्थतो निगद्यते त्वन्य उपाय आत्मवित्।**
**उपायसंसेव्यधिकारिलक्षणं पदेन वै याचत इत्यनेन तु।।49।।**

.....................................................पदपरामर्शः.....................................................

***चेति*** *निपातः सप्तमं पदम्। चकारोऽनुक्तार्थमपि समुच्चिनोतीति ततो मानसप्रपत्तिरतिरिक्ता कायिकी वाचिकी च प्रपत्तिः समुच्चीयते। कर्मान्तरवत् एवमेवेति व्यवस्थाभावात् सौकर्यं सूच्यते। ज्ञानाभावे यथाशक्ति यथाकथञ्चित्प्रपदनेऽपि न दोष इति भावः। अभयमेव फलं मोक्षरूपत्वात्, तादृशफलयाच्ञयाऽयमुपायसेवीति गम्यते। अतो* ***याचत*** *इत्यष्टमपदेनोपायानुष्ठातुरधिकारिणो लक्षणं सूचितं भवति, येन रक्षणाय उपायभूतो भगवान् याचितस्तेन प्रपत्तिरूपोपायोऽनुष्ठितः, महाविश्वासपूर्वकं तदेकोपायतायाच्ञा हि शरणागतिर्भवति। महाविश्वासपूर्वकाभयप्रार्थनाश्रयत्व-मेवात्राधिकारित्वमतः सर्वाधिकारत्वं प्रपत्तेः।*

-----------------------------संवित्करः-----------------------------

चकार अनुक्त का समुच्चयार्थक होता है, अतः यहाँ का "च" पद वाचिक के अतिरिक्त कायिक मानसिक शरणागति का भी सङ्ग्रह कराता है। अथवा भगवत्प्राप्ति में प्रपत्ति के अतिरिक्त भक्ति रूप स्वतन्त्र साधन को भी सङ्गृहीत करता है। याचते इस क्रिया पद से उपायसंसेवी अर्थात् भगवन्मात्र पर अवलम्बित हो रक्षार्थ याचना करने वाला ही प्रपत्तिलक्षण साधन का अधिकारी है, ऐसा कहा गया है।

**अथाभयमिति प्राप्तिप्रतिबन्धकवारणम्।**
**सर्वभूतेभ्य इत्येव प्राप्यस्य प्रतिबन्धकम्।।50।।**

.....................................................पदपरामर्शः.....................................................

*अभयमितिपदेन प्राप्तिप्रतिबन्धकवारणमुच्यते। अस्यायं भावः– संसारहेतुभूता याऽनाद्यविद्या, सैव भगवत्प्राप्तौ प्रतिबन्धकीभूता, तस्या निवृत्तिरेवाभयमित्यर्थः। अत एव प्राप्तिकारणभूतबुद्धिदानं भगवता स्वयमुच्यते– ददामि बुद्धियोगं तं येन मामुपयान्ति त इति। एतेन भगवतोऽज्ञानसंशयविपर्ययप्रतिक्षेपसामर्थ्यं सूचितं भवति सत्वरजस्तमोमयेर्दैहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैर्भगवत्प्राप्तिः प्रतिबध्यते,*

-----------------------------संवित्करः-----------------------------

प्राप्यभूत भगवान् श्रीसीतारामजी की प्राप्ति में जो प्रतिबन्धक (बाधक) हैं उनका वारण ही अभयपद से कहा गया है। वस्तुतः अनादिकर्मप्रवाह रूप संसार ही भय है, उसकी निवृत्ति ही अभय अर्थात् मोक्ष है। यहाँ "सर्वभूतेभ्यः" पद से प्राप्य की प्राप्ति के उन प्रतिबन्धकों का निर्देश किया गया है, प्रपन्न के जिन प्रतिबन्धकों का वारण भगवान् करते हैं।

.....................................................पदपरामर्शः.....................................................

अनादिकाल- प्रवृत्तदुष्कृतप्रवाहोऽपि तत्प्रतिबन्धकः, प्रपत्या तु तन्निवर्त्यत इति विशेषः। भगवत्प्राप्तौ प्रतिबन्धकीभूतानां येषां वारणमभयमुच्यते। तत्प्रतिबन्धकं किमिति- **सर्वभूतेभ्य** इति नवमेन पदेन प्रतिपाद्यते- कर्मजन्यं भगवत्साक्षात्कार-रूपप्रकाशस्य प्रतिबन्धकीभूतं तमः, किञ्च विषयप्रावण्यमपि तत्र प्रतिबन्धकम्। किञ्च रजस्तमोमूलभूतपापमपि तत्प्रतिबन्धकम्, इत्येवमनर्थपरम्परेति प्रोच्यते- **सर्वभूतेभ्य** इति। प्रकृतिगुणसङ्गेन तत्र जातरागाद्यनुवृत्तिहेतुतयाऽत्यन्तभयावहः संसारः, यतश्चाभयमभीष्टम्, तत्प्रतिबन्धकमितिभावः। सर्वभूतेभ्य इत्यत्रभूतशब्दो न केवलं चेतनमात्रपरोऽपितु प्राकृतगुणपरोऽपि। अत उभयस्य साधारण्येन बोधकं भूतपदं प्रयुक्तम्। सर्वभूतेभ्यो बाधहेतुभ्यो भयहेतुभ्यश्च मोचयति, यथा माता शिशूननिष्टसर्पाग्न्यादिभ्यो निवार्य रक्षति तथेति भावः। पापाज्ञानादेर्भगवद्-भक्तिप्रतिबन्धकत्वं तु भगवता स्वयमुच्यते-

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः।।

रजस्तमोमूलपापस्य ज्ञाननाशकत्वं तु प्रथितमेव महाभारते-

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः।
नष्टप्रज्ञः पापमेव पुनरारभते द्विज।।

**ददामीतिपदेनाथोपायस्य सर्वशक्तिता।**
**एतदित्येवपदतोऽसंशयत्वमितीर्य्यते।।51।।**

.....................................................पदपरामर्शः.....................................................

**ददामीतिपदेनोपायस्य** भगवतः सर्वशक्तिमत्ता प्रकाश्यते, अभयदान-सामर्थ्यप्रकाशनेन सर्जनधारणनियमनप्रवेशनव्यापनपोषणरक्षणाद्यनेककार्यसम्पादनसामर्थ्यं कथ्यते। जीवस्तु स्वापाद्यवस्थायां स्वसामर्थ्यं न वेत्ति, जानन्नपि किमपि न धारयति, यदि धारयति तर्हि तस्य सर्वथा नियमनं कर्तुं नार्हति। कदाचित्तथा शक्तोऽपि नूनं ग्लानो भवतीत्यतो भगवत एव सर्वविधसामर्थ्यं नान्यस्येति ददामीत्येतेन प्रतिपाद्यते।

------------------------------संवित्करः------------------------------

"ददामि" पद से उपायरूप भगवान् की सर्वशक्तिमत्ता कही जाती है अर्थात् जो सर्वशक्ति से सम्पन्न होगा, वही सर्वभूतों से अभय देता हूँ, ऐसा कह सकते हैं और वह सर्वसमर्थ श्रीभगवान् ही हो सकते हैं। असन्दिग्ध तथा संन्निकृष्टितर वस्तु को बताने के लिये "एतत्" शब्द का प्रयोग होता है, यहाँ भी एतत् पद से प्रपन्नजनरक्षाविधान में अपने व्रत में असंशयत्व (संशयरहितत्व) का बोध कराया गया है।

........................................................पदपरामर्शः........................................................

स्वायत्तचराचरं स्वेच्छयात्मपर्यन्तं दातुमुद्यतमिह मां को निगृह्णीयादिति भावः। यश्च सकलभयहेतुवारणशक्तो भवेत्स एवाभयं ददामीति वक्तुं शक्नुयात्। भयार्त्तस्याभयं कुर्विति सुग्रीवेण प्रार्थितो भगवान् तद्भयहेतुं तथाविधं वालिनं व्यापाद्य स्वाचिन्त्यशक्तिमत्तां प्राकाशयद्यां निपुणं बभाण सुग्रीवः-

सेन्द्रानपि सुरान्सर्वांस्त्वं बाणैः पुरुषर्षभ।
समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो।
स्वयञ्चोक्तं भगवता विभीषणप्रपत्तिप्रसङ्गे-
पिशाचान् दानवान् यक्षान् पृथिव्याञ्चैव राक्षसान्
अङ्गुल्यग्रेण तान्हन्यामिच्छन् हरिगणेश्वर।

इत्थं ददामीत्यनेन प्रकृत्यर्थमुपेक्ष्य प्रत्ययार्थस्य व्यापाराश्रयत्वस्य विवक्षणात्सर्वक्रियासम्पादनसामर्थ्यं प्रकाश्यते। **एतदिति** पदेनासंशयत्वं प्रतिपाद्यते। तस्यायं भावः- समीपतरवर्ति चैतदो रूपमित्युक्तेस्तथाविधसमर्थस्य वक्तुस्तत्सामर्थ्यस्य च समीपतरवर्तित्वात्तदर्थे न संशयस्य प्रवृत्तिरिति बोधनायैतदिति पदम्। एतदः सर्वनामत्वात्प्रधानपरामर्शित्वेनाव्यवहितपूर्वोक्ताकारेण गृह्यमाणपिण्डीभूतार्थं प्रतिज्ञातं बुद्धावधिरूढं परामृश्यते। आपामरप्रतिपत्त्यनुगुणं सकलं स्फुटमाकर्ण्यमानमिति लभ्यते, स्फुटत्वाद्यावदर्थावधारणेऽसंशयत्वमुच्यते, स्वसामर्थ्ये सन्दिहानः स्फुटं प्रतिज्ञातुं नार्हतीति भावः।

**व्रतमेतत्पदेनाथो तद्दार्ढ्यमभिधीयते।**
**निर्भरत्वानुसन्धानं ममेति प्रतिपाद्यते।।52।।**

........................................................पदपरामर्शः........................................................

**व्रतं** सङ्कल्पः, सत्यसङ्कल्पभगवद्विषये तु नित्यपरिगृहीतो निर्हेतुकः सः, नित्यधर्मतया कस्याञ्चिदप्यवस्थायां त्यागानर्ह इत्यर्थः, यद्भ्रंशेन व्रतिनोऽखिलधर्म-

-------------------------------संवित्करः-------------------------------

मम पद से प्रतिज्ञाकर्त्ता भगवान् का बोध होता है और वे प्रपन्न को अभयदानार्थ बचनबद्ध हो रहे हैं अतः मम पद से इस भाव की पुष्टि होती है कि उनके ऊपर यह सोचकर निर्भर रहना चाहिये कि वे प्रपन्नजनों का रक्षण अवश्य करते हैं। सङ्कल्पवाचक व्रत पद से उनकी वचनबद्धता में अत्यन्त दृढता की प्रतीति होती है।

पदपरामर्शः

लोपभयात्प्राणपणेन तस्य सुदृढपरिपाल्यं सूचितं भवति। यथोक्तं वाल्मीकीये- प्रतिज्ञायां हि नष्टायां धर्मोऽयं विलयं व्रजेदिति। नियमतो परिग्रहात् नियमस्यावधारणार्थकतया च अब्भक्ष इतिवत् अप एव भक्षयतीत्यनुभवात् अत्रापि व्रतपदेन दुरपह्नवरूपाकम्प्यत्वार्थकं दाढर्य प्रतिपाद्यते। 'रामो द्विर्नाभिभाषते' इत्याद्युक्त्याप्रच्युतस्वभावस्याप्रतिहतसामर्थ्यतया सत्यसङ्कल्पस्य स्वायत्तसर्वोपकरणस्य सर्वेश्वरस्य साक्षाद्धर्मविग्रहस्य दाशरथेर्ममेत्यर्थः। दृढप्रतिज्ञत्वन्तु लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत्, अतीयात्सागरो वेलामित्यादिवचनात्स्फुटमवसेयम्- एतेनानन्याधीनत्वाद् व्रतच्युतेरत्यन्तासंभावनीयताव्यञ्जनेन सर्वविधसङ्कल्पस्य परिपाल्यत्वं द्योत्यते।

**ममेति** चरमपदेनाप्यहं जीवितं जह्यामित्याद्युक्तवति भगवति पितरि पुत्र इव निक्षिप्तसमस्तभारः सन् तत्रैव निर्भरो भवतीति प्रतिपाद्यते। ततो येन व्रतं कृतं तत्परिपालनचिन्ता तेनैव कार्या न मयेति धिया भगवानेव मे सर्व साधयिष्यतीति निर्भरत्वानुसन्धानेन पूर्णतया वीतचिन्तो भवतीति भावः।

**तात्पर्यार्थोऽस्य विज्ञेयः शरण्यरुचिसंश्रयः।**
**तत्प्रापकस्वरूपस्य वाक्यार्थोऽथ निरूपणम्।।53।।**
**प्रधानार्थः परेशस्य स्वरूपस्य निरूपणम्।**
**निर्भरत्वानुसन्धानमनुसन्ध्यर्थ उच्यते।।54।।**

पदपरामर्शः

चरममन्त्रस्य चतुर्दशपदानां प्रतिपाद्यार्थनिर्देशानन्तरं पुनस्तस्य तात्पर्यार्थवाक्यार्थ- प्रधानार्थानुसन्ध्यर्थेति चतुर्विधार्थजातं द्वाभ्यामभिदधाति- तत्र शरण्यस्य भगवतो रामस्य रुच्या प्राप्तिकामनया तत्संश्रयस्तदेकावलम्बनं कार्यमिति तात्पर्यार्थः। यद्वा शरण्यस्य

संवित्करः

इस चरममन्त्र का तात्पर्यार्थ यह है कि अभय की कामना से जीव रक्षार्थ प्रतिश्रुत शरणागतवत्सल भगवान् का समाश्रयण करे। यही भगवान् की रुचि का संश्रयण है। निर्भयता की कामना से शरण में आये हुए जीव के स्वरूप का प्रतिपादन चरममन्त्र का वाक्यार्थ है। शरणागत की रक्षा के लिये व्रतधारी परमप्रभु सर्वेश्वर के स्वरूप का प्रतिपादन प्रधानार्थ है तथा प्रपन्न को भगवद्वचन पर विश्वासपूर्वक परम निश्चिन्तता का अनुभव कराना, इस मन्त्र का अनुसन्ध्यर्थ है।

पदपरामर्शः

*रुचेः प्रसादस्य संश्रय अवलम्बनम् भगवानेव स्वरुच्याऽस्मद्धितं सम्पादयिष्यतीति भावविशेषाश्रयणम्। तद्रुचेरेव संश्रयणकथनादानुकूल्यस्य सङ्कल्प इत्यर्थः प्रकाशितः। अस्य वाक्यार्थस्तु भगवत्प्रापकस्य प्रपन्नजीवस्य तदेकाश्रयतयादि- स्वरूपस्य निरूपणमनेन श्लोकेन क्रियत इति। भगवत्प्रापकस्य तत्प्रपदनस्य स्वरूपमयं निरूपयतीति वा वाक्यार्थः। चरमश्लोकस्य प्रधानार्थः क इति जिज्ञासायामुच्यते-* ***परेशस्य भगवतः*** *समाश्रितसंरक्षणे यज्जागरूकवदवस्थितत्वादिरूपं शरणागत-दोषोपेक्षणादिकं यदनितरसाधारणस्वरूपं तदनेन निरूप्यत इत्यर्थः। अस्यानुसन्ध्यर्थश्च भगवान् स्वाश्रितं न कदाचित्परित्यजति, तमवश्यं भरणपोषणरक्षणाभीष्टप्रदानादिना परिपालयतीत्याकारार्थस्यानुचिन्तनं सर्वदा कर्त्तव्यमिति। तेन रक्षिष्यतीति विश्वास इत्यर्थः प्रकाशितः।*

*अत्राचार्यचरणैश्चरमश्लोकस्य चतुर्णां पुरस्कृतानामर्थानां कथं मिथो भेद इति विचार्यतामर्हति वक्त्रिच्छाभूतस्य विवक्षितस्यैव तात्पर्यरूपतया तदुन्नीतोऽर्थस्तु वाच्यार्थाद् भिद्यत एव- स च प्रत्येकपदवृत्यविषयोऽपि तात्पर्याख्यवृतिप्रतिपाद्यतयानुभवविषयो भवति, तात्पर्यं प्रसङ्गादिनोन्नीयते तस्य तेनोपपद्यमानता स्यात्। प्रसङ्गश्चात्र सागरतटे महापरिषदि सर्वं परित्यज्य समागतस्य विभीषणस्य स्वीकार्यास्वीकार्यत्वविचारे भगवतः स्वाभिमतप्रकाशनस्य, तत्र भगवता प्रयुक्ते तन्नित्यस्वभावावेदकाश्रितसंरक्षण-व्रतस्वरूपोपस्थापके वाक्ये वक्तुर्भगवतोऽभिप्रेतार्थः क इत्यत्रोच्यते- भवभयभीरुणा जीवेन मत्संश्रयणं कार्यमिति। शरण्यत्वान्ममाभिमता रुचिस्तत्संश्रयणं भवत्विति। एतेन जीवसंश्रयणस्य भगवदभिमतत्वं वाक्यस्य तात्पर्यम्। वाक्यार्थस्तु तद्वति पदपदार्थ-तदन्वयगम्यो भवति, स्वार्थबोधसमर्थानामङ्गाङ्गित्वविवक्षया तस्य समुदितार्थरूपत्वात्। तादृशवाक्यार्थश्चात्र तत्प्रापकस्वरूपनिरूपणमित्युक्तम्। सकृदेव तवास्मीति याचते प्रपन्नाय सर्वभूतेभ्योऽभयं ददामीति वाक्यस्वरूपम्, तेन मदभिन्नकर्तृकं सर्वभूतावधिकं तथाविध- प्रपन्नोद्देश्यकमभयकर्मकं वर्तमानकालिकं दानमिति वाक्यार्थः, तत्र यदुद्देश्येनात्राभयदानं प्रवृत्तं स भगवत्प्रापको जीवात्मा वाक्यार्थस्तदुद्देश्येनैव वाक्यप्रवृत्तेः। वाक्यस्य प्रधानं वस्तु स्वयं भगवानेव, प्रपत्तेर्मुख्यविधेयत्वात्, निरतिशयैश्वर्यतया प्रपत्यर्हत्वात्, रक्षणरक्ष्यादेस्तद्विभूत्येकदेशाश्रयत्वात् उपायोपेयोभय-रूपत्वाच्च। प्राधान्यं नामाङ्गित्वम्। यथोक्तं मनुना-*

उपसर्जनत्वं प्रधानस्य धर्मतो नोपपद्यते।

.....................................................पदपरामर्शः.....................................................

पिता प्रधानं जनने तस्माद्धर्मेण तं भजेत्।।

प्रकृतवाक्यानुरोधेन शाब्दिकदृष्ट्यापि ददामीति दानक्रियायास्तत्समवेतत्वात् साक्षादन्वयस्तेनैव, न त्वभयं याचमानेन जीवेन। प्रधानक्रियानिरूपिता कर्तृशक्तिरुक्ता, तथोक्तम्- प्रधानविषया शक्तिः प्रत्ययेनाभिधीयत इति तिङ्समानाधिकरणस्य दानकर्तुर्भगवतः प्राधान्यम् । तत्स्वरूपनिरूपणस्यैव प्रधानार्थत्वौचित्यात्।

अनुसन्धानं नाम गहनपरीक्षणम्। अनु पश्चाद् वाक्यार्थतात्पर्यार्थ-प्रधानार्थादिविचारानन्तरं तदाश्रितैरनुसन्धेयार्थः कः? प्रपत्त्यां सत्यां जीवो भगवति निक्षिप्तात्मभारो भवतीति गुह्यार्थः। पुनः पुन उक्तार्थपर्यालोचनया अनुसंहितोऽर्थ उच्यते- **निर्भरत्वानुसन्धानमनुसन्ध्यर्थ** इति। येनानर्थनिवृत्तिपूर्वकमाश्रिताभयदानं प्रतिज्ञानम्, तस्मिन्नेव भरो न तु मयीत्याकारकं निर्भयत्वानुसन्धानमिति तदर्थः। इत्थमस्य श्लोकस्य तात्पर्यार्थः प्रपत्तिः, वाक्यार्थो जीवः, प्रधानार्थ ईश्वरो-ऽनुसन्धर्थश्चनिर्भरत्वानुसन्धानमित्यर्थसङ्क्षेपः।

**अथोच्यते महाप्राज्ञ! ध्यानं ध्येयस्य चिन्तनम्।**
**बुधैरात्मपरैर्नित्यं जितप्राणैर्जितेन्द्रियैः।।55।।**

.....................................................पदपरामर्शः.....................................................

किं ध्यानमिति तृतीयप्रश्नानुगुणसमाधानात्पूर्व स्वशिष्यस्य ग्रहणधारण-नवनवोन्मेषशालितादिविशिष्टप्रज्ञां संस्तुत्य प्रोत्साहयति- **महाप्राज्ञेति।** ध्यानस्य सुबोधलक्षणमाह- **ध्येयस्य नित्यं चिन्तनं ध्यानमिति।** कादाचित्कत्वव्यावृत्तये नैरन्तर्यबोधकं **नित्यमिति।** विजातीयचिन्तनशून्यमित्यर्थः, वृत्त्यन्तराव्यवहितस्य ध्येयाकारस्य मनोवृत्तिप्रवाहस्यैव ध्यानतामभिधत्ते योगसूत्रकारः- तत्र प्रत्ययैकतानता ध्यानमिति। प्रत्ययस्यैकताननतामेव वैष्णवाचार्या निदर्शयन्ति- **तैलधारावद-विच्छिन्नभगवत्स्मृतेः सन्ततिरिति।** तामेव ते ध्यान-वेदन-निदिध्यासन भक्तीत्यादिनामभिः पर्यायतया निरूपयन्ति। यथोक्तं श्रीमद्भागवते- मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधाविति। अत्रैव भगवत्स्मृतिसन्ततिरूपसन्तताभ्यासेन अप्रायाणाद-

-----------------------------------संवित्करः-----------------------------------

हे महामनीषी! ध्येय (भगवत्स्वरूप) का नित्य निरन्तर चिन्तन ही ध्यान है। ऐसा योगबल से प्राण एवं इन्द्रियों को जीतने वाले, भगवत्परायण विद्वज्जन कहते हैं।

........................................................पदपरामर्शः........................................................

नुवर्तनीये यदाऽतिशयताधीयते, तदा तदेव विशदतमप्रत्यक्षसमानाकारतां प्राप्नोति। यथोक्तं भयादिजनितनिरन्तरसन्तन्यमानचिन्तासक्तस्य मारीचस्य रामाकारसाक्षात्कारोपपादनं वचनं वाल्मीकिना–

वृक्षे वक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्।
गृहीतधनुषं रामं पाशहस्तमिवान्तकम्।।

अनाद्यविद्यामूलं लौकिकरूपादिविषयसेविनां तत्रेष्टतमत्वबुद्धेः प्रावण्यान्निरन्तरं चिन्तनं भवतीत्यत उक्तं **ध्यातुं योग्यस्य ध्येयस्येति।** ध्यानस्य ध्यातृसापेक्षत्वेन तद्द्वारा ध्यानाङ्गानि सूचयितुं ध्यातृवर्गं दर्शयति चतुर्भिस्तृतीयान्तैः– बुधैर्विवेकवद्भिरात्मरतैर्भगवत्परायणैर्जितेन्द्रियैर्वशीकृतज्ञानकर्मेन्द्रियैर्जितप्राणैः पूरककुम्भकरेचकैः शोधितप्राणमार्गैरित्यर्थः। ध्यानाङ्गभूतगुणविशेषोक्तौ संसारतद्धेतुमोक्षमोक्षहेतु रूपचतुर्व्यूहज्ञानसम्पत्या तदनुरूपध्येयाध्येयबोधतत्फलानुसन्धानोद्बुद्धप्रज्ञैर्बुधैरित्यर्थात् ध्यातुर्बन्धमोक्षतत्त्वविवेकेन देहाद्यभिमानराहित्यरूपा ध्यानयोग्यता सूचिता भवति। बुद्धिवैशद्यमुक्त्वा ध्यातृषु धारणासम्पदमपेक्ष्यमाणां सूचयितुमुक्तेनात्मरतैरित्यनेन न केवलं तुष्टिरुच्यतेऽपितु– आश्रयविशेषं विना चित्तस्य स्थिरीकरणमशक्यमत आत्मानं भगवन्तमाश्रित्य तदासक्तिरपि बोध्यते। आत्मरतेर्भगवदनुरक्तेः परमफलत्वात् योगसूत्रस्य तृतीयाध्यायविषयः सूच्यते।

चित्तस्थिरीकरणं धारणा मनोनियमनं च प्रत्याहार इति तत्र प्राणायामादेरुपकारकतयोच्यते– जिता प्राणा यैरिति जितप्राणैरिति। आसनजयेन स्थैर्यमवाप्य मनोनैश्चल्याय तत्समाधानसाधनकथनौचित्यात्। आसनमास्थितः प्राणान्नियच्छेदित्युक्तप्रकारेण प्राणमार्गशोधनं सूचितम्। प्राणायामेन न केवलं मनसश्चञ्चलत्वं तनूक्रियतेऽपि विवेकावरणमपि। यथाविधि प्रच्छरणाविधारणाभ्यां शरीरमनसोः सम्यक्शुद्धिद्वारा प्रज्ञाबलमुद्दीप्यते, क्षीयते च मलावरणम्, तन्नियमितं चित्तं नासद्विषयैः संयुज्यते, यथोक्तं भागवते–

मनोऽचिरेण स्याद्विरजं जितश्वासस्य योगिनः।
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम्।।

जितेन्द्रियैरित्येनन प्रत्याहारः सूचितः। वस्तुतोऽत्र मनोनिग्रहणं लक्षितम्। **जितेन्द्रियैरित्यनेन** वैराग्यम्, जितप्राणैरित्यनेनाभ्यासश्च अभ्यासवैराग्याभ्यां तन्निरोध

पदपरामर्शः

इत्युक्तेः। ध्येयतां शोधयितुमेव ध्यातृगुणोक्त्या- जितेन्द्रियत्वादिविशेषणैर्ध्येयवस्तुनः प्राशस्त्यं विवक्षितम्। न हि तथाविधैः जितेन्द्रियादिभिर्निकृष्टं चिन्त्यत इति भावः। प्रकृतिपरिणामविशेषतया विलक्षणतया प्रतीयमानस्यापि जडत्वेन दुःखवत् प्रयत्नानपेक्षयापि लभ्यत्वात् स्वयंप्रकाशचेतनापेक्षया हेयतया नाचितो ध्येयता, न वा प्रत्यगात्मनोऽपि कर्माधीनतया मलिनत्वादज्ञत्वाद्गुणपरतन्त्रत्वात् भगहीनत्वाच्च नित्यशुद्धनित्यविबुद्धसर्वनियामकत्वादिकल्याणगुणाकरसर्वेश्वरापेक्षया ध्येयतेति सर्वोत्कृष्टभावनाया एव कर्त्तव्यत्वमादिशति ब्रह्मसूत्रकारोऽपि- ब्रह्मदृष्टिरुत्कर्षादिति। प्रत्यगात्मानन्दापेक्षया भगवदानन्दस्य निरतिशयत्वेन स्मरणमात्रेण स्वस्वरूपे रममाणानां तथाविधसनकादीनामानन्दप्रकर्षोदयाच् चित्तादिविक्षोभो' वर्णितो भागवते-

तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः स्वविवरेण चकार तेषां सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः।।

अत एव दिव्यगुणाकरत्वाद् भगवत एव ध्येयतामवधार्य ध्यानानुगुणस्वरूपं वर्णयति-

**विकचपद्मदलायतवीक्षणं विधिभवादिमनोहरसुस्मितम्।**
**जनकजादृगपाङ्गसमीक्षितं प्रणतसत्समनुग्रहकारिणम्।।56।।**

पदपरामर्शः

रमणीयगुणाकरस्य श्रीरामस्य दृष्टिचित्तापहारित्वादेस्तत्र तत्र प्रसिद्धेस्तस्यैव त्रिभुवनमोहनसौन्दर्यस्य ध्येयतामनुसन्धाय तत्र युगपत्सर्वाङ्गलावण्यग्रहणाशक्यतया "एकैकशोऽङ्गानि धियानुभावयेदिति भागवतोक्तदिशा नयनाभिरामतया ध्यानास्पदेषु सर्वाङ्गेषु दृशां पानपात्रायितस्य सुषमानिधानस्य मुखारविन्दस्य ध्यातव्ये, तत्रापि तद्गतनलिनायतलोचनयुगलस्य प्रसादाद्यभिव्यञ्जकत्वाद् प्रथमध्यातव्यतां निश्चित्य स्मरणकर्मीभूतं भगवन्तं विशिनष्टि- **विकचपद्मदलायतवीक्षणमिति।** रामः कमलपत्राक्ष इत्यादिकव्युक्तिमनुचिन्त्य भक्तदर्शनप्रीतिप्रकामविस्फारितत्वं बोधयितुं तदानुगुण्येनाभिधत्ते- पूर्णविकसितकमलपत्रवदायते वीक्षणे यस्य तादृशं रामं स्मरामी-

संवित्करः

भक्तों को ध्येय परमप्रभुश्रीराम का इस प्रकार चिन्तन करना चाहिये कि मैं सद्योविकसित नूतनकमलदल के समान विशाल लोचन वाले, शिवब्रह्मादि देवताओं के मन को हरण करने वाले सुन्दर मन्दस्मित हास्यवाले, श्रीजानकीजी की स्नेहस्निग्ध दृष्टि से निहारे जाने वाले, सर्वदा प्रपन्न भक्तों पर परिपूर्ण कृपावर्षी भगवान् श्रीराम का ध्यान करता हूँ।

.........................................................पदपरामर्शः.........................................................

त्यन्वयः। एतेन स्रवत्करुणामृतपूरनिर्भरप्राकाम्यगर्भसुषमयाश्रिताह्लादकरत्वं सूचितं भवति। अत्र वाचकलोपाद् वाचकलुप्तोपमा। भृत्यानुरागोत्फुल्लनयनशोभानुरूपाधरपल्लव-चारुस्मितवैभवं वर्णयति- **विधिभवादिमनोहरसुस्मितमिति।** विधिभवादीनान्तपः-समाधिना निगृहीतमनसामपि मनोज्ञत्वाद्बलादिव चित्तावर्जकं मन्दस्मितं यस्य, तादृशं रामं स्मराम्यनुचिन्तयामीति भावः। त्रिलोक्यामुत्पादकनाशकवाचकतया प्रथिताभ्यां विधिभवेति पदाभ्यां तन्मध्यवर्तिनिखिलजीवराशिरपि बोधितः। उभयोर्देवत्वाद-प्रतिमसौन्दर्ये सत्यपि तन्मनोहारित्वकथनेन निरतिशयत्वं सूचितम्, येन सौन्दर्याधिष्ठाता कामो नाशितः, यश्च स्वयं सौन्दर्यरचनाविधानचतुरस्तयोः स्वायत्तमपि मनो मनोज्ञतया प्रसभं हरतीति तस्य चारुत्ववैभवं कथं कथ्यतामिति भावः। अत उक्तं मानसे-

हृदय अनुग्रह इन्दु प्रकासा।
सूचत किरन मनोहर हासा।।

मन्दस्मिते माधुर्यं शुचित्वं सौम्यत्वं सौकुमार्यं चेत्याद्युपसर्गद्योत्यम्। इदमेव दृष्टिचित्तापहारित्वेन रसावहत्वम्, सापराधेष्वपि निग्रहलीलायामपि सामप्रधानत्वम् स्मितपूर्वमथाब्रवीदिति तत्स्वभावकथनात्। अत्रोपमानवाचकलुप्तोपमा। एतादृशसु-स्मितवीक्षणादिसौष्ठवस्य अत्यासन्नतया जनकजाया नित्यभोक्तृत्वसौभाग्यं ललितसरण्याह- **जनकजादृगपाङ्गसमीक्षितमिति।** देवादीनान्तु तादृशमनोहारि-सुस्मितावलोकनसौभाग्यस्य कादाचित्कत्वं सूचयन् यदीयो नित्यसिद्धान्वय-मूलोऽधिकारस्तामाह- **जनकजेति।** पत्युः पूर्णनिर्वर्णनस्य स्त्रीसुलभसङ्कोच-जनकत्वमभिद्योत्य तादृशदुर्लभवस्त्वनुरूपसमास्वादनं वक्ति- **दृगपाङ्गसमीक्षितम्।** वीक्षणसुस्मितयोः पूर्णसमास्वादनपात्रता तु जगद्रक्षणे सहाभिषिक्ताया अस्या एवेति ध्वन्यते, न केवलमीक्षितमपितु समीक्षितं, तत्रापि न दृशापितु तदपाङ्गेनेति प्रीतिवशीकृतपतिलाभप्रयुक्तः कयाचिन्नयनलीलयैव सम्पुष्टः प्रणयो द्योत्यते। **अपाङ्गसमीक्षितमि**त्यनेन कयाचित्स्नेहावलोककलया प्रणयप्रसादितं तादृशाभिजात-सुलभं सौशील्यं ध्वनयति। एकमेव तत्त्वं भोक्तृभोग्यभावेनावस्थितमिति केचित्। या च स्वयं सकलसौन्दर्याधिष्ठानतया प्रथिता तयापि सस्पृहमवलोकितमिति भगवांस्तु श्रियोऽपि श्रीरिति लभ्यते। तदीयसौन्दर्येणास्माकं प्रणतानां को लाभ इत्यतस्तस्या-नुग्रहवर्षणस्वभावमाह-**प्रणतसत्समनुग्रहकारिणमिति।** प्रणतेषु सत्सु महात्मसु सज्जनेषु

........................पदपरामर्शः........................

चानुग्रहं कृपां कर्तुं शीलं यस्य, तादृशम्, अनुग्रहवर्षणस्य कादाचित्कत्वनिरासायैव शीलार्थको णिनिः। तदनुग्रहमात्रस्याशेषकल्याणसाधकत्वद्योतनाय **समुपसर्गः**। अनुग्रहं कारयितुं शीलमित्यपि ण्यन्ताद् णिनिः, तेनान्योऽप्येतत्प्रेरणयैवानुग्रहं करोत्यस्य सर्वान्तर्यामितया सर्वप्रेरकत्वादिति भावः। अत्र द्रुतविलम्बितच्छन्दः।

**मुनिमनःसुमधुव्रतचुम्बितस्फुटलसन्मकरन्दपदाम्बुजम्।**
**बलवदद्भुतदिव्यधनुःशरामहितजानुविलम्बिमहाभुजम्॥57॥**

........................पदपरामर्शः........................

साधकबाधकप्रमाणोपन्यासैः श्रुत्याद्यर्थमननशीला मुनय उच्यन्ते, तादृशमुनीनां रागाद्यनुपहितत्वाच्छुद्धमनांस्ये वसुमधुव्रता साधुभ्रमराः, तैश्चुम्बितमीषदीषदास्वादितं पदाम्बुजं चरणकमलं यस्येत्यन्वयः। **पदाम्बुजमिति** सुरभित्वसुखस्पर्शत्वादिव्यञ्जकम् पावनतमत्वेन परमप्रेमार्हत्वं च प्रकाशयति। तत्र पदाम्बुजे भ्रमराणां नित्यास्वादनपात्रतामभिधातुं विशेषयति- **स्फुटलसन्मकरन्देति।** स्फुटत्वादौदार्य लसदिति मकरन्दप्राकाम्यं च सूचितं भवति। मुनिमनसां सुमधुकरत्वकथनेन तदेकजीवनत्वं तत्रापि सारतमग्राहित्वञ्च व्यञ्जितम्, मकरन्दलिप्सयोपदेश-शततर्जनादिभिरपि दुर्निवारत्वं सूच्यते। इत्थं प्रकृतिसिद्धः कश्चिद्रसाभिनिवेशः प्रकाश्यते। अनुपलभ्येऽन्यत्र च दंशनयथेच्छाभिगमनादिधाष्ट्‍र्यदोषाभावं दर्शयितुं **स्विति पदम्,** मुनिमनःसु हि तपःस्वाध्यायादिजन्यं नैर्मल्यं भवति। भगवतः श्रीरामचन्द्रस्य पदारविन्दस्य ध्येयताविशेषस्तु तद्गतमाहात्म्यसूचनेन भागवतादि-ग्रन्थसहस्रैःनिरूपितस्तद्यथा-

ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्।
भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम्॥

अत्र वाचकलुप्तोपमा। आश्रितविरोधिनिरसनपूर्वकतयाश्लेषणाद्यनुगुणं तन्महाभुजं महावीरशृङ्गारोचितायुधसम्पन्मुखेन ध्यायति- **बलवदित्यादिना।** बलवद्भ्यामद्भुताभ्यां दिव्याभ्याञ्च धनुश्शराभ्याम् आमहितौ सर्वतः पूजितौ संशोभितौ जानुविलम्बिनौ महान्तौ भुजौ यस्य, तादृशं रामं स्मरामीत्यन्वयः। जानुविलम्बिमहाभुजमित्यनेन

------------------------संवित्करः------------------------

मैं मुनियों के मानसरूपी भ्रमरों से समास्वादित मधुर मकरन्द से परिपूर्ण चरणकमल वाले; परम अद्भुत एवं अत्यन्त बलयुक्त विलक्षण पराक्रमी दिव्य धनुर्बाणों से सुशोभित आजानु लम्बायमान विशाल भुजदण्ड वाले परमप्रभु श्रीराम का ध्यान करता हूँ।

.....................................................पदपरामर्शः.....................................................

सामुद्रिकशास्त्रसिद्धं महासौभाग्यसूचकं महापुरुषलक्षणमुच्यते। भक्तापन्निवारण-सर्वस्वभूतपरिष्वङ्गप्रदानानुरूपता गम्यते। यथोक्तं वाल्मीकीये- बाहुच्छायामवष्टब्धो यस्य लोको महात्मन इति। भुजयोदिव्यायुधसेवितत्वं वदति- **धनुःशरामहितेति।** सर्वाधारभूतभगवद्विग्रहाधारेण शोभाप्रकर्षो व्यक्तः। प्राकृतायुधत्वनिरासाय **दिव्येति,** अचिन्त्यकार्यकारित्वाद्विस्मयावहत्वं बोधयितुम् **अद्भुतेति** विशेषणम्। अद्भुतत्वादेव कुठारटङ्ककुद्दालादिभिः प्रत्येकं कृच्छ्रसाध्यं शालशैलविदारणपूर्वकं पातालीयजनज्ञापनादिकार्यमेकेनैव बाणेन कृतमिति रामायणकथां स्मारयति- बिभेद च पुनस्तालान् सप्तैकेन महेषुणा। गिरिं रसातलं चैव जनयन् प्रत्ययं तदेति।। परिष्वङ्गानन्दलाभकैङ्कर्यधन्यनित्यसूरीणामेव भूषणायुधभावेनावस्थानाद्दिव्यत्वं नाम चेतनत्वम् अत एवोक्तं श्रीरामायणे- लीलासंवरणप्रसङ्गे-

शरा नानाविधाश्चापि धनुरायतविग्रहम्।
अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः।। इति।

**पराध्यहाराङ्गदचारुनूपुरं सुपद्मकिञ्जल्कपिशङ्गवाससम्।**
**लसद्घनश्यामतनुं गुणाकरं कृपार्णवं सद्धृदयाम्बुजासनम्।।58।।**

.....................................................पदपरामर्शः.....................................................

श्रीविग्रहस्य दिव्याभरणादेश्चान्योन्ययोगाच्छोभावहत्वसूचनेन सर्वेश्वरत्वं ख्यापयितुं पीताम्बरस्य च श्यामविग्रहयोगान्नित्योज्ज्वलं भास्वरत्वं प्रकाशयितुमाह- **पराध्येति।** कण्ठवक्षोहस्तचरणानाममूल्यानवद्यहाराङ्गदनूपुराद्यलङ्कारलसिततया प्रत्याहार-न्यायेन सर्वाङ्गभूषणं कथितम्। वक्षोबाह्वपेक्षया चरणयोर्भक्तैकसमाश्रयण-सततसेवनानुगुणं सौलभ्यं द्योतयित्वा नखमणिप्रभायोगविशेषसौष्ठवं वक्तुं नूपुरयोश्चारुत्वविशेषणम्। शोभनपद्मकोशवर्तिकिञ्जल्कस्य वर्णवत्पिशङ्गं पीतं वासो यस्येति। सुपद्म इव किञ्जकस्य शोभावर्धकत्वं तथा पद्मपेशलस्निग्धाङ्गेषु भगवतः पीताम्बरस्य। तेन पीतिम्नः साहजिकत्वमुच्यते। अत्र वाचकलुप्तेति उपमाया एव प्राधान्यम्। श्रीविग्रहशोभां घनश्यामतयोपमिमीते- **लसद्घनश्यामतनुमिति।**

----------------------------------संवित्करः----------------------------------

अमूल्य हार, अंगद, सुन्दर नूपुर आदि अलंकरणों से विभूषित, कमलकेसर के समान दिव्यपीताम्बर धारण करने वाले, सजलजलद के समान श्याम, कल्याणगुणनिधि, कृपासागर तथा सन्तजनों के हृदयकमल में सर्वदा निवास करने वाले प्रभु श्रीराम का मैं ध्यान करता हूँ।

पदपरामर्शः

*वर्षणोन्मुखसजलसान्द्रतां द्योतयितुं घनेति नयनसौभगं द्योतयितुं लसदिति। तेन दृष्टमात्रेण सन्तप्ततापहारित्वं श्यामत्वेनागाधत्वंशृङ्गाररसानुगुण्यं च लभ्यते। तादृशोऽपि भगवान् कारुण्यादुभक्तहृदयमाविशतीति तस्यानुरूपस्थानं विशेषणद्वाराभिधत्ते-* ***सद्धृदयाम्बुजासनमिति*** *सतां सज्जनानां हृदयमेवाम्बुजं, तत्रासनं नित्यस्फूतिर्यस्येति। सर्वव्यापकस्यापि हृदयेऽभिगमोऽधिको भवतीति सूचनाय* ***हृदयेति।*** *हृदयस्याम्बुजोपमानेन मृदुत्व-शीतलत्वसौरभमनोज्ञव्यञ्जनायाऽसनयोग्यतोक्ता, सत्पदेन च तदैकाधारेण जीवित्वं सूच्यते।* ***सद्धृदयेत्यनेन*** *निर्मलत्वं लक्षितम्। यथोक्तमादिकविना- रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथेति। एतेन भक्त्या गृहीतचरणत्वेन भगवतो नित्यनिवासः सूचितः। यथोक्तं भागवते- त्वं भावयोगपरिभावितहृत्सरोज आस्स इत्यादिना। भक्तप्रीतिपारतन्त्र्याद् भगवतो बहिर्गमनमशक्यमिति लभ्यते-नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसामिति भागवतोक्तार्थो-ऽविकलं प्रकाशितः।*

**प्रसन्नलावण्यसुभृन्मुखाम्बुजं जगच्छरण्यं शरणं नरोत्तमम्।**
**दयापरं दाशरथिं महोत्सवं स्मरामि रामं सह सीतया सदा॥59॥**
**द्विभुजस्यैव रामस्य सर्वशक्तेः प्रियोत्तम।**
**ध्यानमेवं विधातव्यं सदा रामपरायणैः॥60॥**

पदपरामर्शः

*अन्ते पुनर्भ्रमरन्यायेन सकलसौन्दर्यनिधानभूतां मुखाम्बुजश्रियं स्मरति-* ***प्रसन्नलावण्यसुभृन्मुखाम्बुजमिति-*** *प्रसन्न इत्यनेनोत्फुल्लत्वेन उज्ज्वलत्वमौदार्य नित्याम्लानत्वञ्च सूच्यते। लावण्यन्तु "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तराप्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत इति साहित्यशास्त्रे प्रसिद्धम्। यथोक्तं लोचनकारेण-लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं धर्मान्तरमेवेति। तत्रापि प्रसन्नविशेषणेन दिव्यत्वं प्रकाशितम्। प्रसन्नलावण्यमपि यत्सुबिभर्ति तथाभूतं मुखाम्बुजं यस्येति। अतः समरलीलायामपि लावण्यं मुखाम्बुजं न जहाति, रिपूणामपि*

संवित्करः

प्रसादललित लावण्य से विलसित मुखकमल वाले, सर्वलोकशरण्य, परात्पर पुरुषोत्तम, निज अनुज एवं परिकर के साथ विराजमान, मूर्तिमान् महोत्सव, दशरथनन्दन भगवान् श्रीराम का करुणामयी जगदम्बा श्रीसीताजी के साथ मैं सदा स्मरण करता हूँ। परमप्रिय! श्रीरामानुरागी वैष्णवों को सदा सर्वशक्तिसम्पन्न द्विभुजस्वरूपवाले परमप्रभु श्रीराम का ही पूर्ववर्णित प्रकार से ध्यान करना चाहिये।

.......................................................पदपरामर्शः.......................................................

वत्सल इति रामायणोक्तेः। स्वाधीनाखिलस्य तस्य प्रातिकूल्यप्रसङ्गलेशस्याप्यसंभावनया अमृतरूपतया च नित्यप्रसादो बोध्यते। तेन सर्वसाधारणेनापि निर्भयाभिगम्यता ध्वन्यते। एतेन भृत्यप्रसादसुमुख इति भागवतोक्तार्थ उक्तः।

नित्यनिरवद्यतया सर्वचित्ताकर्षकश्रीविग्रहरमणीयशोभावैभवं वर्णयित्वा समाश्रयणोपयुक्तमनन्यसाधारणस्वभावं निरूपयति- **गुणाकरमित्यादि**। गुण्यत इति गुणः, अभ्यसनीयोऽनुकूलतमत्वेन शीलनीय इत्यर्थः। तथाविधस्य भगवतोऽपि गुहनिषादवानरादिमन्दैः सह नीरन्ध्रसंश्लेषस्वभावरूपं सौशील्यमिति। इत्थम्भूत-गुणानामाकरं निधिं रामं स्मरामीत्यन्वयः। सन्त्येव तादृशा गुणाः किन्तु कृपायास्त्वर्णव एवेत्याह- **कृपार्णवमिति।** अर्णवत्वारोपेणाश्रितानां मेरुसदृशापराधा अप्यत्र निमज्जन्तीति गम्यते। अत एवासह्यदेव्यपचारोऽप्यत्र निमग्न इति जयन्तकथा परामृष्टा, वधार्हमपि काकुत्स्थः कृपया पर्यपालयदिति अत्र कृपार्णवमिति पदयोः सामान्यतो रूपकं विद्यते कापि किन्तु स्वभावोक्ती शमतनुसौन्दर्यवर्णनपरेह रमणीयतां तनोति। दयापरत्वादेवैवंविधमतिलोकं भगवान् विधत्त इत्याह- **दयापरमिति**। सर्वलोकहितैषिणी सर्वसहा क्षमा हि दया प्रोच्यते। स्वप्रयोजनमनपेक्ष्य परदुःखनिराकरणेच्छाया दयारूपत्वाद्। युद्धस्थले दुरवस्थां प्राप्ते रावणेऽपि तस्य कदाचिन्निग्रहनिवर्तक-प्रसादविशेषो जायते। यथोक्तं स्वयं भगवता- "तस्मात्परिश्रान्त इति व्यवस्य न त्वां शरैर्मृत्युवशं नयामीति" अनन्तत्वात्तस्य कृपाया अप्यपरिच्छेद्यत्वमत आह- **जगच्छरण्यमि**ति। न केवलमेकस्य द्वयोर्वा रक्षणे प्रभुरपितु सर्वस्यापि। यद्वा यस्य लोके न मातापितृदेवादिष्वपि कश्चिच्छरण्यस्तस्याप्ययं शरण्यो भवतीति भावः। यथोक्तं जयन्तप्रसङ्गे रामायणे-

त्राणकाम इमं लोकं सर्वं वै विचचार ह।
स पित्रा च परित्यक्तः सर्वैश्च परमर्षिभिः।।
त्रीन् लोकान् सम्परिक्रम्य तमेव शरणं गतः।

अतस्तदीय उदार उद्घोषो जातिगुणवृत्तादिविशेषमनपेक्ष्यैव प्रवृत्तः- विभीषणो वा सुग्रीव यदि वा रावणः स्वयमिति। वस्तुतः समर्थः सन् कारुणिकः सर्वरक्षणे प्रभवति, कारुणिकोऽपि यदि विषमोऽसमर्थो वा स्यात्, समः समर्थोऽपि यदि निष्करुणः स्यात्तदा सर्वरक्षणे न प्रभवेदयं भगवान्तु न तथा, तत्र भगवतो-

.........................................................पदपरामर्शः.........................................................

ऽनितरसाधारणं सामर्थ्यम्। अत एव विभीषणेन तत्स्वरूपसामर्थ्यमनुसन्धायैव प्रोक्तम्–

निवेदयत मां क्षिप्रं राघवाय महात्मने।
सर्वलोकशरण्याय विभीषणमुपस्थितम्।।

शरणे साधुश्शरण्यो भवति, किन्त्विदानीं साधुत्वक्रियागुणोपाधिभूत-धर्मव्यवधानमप्यपहाय साक्षाद्धर्मिपरामर्शेनोच्यते– **शरणमिति**। न केवलमयं शरणे साधुः किन्तु, साक्षाच्छरणमाश्रयभूतम्। शरणं गृहरक्षित्रोरित्युक्तेः। पुंस्त्वस्त्रीत्वा-द्याग्रहाभावबोधनाय नित्यनपुंसकलिङ्गं शरणपदमप्यत्रत्यमत्यन्तमानुगुण्यं धत्ते। अत एव राघवं शरणं गत इत्यादावभेदेन व्यपदेशः। **नरोत्तमं** पुरुषोत्तममित्यर्थः, नरश्चासावुत्तम इति सन्महदित्यनुशासनात्, सामानाधिकरण्येन विवक्षण उत्तमपदस्य पूर्वनिपातः प्रसज्यते, एवं नराणामुत्तम इति षष्ठीसमासोऽपि न, न निर्धारण इति षष्ठीसमासनिषेधात्, अतो नरेषूत्तमः इति नरेभ्य उत्तमः, इति वा विग्रहः, उत्तमः पुरुषस्त्वन्यः, अक्षरादप्यतीतोऽस्मीति भगवदुक्तेः। यद्वा नियतानुपूर्वीके नरोत्तमे सञ्ज्ञात्वमिति न दोषः। यद्यपि न गर्भत्वमापेदे न योन्यामवसत्प्रभुरिति महाभारतानुसारं गर्भवासादि तस्य निराक्रियते तथापि तत्र कर्मकृतजन्मनिरासे तात्पर्यात् **नरोत्तमपदेन** नराकारेणाविर्भूतमिति लभ्यते, तत्र कुत्राविर्भूतमित्यत्र तादृशधर्मिष्ठस्य भगवत आविर्भावानुगुणधार्मिकवंशेऽवतीर्णत्वं सूचयितुमाह– **दाशरथिम्**। दशरथस्यापत्यं पुमान् दाशरथिः। दशसु दिक्षु प्रस्थितो रथो यस्येत्यर्थे सप्तमीविशेषणे बहुव्रीहाविति सप्तमीपदज्ञापितो व्यधिकरणबहुव्रीहिसमासः। यद्वा दशेन्द्रियाणि नियम्यत्वेन रथो यस्येति विग्रहेण विजितेन्द्रियत्वेनात्मवत्ता सूच्यते। यथा रामायणे तद्गुणनिचयः स्मर्यते–

तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः।।
इक्ष्वांकूणामतिरथो यज्वा धर्मपरो वशी।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः।।
बलवान्निहतामित्रे मित्रवान् विजितेन्द्रियः।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः।।
यथा मनुर्महातेजाः लोकस्य परिरक्षिता।

पदपरामर्शः

तथा दशरथो राजा लोकस्य परिरक्षितेति।।

रामायणोक्तधर्मपरत्व-यज्वत्व-वशित्व-विजितेन्द्रियत्वादिगुणैः प्रसन्नः सर्वपितापि भगवान् स्वजन्मभूमित्वेन तमेव निश्चित्यानुरूपं मत्वा तद्गृहेऽवततारेति भावो रामायणे प्रकाशितः- पितरं रोचयामास तदा दशरथं नृपमिति। लोके पितृहीनता दौर्भाग्यं सूचयति तत्तत्र मा भूदित्यवताराभिप्रायेण तं निराकर्तुमुच्यते- **दाशरथिम्,** तेनाभिजात्यं प्रकाशितम्। तादृशस्य नित्यकिशोरस्य राजकुमारस्य भगवतो मधुरोपासकरसिकजन-भावानुगुणशृङ्गाररसोचितं विशेषणमाह- **महोत्सवमि**ति। महानुत्सव उल्लासो येन, अयं किल मूर्तिमानिव महोत्सवो, रसरूपत्वाद्, रसो वै स इति श्रुतेः। यद्वा महानदम्य उत्सव दासोऽहं कोसलेन्द्रस्येत्यवंरूप उत्सेको गर्वो येन स, महोत्सवस्तं स्मरामीत्यन्वयः। स एकाकी न रमत इति श्रुतेः'' न जीवेयं क्षणमपि विना तामसितेक्षणामिति रामायणोक्तेश्च रमयतां वरस्य रामस्य महोत्सवत्वकथनात्तदनुरूपं प्रेमाख्यमहासारस्वरूपया स्वरूपशक्तित्वेनात्मभूतया नित्यसाहचर्यमभिधत्ते- **सीतया सहेति।** एतेन पुरुषकारस्मरणमभूत्, साध्यस्मरणे साधनस्मरणस्यौचित्यात्। पराम्बायाश्च नित्यव्यवस्थितपतिपारार्थ्यं प्रतिष्ठाप्य भगवता सहास्या अपि ध्येयतोक्ता। सहशब्देनैतदपेक्षया भगवतः प्राधान्यं व्यञ्जितम्, सहयुक्तेऽप्रधाने इत्यनुशासनात्। सदा सीतया सह स्मरामि, सीतया सह सदा स्मरामीत्युभयत्र सदापदान्वयः। **स्मरामीति** व्यक्त्यभिप्रायेणैकवचनम्। **राममि**ति विशेष्यभूतं श्रुतिस्मृतिशतसिद्धं भगवतो नामोच्यते, श्रीसीतया सह पूर्वोक्तगुणविशिष्टं रामं सदा स्मरामि- तैलधारावदविच्छिन्न-प्रत्यक्षसमानाकारज्ञानविषयं करोमीत्यर्थः। सर्वेषामवताराणामवतारी रघूत्तम इत्युक्त्या तदितरावताराणां स्वरूपस्य तत्तस्वरूपताग्रहवद्भिर्भक्तैर्ध्येयत्वेऽपि श्रीरामानन्यैर्ध्येयरूप-विशेषं सुदृढं नियमयति- **द्विभुजस्यैवेति।** हे प्रियोत्तम! रामपरायणैः सर्वशक्तेर्द्विभुजस्यैव रामस्य ध्यानमेव सदा विधातव्यमित्यन्वयः। ध्येयं क्रियाञ्चोभयमपि नियन्तुमेवकारद्वयम्। एवकारस्य भिन्नक्रमत्वेन राममित्यत्रान्वयः, रामस्यैवेति तदितरव्यावृत्तिः ध्यानमेव विधातव्यमित्यत्र तव्यता विध्यर्थबोधनादेवकारेण च तदेकानुचिन्तनस्येतिकर्तव्यतां सूचयति, एवकारस्येतरनिवृत्तिफलत्वात्। द्विभुजस्यैवेति शङ्खः पाण्डुर एवेत्यादिवद्विशेषणे सङ्गतस्यैवकारस्यायोगव्यवच्छेदार्थकत्वाद् विशेष्ये विशेषणस्यासम्बन्धनिषेधाद्द्वाभ्यां निषेधाभ्यां प्रकृतार्थस्य द्विभुजत्वस्य दार्ढ्यं बोधयति।

.......................................................पदपरामर्शः.......................................................

विशेष्ये रामे विशेषणतावच्छेदकद्विभुजत्वधर्मसम्बन्धाभावं व्यवच्छिदन् तस्य द्विभुजत्वं नियमयति। पुरुषसूक्तादौ हि तद्रूपेण परत्वस्य निर्देशात्, मुखं किमस्यासीत् किं बाहू किमूरु पादावुच्येते, इति पृष्ट्वा बाहू राजन्यः कृत इति समाधिना द्वावूरु द्वौ बाहू आत्मैव पञ्चविंश इति रहस्याम्नायात्, उभा हि हस्ता वसुना, पूष्णो हस्ताभ्याम्, पाणिभ्यां त्रयीं संभरतीत्यादिना च परस्य द्विभुजत्वमेव सिद्ध्यति। अत एव सुन्दरीतन्त्रे–

> ययौ तदा महाशम्भू रामलोकमगोचरम्।
> तत्र गत्वा महाशम्भू राघवं नित्यविग्रहम्।।
> ददर्श परमात्मानं सहासीनं मया सह।
> सर्वशक्तिकलानाथं द्विभुजं रघुनन्दनम्।।

द्विभुजाद्राघवान्नित्यात्सर्वमेतत्प्रवर्तत इति। आनन्दसंहितावचनमप्युक्तार्थं पुष्णाति– स्थूलं चाष्टभुजं प्रोक्तं सूक्ष्मं चैव चतुर्भुजम् परं च द्विभुजं रूपं तस्मादेतत्त्रयं यजेदिति। सदाशिवसंहितायान्तु गोलोकेऽपि तादृशं रामं परत्वेनापस्थापयति–

> यो वै वसति गोलोके द्विभुजस्तु धनुर्धरः।
> सदानन्दमयो रामो येन विश्वमिदं ततम्।।

इत्यादे रामायणशिरोमणिकारेण विस्तरशो निरूपितत्वाद्विदितचरमेव। अवधारणार्थकै- वकारेणाव्यवधानमपि विवक्ष्यत इत्यव्यवहितं ध्यानं कर्तव्यमिति गम्यते। कारुण्यादिसद्भावेऽप्यज्ञस्यापूर्णस्याशक्तस्य च निरपेक्षरक्षकत्वं न संभवतीत्यत आह– **सर्वशक्तेरिति।** एतेन परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्यर्थः प्रतिपादितः। आचार्यत्वात्स्वानुयायिवर्गमुद्दिश्योक्तम्– **रामपरायणै**रिति– श्रीरामैकदेवताकैः श्रीरामैकप्रयोजनैस्तदैकफलैस्तत्रैव समर्पितात्ममरैर्भक्तैरिति भावः। भगवान् राम एव परम् अयनम्, प्रकृष्टजीवनाश्रयो येषान्तैरित्यर्थतया न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैरिति रामायणोक्तो भावोऽभिमतत्वेन निर्दिष्टः। ध्यानोपासनादिशब्दवाच्यभगवद्भक्तेः प्रधानविधेयतया गुह्यतमत्वात् तदुपदेश- ग्रहणपात्रतां स्वशिष्यस्याह– **प्रियोत्तमेति** सम्बुद्ध्या। यथा गीतायां भगवान् "कश्चिन्मे प्रियकृत्तम इत्याह तथैवाधिकारिविशेषेषु ध्येयस्वरूपस्यावश्यवक्तव्यतां सूचयितुं प्रियोत्तम इति सम्बोधयति। अतितरां प्रीतिविषयोऽसीति भावः। वस्तुतो ध्यानप्रकरणारम्भे महाप्राज्ञेति सम्बुध्यावसाने च प्रियोत्तमेत्यभिमुखीकृत्य स्वस्य भगवत्स्वभावः प्रकाशितः– प्रियो हि ज्ञानिनोऽत्यर्थमिति।

**एवं तेऽभिहितं ध्यानं शृणु तन्मुक्तिसाधनम्।**
**मुमुक्षूणां परं वेद्यं विधेयं चाथ सर्वदा॥61॥**

पदपरामर्शः

*तृतीयं प्रश्नं समाधाय चतुर्थमुत्तितीर्षुरुपक्रमते-* ***एवमिति।*** *एवं पूर्वोक्तप्रकारेण ते मद्वात्सल्यविषयभूताय तत्त्वोपदेशाधिकारिणे तुभ्यं ध्येयभगवत्स्वरूपनित्यानुसन्धानरूपं ध्यानं तत्र सापेक्षत्वाद् विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणतया चाभीष्टध्येयस्य स्वरूपमभिहितम्, इदानीं मुक्तेः किं साधनमिति चतुर्थप्रश्नस्य क्रमप्राप्तत्वात्समाधेयतया मया त्वयि करुणयोच्यमानं जीवात्मनो बन्धनहेतोर्मुक्तेः साधनं शृणवधारय बद्धबन्धनमोक्ष- पदार्थज्ञानानन्तरं तादृशबन्धनात्तस्य जीवात्मनो मोक्षोपायजिज्ञासाया औचित्यात्। तत्साधनं न केवलं त्वयैव ज्ञेयमेवापितु तदनुगुणं विधेयमपि, ज्ञानपूर्वकतदनुरूपप्रवृत्तेर्दर्शनात्। मोक्षकामाणां परं ज्ञेयं विधेयञ्चास्ति- परमार्थभूतमोक्षसाधकत्वादस्य वेद्येषु विधेयेषु च परत्वम्, अत्यादरेण ग्राह्यतयानुपेक्षणीयमिति। वक्ष्यमाणं न केवलमावरणभङ्गेऽपितु तदनुगुणविधाने पर्यवस्यतीति वाक्यार्थज्ञानमात्रेण मोक्षवादिनो निरस्ताः, न तावता मोक्षसिद्धेः। प्रमाणज्ञानस्य वस्तुतन्त्रत्वमेव, पुरुषतन्त्रस्यैव च विधेयत्वात् अनुविद्य विजानाति, विज्ञाय प्रज्ञां कुर्वीतेत्यादिश्रुतिभिरनुविद्य, विज्ञायेत्यनूद्य विजानाति प्रज्ञां कुर्वीतेत्यादिनोपासनस्य विधानात्। तमेवार्थमाह- बुद्धे चेत् क्षेमप्रायणमिहैव न दुःखमुपलभेतेति सूत्रयन्नापस्तम्बः। अत एव ज्ञानवान् मां प्रपद्यते इति गीतोक्तं सङ्गच्छते।* ***विधेयञ्चाथ सर्वदे****त्युपसनाया यावज्जीवमनुष्ठेयतामभिधत्ते। यथोक्त- माप्रयाणात्तत्रापि हि दृष्टमिति सूत्रे भगवताऽनन्दभाष्यकारेण- "आमरण- मावृत्योपासनमनुष्ठेयम्, कुतः तत्रापि हि दृष्टम्- उपासनमारभ्याप्रयाणान्मध्ये यः कालस्तत्रापि दृष्टमुपासनम्- स खल्वेव वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यत इत्याप्रयाणमुपासनावृत्तिः कर्तव्येति।"*

संवित्करः

प्रिय! इस प्रकार मैंने ध्यान तथा ध्येय का स्वरूप बताकर ध्यान विषयक तीसरे प्रश्न का समाधान किया। अब मोक्षार्थियों द्वारा जानने एवं सर्वकाल आचरण के योग्य श्रेष्ठ मुक्तिसाधन का श्रवण करो।

**तप्तेन मूले भुजयोः समङ्कनं शरेण चापेन तथोर्ध्वपुण्ड्रकम्।**
**श्रुतिश्रुतं नाम च मन्त्रमालिके संस्कारभेदाः परमार्थहेतवः॥62॥**

.....................................................पदपरामर्शः.....................................................

*तत्रादौ मलापनयनगुणाधाननिमित्तकसंस्कारपञ्चकं परमार्थहेतुतयोपादत्ते– **तप्तेनेत्यादिना**। वह्नौ सविधि तप्तेन शरेण चापेन भुजयोर्मूले समङ्कनमिति तापसंस्कारः प्रथमः, भगवत्क्षेत्रसम्बन्धिश्वेतमृत्तिकया श्रीरामपादाकृत्या हरिद्राचूर्णैस्तयैव वा वेणुपात्राद्याकारेण यथापरम्परं प्राप्तेन वर्तुलाकारादिना वा मध्ये शास्त्रोक्त–दिशोर्ध्वगामिरेखाविधानं नामोर्ध्वपुण्ड्रकमिति द्वितीयसंस्कारः, श्रुतिप्रतिपादितं भगवत्सम्बन्धसूचकं भगवन्नामादिदासाद्यन्तं श्रीरामदासेत्यादि नामेति नामसंस्कार–स्तृतीयः। मन्त्रश्च षडक्षरमन्त्रराजेति नाम्ना प्रथितस्तारकमन्त्रः सपरिकरः श्रीराममन्त्र इति मन्त्रसंस्कारश्चतुर्थः। श्रीतुलसीमालेति मालासंस्कारः पञ्चमः। यथा तापोर्ध्वपुण्ड्रयोः समङ्कनमुक्तं तथैव नाम्नि मन्त्रमालिकयोश्च ग्रहणधारणादिक्रिया–पदमन्वेतव्यम्। देवो भूत्वा देवं यजेतेति ब्रह्मसाजात्यप्राप्तिपूर्वकतदुपासनस्यैवोचित्यादेते पञ्चधा भिन्नाः संस्कारा वैष्णवत्वाधानेन जगत्सम्बन्धबोधमलापनयनेन च भगवदुपासनायां साक्षान्मोक्षहेतुभूतायामुपकारका भवन्तीति– **परमार्थहेतुत्वेनोक्ताः**, कार्यान्तरयोग्यतासम्पादकत्वस्यैव संस्कारत्वोक्तेः। अत्र श्रुतिश्रुतमिति न केवलं नामपदेनान्वेति, समङ्कने, ऊर्ध्वपुण्ड्रके, मन्त्रे मालिकायाञ्चाप्यन्वेति– श्रुतिश्रुतं नाम, श्रुतिश्रुतो मन्त्रः श्रुतिश्रुता मालिकेत्येवंरीत्यैकशेषो नपुंसकमनपुंसकेनैकवच्चास्या–न्यतरस्यामित्यनुशासनात्। तेन पञ्चानामपि वैष्णवसंस्काराणां श्रौतत्वं सिद्धम्। तद्यथा तापसंस्कारे प्रमाणमृग्वेदीयो मन्त्रः–*

*पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।*
*अतप्ततनूर्न तदामोऽश्नुतेश्शृतास इद्वहन्तस्तत्समासते॥*

*हे ब्रह्मणस्पते, ईश्वरस्याप्यायुधत्वेन रक्षकवदुपलभ्यमान! विततं व्याप्तं ते तव पवित्रन्तेजः विश्वतः सर्वस्य (सार्वविभक्तिकस्तसिः) प्रभोः (षष्ठ्यर्थे प्रथमा–*

-----------------------------संवित्करः-----------------------------

**वैदिक विधि से अग्नि में सन्तप्त धनुर्बाणों की भुजा के मूल में छाप लेना, ऊर्ध्वपुण्ड्र तिलक धारण करना, भगवत्सम्बन्धी (दासान्त, प्रपन्नान्त या शरणान्त जैसे राघवदास) आदि नाम रखना, सर्वदा कण्ठ में तुलसीमाला धारण करना तथा वैष्णव सद्गुरु से षडक्षर रामतारक मन्त्रराज का उपदेश ग्रहण करना, ये वैष्णवीय पञ्चसंस्कार, परमार्थरूप मोक्ष के कारण हैं।**

.........................................................पदपरामर्शः.........................................................

विभक्तिव्यत्ययश्छान्दसः) गात्राणि गात्रभूतं चिदचिदात्मकमखिलं शरीरं पर्येषि व्याप्नोति (पुरुषव्यत्ययश्छान्दसः) (त्वया) अतप्ततनूः आमः (अपरिपक्वः) न तदश्नुते (भगवन्तं प्राप्नोति) ये शृतासः पक्वाः , तद्वहन्तो धारयन्तस्ते तत्समासते, तत्सायुज्यं प्राप्नुवन्तीत्यर्थः। मन्त्रे पवित्रपदं यद्यप्यग्नौ मेध्ये च प्रथितं तथाप्यत्र पापदाहकत्वादग्निरूपतया च भगवद्दिव्यायुधयोर्धनुर्बाणयोर्वर्तते, यथोक्तं रामायणे-

अल्पतोममिवादित्यः प्राणानादास्यते शरैः।
स पपात खरो भूमौ दह्यमानः शराग्निना ''

इति। अतो ब्रह्मसायुज्यादिप्राप्ति- कामश्चापबाणाभ्यां तप्ततनुर्भवेदित्युक्तं भवति। वेदोपबृंहणभूतरामायणस्य वाल्युद्धारप्रसङ्गे भगवद्दिव्यायुधस्य बाणस्य स्वर्गीयमानसाकेताख्यधामावाप्तिसाधन- प्रकाशकत्वमुक्त्वान्ते परमगतिप्रापकत्वमुच्यते-

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम्।
रामबाणासनाक्षिप्तमावहत्परमाङ्गतिम्।।

अत एवागस्त्यसंहितायामुक्तम्-

नाङ्कितश्चापबाणाभ्यां न मन्त्रोऽस्ति षडक्षरः।
न नाम रामसम्बन्धि न रामोपासको भवेदिति।।

यो वै नित्यं धनुर्बाणाङ्कितो भवति स पाप्मानन्तरति, संसारन्तरति स भगवदाश्रितो भवति स भगवद्रूपो भवतीति श्रवणाच्च। ऊर्ध्वपुण्ड्रधारणे चापि सन्ति श्रुतिस्मृतीतिहासवचांसि। यथा महोपनिषदि-

धतोर्ध्वपुण्ड्रः परमेशितारं नारायणं साङ्ख्ययोगाधिगम्यम्।
ज्ञात्वा विमुच्येत नरस्समस्तैः संसारपाशैरिह चैव विष्णुमिति।
मुमुक्षुर्नरो धृतोर्ध्वपुण्ड्रो भगवन्तं ध्यायेदिति विध्यर्थः फलति।

यः करोत्यूर्ध्वपुण्ड्रं तु संन्ध्यावन्दनकर्मसु तेनाहं सुलभो ब्रह्मन्नेकस्मिन्नेव जन्मनीति ब्रह्माण्डवचनानुसारं तस्यार्चनाङ्गत्वं ज्ञायते भल्लशाखायाञ्चोर्ध्वपुण्ड्रमारभ्य कुलं तारयते सप्त स गच्छेद्वैष्णवं पदमित्युक्तम्। आथर्वणे च- हरेः पदाकृतिमात्मनो हिताय मध्येच्छिद्रमूर्ध्वपुण्डं यो धारयति स परस्य प्रियो भवति स पुण्यवान् भवति स मुक्तिमान् भवतीत्युक्तम्।

........................................................पदपरामर्शः........................................................

यथास्योर्ध्वपुण्ड्रधारणस्य नित्यनैमित्तिकादिसर्वकर्माङ्गत्वपवित्रत्वमङ्गलत्वादिकं पुरुषार्थ-साधकत्वञ्च तत्र तत्र स्मृतिषु प्रसिद्धं तथैव "ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना, उद्धृतासीति मन्त्रेण वैष्णवेण विशेषतः"।। प्रशस्ते पर्वताग्रादौ यत्रास्ते मधुसूदनः तत्रोद्धृतमृदा कार्यमूर्ध्वपुण्ड्रं विधानत इति क्रियमाणस्योर्ध्वपुण्ड्रस्य हरिपादसंस्थानत्वं सान्तरालत्वं प्रदर्श्य केशवादिद्वादशनाममन्त्रैः श्रियश्च श्रीकमलादिनामभिर्द्वादशाङ्गेषु वेणुपत्राद्याकारेण विरचनोल्लेखात्। तत्र तत्र तद्धारण-विधिरपि निरूप्यते, ब्रह्मदासा इति श्रवणाद्दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मण इति हनूमता रामदासेतिस्वासाधारणसमाख्यायाः स्मरणाच्च नामसंस्कारस्य भगवत्सम्बन्धस्मारकत्वेन विधानं सूचितं भवति, दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मन इत्यादिभिरात्मनां परमात्मदासत्वसिद्धेः। शेषत्वन्त्वचेतनस्याचेतनं प्रत्यपि स्यात्किन्तु दासत्वन्तु चेतनं प्रति चेतनस्यैव सम्भवति। जीवात्मनः स्वरूपबोधको व्यापको भावो भगवद्दास्यम् सख्यवात्सल्यकान्ताभावादिषु तस्यानुस्यूतत्वात्, नित्यकैङ्कर्यस्यैवाभीष्टतमत्वाच्च। मन्त्रसंस्कारे प्रदीयमानश्चात्र भगवद्रामसम्बन्धी षडक्षरतारकमन्त्रराज-मन्त्रद्वय- चरममन्त्रेतित्रित्वविशिष्टो मन्त्रो विवक्षितो रामोपासनायां तस्यैव विहितत्वात्।

प्राङ्मुखोपविष्टस्य चोत्तराभिमुखो गुरुः ।

शनैश्शनैः शुभे कर्णे त्रिवारं श्रावयेन्मनुमित्यादिरीत्या मन्त्रदानविधिरपि वर्णित आचारग्रन्थेषु। स्तोत्रपाठाद्यशक्तैः साक्षाद्भगवत्प्रतिपादकभागजपस्यैव युक्तत्वात्तत्रापि सर्वसारभूतषडक्षरतारकमन्त्रराजजपस्य विधानम्, तत्र जपादिकालेऽपि गुर्वादिषु मौनादिकं वर्जितम्- यथाह भगवान् बोधायनः-

जपमध्ये गुरुर्वापि वैष्णवो यः समागतः।
सम्भाषणादिपूजा तु तस्य कृत्वानुमान्य च।।
अनुश्राव्य ततः कुर्याज्जपशेषं समाहितः।
सर्वस्य प्रभवो यस्माद्विष्णुपादाश्रया नराः।।
तन्मूलतः क्रियास्सर्वास्सफलास्तु भवन्ति हीति।

मन्त्रजपोऽपि स्वाध्यायः, तन्निष्ठया मन्त्रदेवताया सम्प्रयोगलाभं वदति योगसूत्रकारः- स्वाध्यायादिष्टदेवतासम्प्रयोग इति।

**पदपरामर्शः**

मालिका ह्रस्वा कण्ठलग्ना माला, मालिका ह्रस्वार्थे कः सम्प्रदाये कण्ठीतिप्रथिता। सा चात्र तुलसीसम्भवैव, तस्या एवामृतसम्भवत्वेन ब्रह्मरूपतया नित्यं भगवत्पदलग्नतया च सन्निहितत्वाद् भगवत्प्रियतमत्वेन च भागवतानुगुणताधान–समर्थत्वाच्च। यस्याः पदाम्बुजरजश्चकमे तुलस्येति भागवतोक्त्या वक्षसि पदं लब्ध्वापि श्रीर्भगवत्पादपङ्कजनित्यसान्निध्यं तुलसीसौभाग्यं प्रार्थयत इत्याशयेन तुलसीसंभवं सर्वं पावनं मृत्तिकादिकमिति पाद्मोक्त्या पावनकरत्वेन, यत्कण्ठे तुलसी नास्तीत्यादिना तद्रहितकण्ठानां शास्त्रे निन्दनात्तद्योगस्य सेवानुगुणपावनत्वाधानाद्रामोपासकैर्नान्तरीकतया यज्ञोपवीतवन्नित्यं धार्यत्वं सूचितं भवति। सम्यग् द्विधाकृतां तुलसीमालां धारयेदिति युगलोपासकाः विशेषतोऽभिनिविशन्ते–

क्षालितां पञ्चगव्येन मूलमन्त्रेण मन्त्रिताम्।
गायत्र्या चाष्टकृत्वो वै मन्त्रितां धूपयेञ्च ताम्।।
विधिवत्परया भक्त्या सद्योजातेन पूजयेत्।
तां निवेद्यैव हरये तुलसीकाष्ठसम्भवाम्।
मालां पश्चात्स्वयं धत्ते स वै भागवतोत्तम।।

इत्यादिना तद्धारणविधिरपि दृश्यते। संसारसागरसन्तरणाय सम्प्राप्तायाः प्लवभूतायाः सुदुर्लभदेहसम्पत्तेर्बुद्धिदानेन नियमनायैव गुरोः कर्णधारत्वरूपणेन निरूप्य भागवते शास्त्रानुकलप्रवर्तकत्वात्तन्महिमप्रकर्षोः वर्ण्यते। भगवद्भावो हि विषयप्रवणमनो–नियमनमन्तरेण, तच्च पुनर्गुरूपसादनमन्तरेण न संभवतीति गुरूपसत्तेरवश्यकर्त्तव्यता प्रतिपाद्यते, गुरूपदिष्टसाधनेन भजनसुखानुभूतौ सुतरामेव मनसो नैश्चल्यसिद्धेः। करुणावशंवदो भगवान् स्वयमेव स्वावाप्तिसाधनबोधनेनानुजिघृक्षुर्मानवाकारेणावतरतीति सम्प्रदायः, अतश्चाचार्यं मां विजानीयादिति न मर्त्यबुद्ध्याभ्यसूयेदिति च भगवदादेशः सङ्गच्छते।

**यतेन्द्रियः शुचिः शुद्धवेशधृक् सुकुलोद्भवः।**
**सदाचारपरो नम्रः शास्त्रज्ञो देशनापटुः॥63॥**
**विरक्तधर्मनिरतो ध्यानाभ्यासी सुबुद्धिमान्।**
**निग्रहेऽनुग्रहे चैव समर्थो देशिको मतः॥64॥**

**पदपरामर्शः**

*श्रुतिस्तु नैषा तर्केण मतिरापनीयेति शास्त्रज्ञानवतोऽपि स्वातन्त्र्येण ब्रह्मविद्यावाप्तिं निषेधति सैव तदवाप्युपायं सूचयन्त्याह- तद्विज्ञानार्थं गुरुमेवागच्छेत्, आचार्यवान् पुरुषो वेदेत्यादिभिः। पूर्वोक्तानां तापादिसंस्काराणां भगवदवाप्तावङ्गत्वेनोक्तानामाचार्यं विनानुपलम्भादेकसम्बन्धिज्ञानन्यायेन तत्स्मरणं युक्तम्- समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठमिति श्रुत्युक्तलक्षणमनुसन्धाय, तदेव द्वाभ्यां श्लोकाभ्यां विवृणोति-* **यतेन्द्रिय इत्यादिना।** *श्रोत्रियत्वं वेदवेदाङ्गपारगत्वं, वेदान्तार्थपारगत्वं वा तस्य चावृजिनत्वमकामहतत्वञ्च श्रुत्यापेक्षितम्- यश्च श्रोत्रियोऽवृजिनोऽकामहत इति श्रुतेस्तत्राकामहतत्वेन विषयवैतृष्ण्यम् अवृजिनत्वेन शास्त्रविध्यनुष्ठानेन निष्पापत्वं च सूचितं भवति। ब्रह्मनिष्ठमित्यनेन नित्यं ब्रह्मानुसन्धानेन लब्धापरोक्षानुभवत्वं निर्दिश्यते। भगवतापि- उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिन इत्युक्त्वा ज्ञानिनः पदवाक्यन्यायप्रमाणनैपुण्यं संसूच्य पुनस्तत्वदर्शिनः कृतब्रह्मसाक्षात्कारत्व-कथनेनोभयोभेदः प्रदर्शितः, तेन साक्षात्कारवद्भिरुपदिष्टमेव ज्ञानं फलपर्यवसायीति सूचितम्, ज्ञानस्य च परोक्षापरोक्षसाक्षात्कारभेदेन द्वैविध्यं प्रकाशितम्। रामायणटीकायामाचार्यलक्षणञ्चैवमुक्तम्-*

*आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः।*
*मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थदः शुचिः॥*
*गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषत।*

*एवं श्रुतिस्मृतीहाससिद्धमाचार्यलक्षणं विमृश्य निर्मथ्य च सुबोधसरण्यावतारयति-*

**संवित्करः**

**पञ्चसंस्कारप्रदाता आचार्य सद्गुरु को जितेन्द्रिय, शरीरादि से पवित्र, वैष्णवोचित शुद्धवेष धारण करने वाला, उत्कृष्ट कुल में समुत्पन्न, शास्त्रोक्त आचारपरायण, विनम्र, वेदादिशास्त्रों का समुचित ज्ञानवाला तथा शास्त्रीय विषय को समझाने में (उपदेश करने में) प्रवीण होना चाहिये। जो विरक्तधर्म के पालन में लगा रहने वाला हो, भगवद्ध्यान-चिन्तन का अभ्यास वाला हो, सद्बुद्धिसम्पन्न तथा निग्रह-अनुग्रह में समर्थ हो, वही पञ्चसंस्कारप्रदाता गुरु के रूप में स्वीकार्य माना गया है।**

**पदपरामर्शः**

***यतेन्द्रिय*** *इत्यादि द्वादशलक्षणवान् देशिक आचार्यो मत इति भावः।* ***यतेन्द्रिय*** *इत्यनेन निगृहीतेन्द्रियत्वार्थप्रकाशनेन चित्तैकाग्रता सूच्यते, तेन च तपःसम्पन्नत्व-सूचनेनापस्तम्बोक्ताचार्यलक्षणं समाहितत्वमुच्यते।* ***शुचिरिति*** *बाह्याभ्यन्तशुद्धिरुच्यते, तेन "यश्च श्रोत्रियोऽवृजिनोऽकामहत" इति श्रुत्यक्तावृजिनत्वं निष्पापत्वं परामृश्यते।* ***शुद्धवेशधृक् सदाचारपर*** *इत्युभाभ्यां शास्त्रविहितकर्मानुष्ठानरूपा सदाचारनिष्ठोच्यते।* ***सुकुलोद्भव*** *इत्यनेनापस्तम्बोक्तं सद्वंशप्रसूतत्वरूपमाभिजात्यं प्रकाशितम्, तद्विना वेदप्राप्तेरसंभवात्। यथोक्तम्- अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमभीप्सेदिति। विद्या ददाति विनयमिति निसर्गविनयं विद्याजन्यत्वेनोक्तमाह-* ***नम्रोऽनुद्धतचेता*** *इति यावत्। शास्त्रज्ञ इति शास्त्रं वेदः, तज्जानातीति वेदसम्पन्नतोच्यते, स्वरूपतोऽर्थतश्च तज्ज्ञातेति भावः। व्युत्पत्त्यभिव्यक्तिभ्यां युक्त एव शिष्याववोधने नैपुण्यं धत्त इत्याह-* ***देशनापटुरिति।*** *एतेन गृणातीति गुरुपदार्थोऽनुस्मारितः। केवलाध्ययनस्य स्थाणुरिवेत्युक्त्या निगदेनैव शब्द्यत इति कथनेन च निन्दितत्वात्तदर्थं पर्यालोच्य यावद्विवक्षितार्थप्रतिपादनक्षमशब्दप्रयोगवित्त्वमत्रोच्यते। अत एव चाचार्यस्य* ***देशिक*** *इत्यन्वर्थसञ्ज्ञेति।* ***विरक्तधर्मनिरत*** *इत्यनेन श्रोत्रियश्चाकामहतश्चेति श्रुत्यपेक्षितार्थः सूच्यते, भागवतधर्माश्रयणेन निवृत्तिनिष्ठ इत्यर्थः। तस्य लौकिकविषयं विहायालौकिकविषयप्रीतिमाह-* ***ध्यानाभ्यासी।*** *ध्यानं भगवदुपासनं तत्रैकतानतायै प्रयत्नशीलोऽभ्यासनिरतो वेत्यर्थः, अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय इत्युक्तेः। तस्य दाढ्र्यायापेक्षितं भागवतशास्त्ररहस्यार्थानुसन्धानं विधातुं ग्रहणधारणोहा-पोहार्थविज्ञानादिविशिष्टबुद्धिसम्पदुच्यते-* ***सुबुद्धिमान्।*** *तेन दुरूहाणां ग्रन्थग्रन्थीनां विशकलने सामर्थ्यं सूच्यते, किञ्च नवनवोन्मेषशालिनी बुद्धिः प्रतिभोच्यते, तेन प्रतिभया गृहीतमप्यर्थं नवीकृत्योपस्थापयितुं क्षमता प्रकाशिता भवति। शिष्याणां निग्रहानुग्रहशक्तिमत्त्वं वदति-* ***समर्थ*** *इति। अत्र यतेन्द्रियसुकुलोद्भवशास्त्रज्ञेति पदैः श्रोत्रियत्वं प्रकाशितत्वं ध्यानाभ्यासीत्यादिना ब्रह्मनिष्ठत्वञ्चेति।*

*गुरूच्चारणानुच्चारणरूपाक्षरराशिग्रहणरूपं शास्त्रश्रवणमेव स्वाध्यायः, तत्सिद्धौ स गुरुमुखाद् विहितस्वाध्यायेनावाप्तवेद उच्यते- आहितज्ञानदाढ्र्याय तत्त्वयाथार्थ्यो-*

पदपरामर्शः

*पलब्धये गुरुशास्त्रोक्तार्थानां सपरिकरैर्हेतुभिरनुमानं मननम् इदमेवमेवेति हेतुतः हृदये प्रतिष्ठापनं, तच्च कुशाग्रधिषणैरेव कर्तुं शक्यमिति निदिध्यासनं तूपासनमेव। शुचित्वसदाचारपरत्वसुबुद्धिमत्त्वनम्रत्वादिकमात्मगुणजातम् अमानित्वमदम्भत्वमित्यादिना भगवद्गीतात्रयोदशाध्यायवर्णितरीत्या प्रकर्षबोधकम्। इत्थं संस्कारप्रदातृत्वे- नाध्यात्ममार्गप्रवर्तकस्याचार्यस्यापेक्षितगुणा इमे सन्तीति प्रतिपाद्यैवंविधो देशिक आचार्यो यथाशास्त्रमुपादेयत्वेनाभिमत इति विवक्ष्यते। तथा च* ***शास्त्रज्ञ*** *इत्यनेन श्रवणं* ***सुबुद्धिमान् देशनापटुरित्यनेन*** *च* ***मननं ध्यानाभ्यासीत्यनेन निदिध्यासनं*** *च सूचितम्। किञ्च* ***शास्त्रज्ञ*** *इत्यनेनाधीतिः,* ***सुबुद्धिमान्*** *इत्यनेन बोधः,* ***विरक्त- धर्मनिरतः, सदाचारपरो ध्यानाभ्यासीत्यनेनाचरणं समर्थो देशनापटुरित्यनेन*** *च प्रचारणमुच्यते। एतेन चतसृष्वपि विद्यावस्थासु समधिगतप्रावीण्यमाचार्यलक्षणं निर्दिष्टम्। करणविघाततद्वैकल्यदुर्व्यसनादिप्रयुक्तजुगुप्सोपहास्यत्वादिदोषसद्भावनिषेधे तात्पर्यं लक्ष्यते, तत्सत्वे तत्स्वरूपानुगुणगौरवनाशात्। न चाष्टावक्रस्य वैरूप्यमपि न गौरवनाशकतया गृहीतमिति चेन्न ज्ञानादिसत्त्वेऽपि तदंशे न्यूनताया अनपलापात्। वस्तुत उत्कटदुष्कर्मविपाकस्य हीनाङ्गत्वादेः धर्मशास्त्रे स्वीकृतत्वादसाध्यरोगादेश्च क्वचिदभिशापप्रयुक्तत्वनिरूपणाच्च शास्त्रोपेक्षा। महदतिक्रमश्चात्र हेयताबीजम्।*

**हीनाङ्गो ह्यधिकाङ्गश्च कपटी कृष्णदन्तवान्।**
**नेत्ररोगी च कुष्ठी च वावदूकश्च वामनः।।65।।**
**व्यसनी बहुनिद्रश्च कुनखो बहुभोजनः।**
**नेदृशो देशिको योग्यो मुमुक्षोर्मुक्तिसाधने।।66।।**

पदपरामर्शः

*कदा पूर्वोक्तगुणविशिष्टोऽपि जन आचार्यत्वेन नाङ्गीकार्य इति बोधयितुमाह-* ***हीनाङ्गेत्यादिश्लाकद्वयेन।*** *यथा द्वादशभिर्विशेषणैशराचार्यत्वाधायकगुणाः सूचितास्तथैव*

संवित्करः

**जो कम या अधिक अङ्ग वाला हो, कपटी, काले दाँतों वाला, नेत्ररोगी, कुष्ठ रोगवाला, निरर्थक अधिक बोलने वाला तथा वामन (बहुतछोटे कद वाला हो) वह मुमुक्षु की मुक्ति के लिये सद्गुरु बनने योग्य नहीं है। जिसे गाँजा बीड़ी जैसा कोई व्यसन हो, जो अधिक सोता हो, जिसके मलिन एवं बड़े बड़े नख हों, प्रमाण से अधिक भोजन करता हो, मुक्त्यर्थ शास्त्र की दृष्टि से ऐसा पुरुष आचार्य के रूप में मान्य नहीं है।**

.......................................................पदपरामर्शः.......................................................

द्वादशदोषहेतुकं तद्विघातमाह- **हीनाङ्ग** इति। नात्र द्वादशदोषनिकरेऽपितु प्रत्येकं हेयतया तदनुपयुक्तता विश्राम्यति। यद्यपि सर्वथानवद्यता केवलं भगवति, लोके तथानुपलब्धेराचार्यत्वं निर्विषयमेव स्यात्तथाप्यभिगम्यत्वादिनाशकोत्कटपापस्य तदनुरूप-परिणामभोगकालेऽपि विधवामुखदर्शनादिवद्धेयता दुर्निवारा, शातातपोक्त्यनुसारमजाघाती गोवधी मातृहा परोपहासकृत् कन्दमूलहारी त्रपुहारी मधुहारी वस्त्रहारी यथाक्रममधिकाङ्गः कुष्ठ्यन्धः काणो ह्रस्वपाणिर्नेत्ररोगवान् विकृताक्षः कुष्टरोगवांश्च भवति, अत्रैव च तत्पुत्रादिकरणीयप्रायश्चित्तनिर्देशोऽपि दृश्यते।

अङ्गवैकल्यमङ्गाधिक्यञ्चोभयथा सामुद्रिकशास्त्रोक्त्याऽमाङ्गल्यं सूचयतः नैत्ररोगः कुष्ठता चोत्कटपापं निर्दिशति। प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामन इत्युक्तप्रकारेणोपहास्यत्वम्। न केवलं पूर्वदुष्कर्मविपाकोऽपितु साम्प्रतिक-चेतोमालिन्यमाह- **कपटीति** एतेन गूढविप्रियकर्तृत्वं सूच्यते। चेतःकार्यं वस्तुया-थात्म्यनिश्चयो नान्यहितघातकं कापट्यम्, आर्जवं हि ब्रह्मस्वभावः। न केवलं शास्त्रोपदेशेनैव, स्वाचारेणापि शिक्षयत्याचार्यः, स्वयमाचरते यस्मादिति तन्निरुक्तेः। मुखस्य जुगुप्सावहत्वात्सौम्यत्वनाशं वदति- **कृष्णदन्तवान्।** दन्तेषु कार्ष्ण्यं दन्तधावनाद्यभावजन्यं भवतु ताम्बूलादिभक्षणव्यसनकृतं वास्तु, उभयथापि प्रमत्तत्वं विलासित्वं वा सूचयति। तादृशदन्तकार्ष्ण्यात्प्रसादस्मितेष्वपि वैरूप्यकृतं भीषणत्वं जनयति। कुनखीत्यनेनापि पूर्ववदसभ्यत्वं गम्यते। साम्प्रतिकाचारदोषसन्ततिमाह-**बहुभोजनो बहुनिद्र** इति। यस्तु स्वयं परिणाममननुसन्धाय प्रमाणाधिकं भुङ्क्ते, समधिकं शेते, तमोगुणप्राबल्यात् स कथं साधकेभ्यो मितभोजित्वं प्रातरुत्थायित्वं वा शिक्षयेदिति भावः। व्यसनशब्दोऽनेकार्थकः, विपद्यपि दृष्टोऽत्र तद्योगादति-मात्रावसादशीलः, सर्वदा विपद्ग्रस्तः, तमालताम्बूलादिभक्षणव्यसनासक्तो वा कथं संसारदुःखनिमग्नशिष्यदुःखं व्यपोहयेदिति भावः। आचार्यानुगुणं हि मनःप्रसादः सौम्यत्वमित्याद्युक्तम्। मितं च सारं च वचो हि वाग्मिताचार्यापेक्षिता, तद्विरुद्धं वावदूकत्वमसम्बद्धबहुप्रलापित्वं तद्गौरवमपनयति। ज्ञानवानपि यदि ज्ञानानुरूपं न चरति तर्हि कस्य दोष इत्यत्र भगवान् समाधत्ते जीवस्तु प्रकृतिमनादि-कालप्रवृत्तवासनामेव यातीति शास्त्रकृतो निग्रहस्तस्य नियमनं कर्तुं नार्हतीति। इत्थं शरीरवाङ्मयमानसदोषैर्ग्रस्ता विद्वांसोऽप्याचार्यत्वेन नाङ्गीकार्यास्तेषां मुमुक्षूज्ञानोपदेशेन मोक्षसाधनेऽयुक्तत्वेन निषिद्धत्वादित्यलं दोषविवेचनेन।

**श्रद्धान्वितो विशुद्धात्मा मेधावी विनयी पटुः।**
**कुलीनः सच्चरित्रश्च बुद्धिमान् व्रततत्परः।।67।।**
**गुरुशुश्रूषणे शक्त आज्ञाकारी जितेन्द्रियः।**
**अनुल्वणो भक्तिनिष्ठः शिष्यः कार्यस्तु देशिकैः।।68।।**

.....................................................पदपरामर्शः.....................................................

*परस्परापेक्षत्वेन गुरोर्गुरुत्वं शिष्यत्वनिरूपितमिति गुरुलक्षणमभिधायेदानीं शिष्यलक्षणमभिधत्ते- **श्रद्धान्वितेत्यादिना** श्लोकद्वयेन। पञ्चसंस्कारद्वारा स्वपर-स्वरूपयाथार्थ्यबोधेन भगवद्भक्तावधिकारावाप्तये तदर्थित्वसामर्थ्यापर्युदस्तत्वविचारस्य सर्वथौचित्यादत्र प्रशान्तचित्ताय शमान्वितायेति श्रौतं विद्याधिकारिलक्षणमन्वेतव्यम्। वेदान्तविद्याधिकारिशिष्यलक्षणप्रस्तावे- ''प्रशान्तचिताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षव'' इत्युक्तम्। आह च श्रुतिरत्र- शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यतीति। श्रुत्यानया संवददस्ति स्मृतिवचनमिदम्- शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणक्षमः। समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो व्रती। एवमादिगुणैर्युक्तशिशष्यो भवति नान्यथा। एतच्छ्रुतिस्मृतिसिद्धं शिष्यलक्षणं विमृश्याचार्यचरणः शिष्याणामपेक्षितगुणाख्यानविधया प्रस्तौति- **श्रद्धान्वित**, इति। गुरुवेदान्तवाक्येष्विदमित्थमेवेत्याकारिकास्तिक्यबुद्धिः श्रद्धा, तयान्वितश्शिष्यः कार्यो देशिकैरित्यन्वयः। ज्ञानावाप्तयेऽस्या अन्तरङ्गसाधनत्वं भगवानेवाह- श्रद्धावाँल्लभते ज्ञानमिति, प्रभावादिकमनुमाय जातश्रद्धस्य क्षणिकप्रतीत्या न तादृशफलापादकत्वमित्यत आह- **विशुद्धात्मेति**। विशुद्धः कापट्यादिरहित आत्मान्तःकरणं यस्य, तथाभूतः। एतेन सत्त्वशुद्धिः कल्याणभावश्च बोध्येते, तेन कामरागासूयावञ्चनादिदोषनिवृत्तिरुच्यते, विशुद्धान्तःकरणे विमले मणाविवाचार्योपदेशः स्फुटं प्रतिफलतीति भावः। आत्मातिरिक्तविषयरागराहित्यप्रतिपादनात्सञ्जात-*

--------------------------------संवित्करः--------------------------------

**आचार्यद्वारा ऐसे व्यक्ति को शिष्य बनाना चाहिये जो श्रद्धावान्, शुद्ध मन वाला, मेधावी, विनम्र, कार्यदक्ष, सत्कुल में उत्पन्न, चरित्रवान्, बुद्धिमान् तथा संकल्पपालन में दृढ निश्चय वाला हो। जो गुरुसेवा में समर्थ हो, आज्ञाकारी एवं जितेन्द्रिय हो। जो शीघ्र उद्विग्न या क्रोधयुक्त नहीं हाता हो, ऐसे भक्तिसम्पन्न समर्पित व्यक्ति को आचार्यद्वारा शिष्य बनाया जाना चाहिये।**

---

**(टिप्पणी- किसी किसी प्रति में आचार्यशिष्यलक्षणप्रकरण के श्लोक सं- 62 से 67 तक के छह श्लोक उपलब्ध नहीं हाते हैं।)**

**पदपरामर्शः**

मोक्षाभिलाषत्वं प्रकाश्यते। मेधा प्रतिभाऽस्त्यस्येति मत्वर्थीयो विनिः। आचार्योपदिष्टेष्वर्थेष्वप्रच्युतिः प्रत्युत्पन्नमतिर्वा, नवनवोन्मेषशालिनी प्रतिभा वा मेधा, तद्योगाच्छिष्यस्य व्यवहारकाले उचितार्थस्य शीघ्रं प्रतिभानं जायते। **बुद्धिमानित्यनेन** श्रुतार्थविस्मरणराहित्यमुच्यते। अतो श्रवणग्रहणधारणोहापोहार्थनिश्चयलाभायोभयो-पादानम्। विनीते विद्यावतिष्ठत इति तदनुगुणपात्रतामह- **विनयीति।** जातिकुलविद्या-द्यभिमानमुत्सार्य गुरुजनेषु विनयातिरेकेण वर्तमानत्वं लभ्यते। तेनाचार्यवश्यत्वं सूचितम्। न केवलं नम्रतापितु सर्वविधकैङ्कर्यनिर्वृत्तिसामर्थ्यमप्यपेक्षितमित्याह **पटुरिति।** तथात्वेऽपि सर्वविधकैङ्कर्यानुगुणवंशशुद्धिमाह- **कुलीनः**, सत्कुलप्रसूततया कुलाचार-प्रवणबुद्धिरिति भावः। कुलीनेष्वपि क्वचिदाचारदोषो दृश्यत इत्यत आह- **सच्चरित्र** इति। सत्प्रशस्तं चरित्रमाचारो यस्येति शिष्टाचारनिष्ठोच्यते। एतेन सद्वृत्तताऽपेक्षितोक्ता। प्रमादः सर्वं नाशयतीति शिष्यस्य दृढनिश्चयत्वमभिधत्ते- **व्रततत्पर** इति। स्वसंकल्पानुसारेण यावत्फलावाप्ति दार्ढ्येण शास्त्रोदितसाधनपरत्वमुच्यते। यथा देवे तथा गुरावित्युक्तानुसन्धानेन ज्ञानदात्राचार्यप्रणिपातपरिप्रश्नसेवादिनिरतत्वं वदति- **गुरुशुश्रूषणे शक्त** इति। एतेन पूर्णमनोयोगेन सर्वार्थसाधकाचार्यसेवनप्रीणनपरत्वं निदिश्यते- यस्माद्देवो जगन्नाथः कृत्वा मर्त्यमयीं तनुम्, मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना। तस्माद्भक्तिर्गुरौ कार्या संसारभयभीरुणेति भावना-संप्लुतशुश्रूषात्रापेक्षिता फलदेति भावः। दृश्यते च भक्तिमतामपि स्वातन्त्र्येण स्वविवेकेन सेवनम्, तादृशस्वातन्त्र्यदोषपरिहारपूर्वकाज्ञावर्तित्वमाह- **आज्ञाकारीति।** एतेनोक्तं न व्यभिचरतीति यथोक्तकारित्वं श्रौतलक्षणं परामृष्टम्। **विशुद्धात्मेत्यनेन** प्रशान्तचित्तायेत्यर्थ उक्तः, शमान्वितयेत्यर्थं प्रकाशयितुमुच्यते **जितेन्द्रिय** इति। न विलासी विषयसेवी वा गुरुसेवया परमार्थं लप्स्यत इति भावः। एतेन नियमितमनोवृत्तितया वैराग्यं सूचितम्। विकारेहेतावुपस्थिते यो न विक्रियते तादृशधीरजनगुणमाह- **अनुल्वण** इति। अक्रोध इति भावः। प्रतिकूलतायां परैः पीड्यमानस्याप्यविकृतचित्तत्वरूपमनुद्वेगकरत्वं प्रकाशितम्। अतीक्ष्णचेष्टितत्वं हि सेवायाः प्रमुखो गुणः। शिष्यतेऽसाविति कर्मव्युत्पत्त्या शासनार्हत्वप्रकाशनेनापि काङ्क्षितगुणाधानपात्रत्वं तस्य लभ्यते। गुरूपदेशात्पूर्वं भजनीयनिश्चयस्य तद्भक्तिस्वरूपस्य बोधाभावेऽपि भक्तिवान् स्यामिति देवसामान्यविषयाग्रहस्य दृष्टत्वात्- सर्वगुणसत्वेऽपि भक्तौ निष्ठाया अतितरामपेक्षितत्वादन्ते तदनिवार्यतामाह-

**भक्तिनिष्ठश्शिष्यो भवेदिति।** नियता स्थितिरेव निष्ठा, स्थिरपरिगृहीतमुपायानुष्ठानम्, भक्तावव्यहितोपाये निष्ठा यस्य, तादृशः कार्य इति। यद्वैवंगुणविशिष्टोऽपि शिष्यो फलरूपतया भक्तिनिष्ठः कार्य इति कश्चिदाचार्यधर्मोऽपि सूचितः, तत्परतासिद्धये-ऽन्यगुणसाफल्यात्तत्रैव विश्रान्तेः। इत्थं भगवत्समाश्रयणकामनया सम्प्राप्तजीवेषु शिष्य-लक्षणमनुसन्धाय सम्परीक्ष्य च संस्कारमुखेन तत्वज्ञानाधानेन च ते भगवद्भक्तौ नेयाः, नान्यथोद्देश्यसिद्धेरिति लभ्यते। यस्य मनश्शान्तमिन्द्रियजातं विषयेभ्यो निवृत्तं, यश्च स्वयमुपरतः प्रियाप्रियघटनाभिरविचलितो भवेत्, यस्य चित्तमात्मभूतपरमात्मोपलब्धये तदनुरूपसाधनेषु संलग्नं तादृशमुमुक्षोरनुरूपशिष्यत्वमिति फलितार्थः।

**परीक्ष्य शिष्यं समुपासकं गुरुर्वर्षं समभ्यर्च्य च वह्निदेवताम्।**
**चापादिभिर्हेतिवरैः सुतापितैर्दिनेसुपुण्ये नियतः समङ्कयेत्॥69॥**

**पदपरामर्शः**

संस्कारपरिगणनक्रमे समुद्दिष्टमात्रस्य संस्कारपञ्चकस्य संस्कार्यसंस्कर्त्रादि-निर्देशपूर्वकं तदाधानविधिमाविष्कर्तुं पूर्वोक्तार्थेन सङ्गमयन् प्रोक्तगुणगणसम्भृतं शिष्यं वैष्णवत्वाधानोपयुक्तमुपसन्नमवाप्याचार्यस्तद्धितैषी किं कुर्यादिति द्वाभ्यां तद्विषयकेतिकर्तव्यतामाह- **परीक्ष्येति।** अत्र समङ्कयेतत्कुर्यादुपदिशेद्दद्यादित्यादिषु लिङ्ग निदेशात्तेनाचार्यस्यापि शास्त्रवश्यत्वं संसूच्यानयैनं हरिश्रेष्ठेति भगवदुक्तार्थं विमृश्य जीवकृतभगवत्समाश्रयणस्य तदभिमतत्वं निश्चित्य संस्करणस्य भगवदाज्ञापरिपालन-धियानुष्ठेयता प्रकाशिता। आत्मकल्याणचिकीर्षादार्ढ्यनिश्चयाय वर्षं तद्वैराग्यादिकं मनोवृत्त्यानुमापिकाभिर्विधिसंलापादिचेष्टाभिः परीक्ष्येति नासंवत्सरवासिन इत्याम्नायात् सद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षेतेति तन्त्रसारोक्तेश्च। अज्ञानान्धकारनिवर्तकत्वेन प्रथितो गुरुः स्वभक्तं शिष्यं सन्तप्तभगवदायुधेन समङ्कयेदित्यन्वय-स्तत्रादावनुगुणकालमाह- **सुपुण्ये दिन** इति। श्रीविष्णुदेवताके श्रीरामनवमीश्रीसीता-नवम्यादिमाङ्गलिकतिथाविति भावः। समङ्कनात्पूर्वकृत्यमाह- **वह्निदेवतां समभ्यर्च्येति।** वेदिनिर्माणभूसंस्कारादिक्रमेण कुशकण्डिकाविध्युक्तप्रकारेण श्रीरामात्मने पावकाय नम इति वह्नेरपि भगवदात्मकत्वाद् भगवदुपासनधिया श्रौतविधिना यथायथं सर्वकर्माराध्यं

**संवित्करः**

पञ्चसंस्कारप्रदाता गुरु को चाहिये कि वह एक वर्ष तक शिष्य को अपनी सेवा में रखकर उसके मनोभाव आदि की परीक्षा करे, तदनन्तर शुभ दिन में परीक्षित शिष्य के भुजामूल को सविधि पूजित अग्नि में सुतप्त भगवदायुधप्रवर धनुर्बाण से अङ्कित करें।

........................................................पदपरामर्शः........................................................

*सम्पूज्य, तत्रोद्दीप्ताग्नौ सविधि स्वेष्टदेवतामन्त्रैर्हुत्वा तदनु प्रदीप्ताग्नौ, भगवदायुधवरौ धनुर्बाणौ प्रताप्य शिष्यबाहुमूलेऽङ्कयेदिति भावः। धनुर्बाणसिचक्रादीनामपि भगवदायुधत्वात्सर्वहेतिषु प्रशस्तैश्चापादिभिरङ्कनमत्र सूचितम्। चापादिभिरित्यत्रादिपदेन-भगवद्बाणानां सङ्ग्रहः, प्राप्यस्वरूपाभिनिवेशात्तदायुधयोरेव संस्कारहेतुतया ग्रहणौ-चित्यात्। अत्र बहुवचनमविवक्षितम्, षट्चतुर्भ्यश्चेतिवत्। द्वित्वन्त्वधिष्ठानभूतभुजमूला-नुसन्धानेनेष्टमेव। यद्वा यथावस्थितार्थविवक्षया भगवदंशस्वरूपविशेषवर्तित्वाच्चक्रादेरपि ग्रहणे न क्षतिः। चक्राद्यपेक्षया हेतिवरयोर्धनुर्बाणयोः परत्वन्तु श्रीरामशास्त्रास्त्रसङ्घस्तुतौ विवेचितचरम्। चापादिभिरित्यत्राश्रितरक्षार्थम् प्रथममादीयते गृह्यत इत्यादिः किप्रत्ययान्तः आदिर्बाणः, यद्वा आदिः प्रथमः प्रधानः करणत्वात्, अत एव मानसे महासायकचारुचापमिति प्रयोगः। तत्रोद्भूतावयवभेदविवक्षयाऽदयो बाणाः। चापश्चादयश्चेति चापादयस्तैरिति चापबाणाभ्यामिति फलितम्। यद्वाऽत्तीत्यादी अद्धातोणिनिः, बाणपर्यायः क्रियामुखेन। अत्रापि बहुत्वविवक्षया आदिनो बाणाः चापश्चादिनश्चेति चापादिनस्तैरिति व्याकरणप्रक्रिया। सुतापितैरित्यत्र सुनायुध-चिह्नाङ्कनार्हता तापस्य विवक्षिता। संस्कारकालेऽपेक्षितमाचार्यचित्तसमाधानं वदति-* ***नियतः*** *समाहितमना इति भावः। श्रौतत्वादनुपेक्षणीयस्य तापसंस्कारस्य गृहस्थविरक्त-साधारण्यात्तदधिकारिभेदं प्रकल्प्य तप्तशीतलमुद्राभेदकथनं शिष्यमोहपारवश्येन शास्त्रादेशं स्वानुकूल्येन शिथिलयतामर्वाचीनगुरूणामेवाभिमतमित्यहो कालमहिमा।*

**सहोर्ध्वपुण्ड्रं सुमृदा श्रिया तथा[1] रामादिदास्यान्वितनाम कुर्यात्।**
**मन्त्रं तथैवोपदिशेद्विधानतो मालां च दद्यात्[2] तुलसीसमुद्भवाम्॥70॥**

........................................................पदपरामर्शः........................................................

*तापसंस्कारं प्रोच्य शेषं संस्कारचतुष्टयमाह-* ***सहोर्ध्वपुण्ड्रमित्यादिना।***

----------------------------------संवित्करः----------------------------------

उसके बाद पवित्र श्वेतमृत्तिका (रामरज) एवं श्रीद्वारा शिष्य के मस्तकादि बारह अङ्गों पर विधिपूर्वक ऊर्ध्वपुण्ड्र तिलक लगावे, भगवद्दास्य का अनुसन्धान कराने वाला उसका (रामदास इत्यादि) नाम रक्खे, तदनन्तर कण्ठ में तुलसीमाला धारण कराके षडक्षर रामतारक मन्त्रराज का विधिवत् उपदेश करें।

---

[1] पा. भे.- तथोर्ध्वपुण्ड्राणि मृदाविधाय वै।

[2] पा. भे.-दद्याच्च मालाम्।

.......................................................पदपरामर्शः.......................................................

शिष्यस्य ललाटादिषु शास्त्रोक्तक्रमेण द्वादशतिलकेति प्रसिद्ध्यनुगुणं श्रिया सह सुमृदोर्ध्वपुण्ड्रं समन्त्रकं कुर्यादित्यन्वयः। **सुमृदे**त्यनेन भगवद्भागवतपादसञ्चारपरिपूत-योध्याचित्रकूटादिभगवद्धामरजस्सम्पर्कसमुज्ज्वलया मृदेति विवक्षितम्। हरिद्राचूर्ण-श्रीरेखाङ्कितमध्यस्य मूलतिलकस्वरूपस्यानादित्वेऽपि यथापरम्परं लुप्तश्रीवर्तुलश्रीशुक्ल-श्रीत्यादिभेदोऽप्यत्र यथायोग्यं समावेश्यः, अत एव **श्रियेति** निर्विशेषणमुक्तम्। केचन तु स्वसम्प्रदायानुरोधात्सुमृदेति श्रियेत्यत्र विशेषयन्ति, तन्न युक्तमुपजीव्यविरोधात्।

नामसंस्कारमाह- **रामादिदास्यान्वितनाम कुर्या**दिति। अत्र दास्यान्वितमित्यस्य दास्यभावबोधकपदान्वितमित्यर्थस्तेन दासप्रपन्नशरणाद्यन्तस्य परिग्रहः, दास्यस्य सर्वभावेष्वनुस्यूतत्वात्। रामादिदास्येत्यत्रादिपदेनावतारनाम्नां कृष्णनारायणगोविन्दजनार्दन-प्रभृतीनां समावेशं सूचयति। नामरूपलीलाधाम्नां तद्विग्रहतया राघवेन्द्ररघुवरेति-नामवदीश्वरसामान्यवाचकानां सर्वेश्वरप्रभुजगदीशप्रभृतीनां भक्तवत्सलदीनबन्धुकरुणा-सिन्धुप्रभृतिगुणस्मारकनाम्नां स्वरूपानुसन्धायकघनश्यामकमलनयनादीनां च सङ्ग्रहो भवति, अयोध्यादासहनुमद्दासेत्यादिनामदर्शनात्, तद्धामतदाश्रितानामपि तद्भावारोपेण कैङ्कर्यविषयता तस्मिंस्तज्जने भेदाभावादिति नारदसूत्रोक्तेः। यथा भगवद्राम-सम्बन्धित्वादन्ये वैष्णवसंस्कारास्तथैव षडक्षरमन्त्रराजस्यैव मन्त्रत्वेनोपदेश इत्युच्यते। सम्प्रदाये तस्यैवाभिमतत्वात्, तद्घटितत्वाद्युगलमन्त्रोपदेशस्यापि नायुक्तत्वम्। **विधानतः** शास्त्रोक्तेन विधिनेत्यर्थः सार्वविभक्तिकस्तसिरत्र तृतीयार्थे, तच्च पदं प्रतिक्रियमन्वेति। श्रद्धयार्पितमपि भगवान् तुलसीयोगं विना नाङ्गीकरोतीति भगवदर्पणलक्षणं तुलस्या सहाविच्छिन्नयोगसम्पादनाय कैङ्कर्यानुगुणशुचिताधानाय च मालासंस्कारमाह- **मालाञ्च दद्यादिति।** कैङ्कर्याधिकारसिद्धये परिधापयेदित्यर्थः। यद्यपि मालापरिधापन-पूर्वकमन्त्रोपदेशस्य सम्प्रदायसिद्धत्वादौचित्याच्च मन्त्रोपदेशात्प्राङ्माला- संस्कारकथनं युज्यते तथापि शब्दक्रमादर्थक्रमो बलीयानित्यर्थक्रमाश्रयेण विवक्षणान्न दोषः। प्रथमपादगतं **तथेति** पदं पञ्चसंस्काराणां विधानसातत्यं द्योतयति। प्रकृतपद्ये **मालाञ्च दद्या**दित्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वाद् भगवत्समक्षमुपस्थाप्य दण्डवद्भूमौ पतितस्यापराधक्षमापनार्थप्रार्थनापुरस्सरस्वीकारार्थयाच्ञादिकमाचार्येण विधेयं समुच्चीयत इति।

**एवं महान् भागवतः सुसंस्कृतो रामस्य भक्तिं परमां प्रकुर्यात्[1]।**
**महेन्द्रनीलाश्मरुचेः कृपानिधेः श्रीजानकीवल्लभरावणारेः[2]॥71॥**

..............................पदपरामर्शः..............................

*संस्कारस्य कार्यान्तरयोग्यताकरणत्वात्तद्युक्तस्य कार्यविशेषमाह-* ***संस्कृतो रामस्य परमां भक्तिं कुर्यादिति*** *तत्कर्तव्यनिर्देशः सूचितो भवतीति इत्थं पूर्वोक्त-तापादिसंस्कारैः सविधि संस्कृत इति सुसंस्कृतः शिष्यो भगवदुपासनायां लब्धाधिकारतया महान् भागवतः सम्पन्न इति संस्कारहेतुको विशेष उक्तः। भगवद्भक्तिरूपपरमधर्मनिष्ठो हि भागवतो भवति। लौकिकसम्बन्धपरित्यागेन तदीयत्व-बोधोदयेन च तत्र महिमान्वयमाह-* ***महान्*** *पूजनीय इति। महिम्नश्चरमावधिर्हि भगवान्, सर्वत्रापि तद्योगादेव महत्त्वयोग इति सूचितम्। तादृशभागवतस्येति-कर्त्तव्यतामभिधत्ते-* ***रामस्य परमां भक्तिं प्रकुर्यादिति।*** *भक्तावुपासनायां पारम्यं नामाव्यभिचारित्वम् तेन तत्त्वनिश्चयेन न केवलमनन्यदेवताकत्वमपित्वनन्य-प्रयोजनत्वमपीति प्रकाशितम्,* ***प्रकुर्यादित्यत्र*** *विधाने प्रकृष्टता शास्त्रानतिक्रमणेनेति लभ्यते। परमभजनीयतामवधारयति-* ***रामस्येति।*** *भक्त्यनुकूलतायै तच्छ्रीविग्रहानवद्य-शोभां ब्रूते-* ***महेन्द्रनीलश्मरुचेरिति*** *महेन्द्रनीलाश्मेन्द्रनीलमणिर्हि परमदीप्तिमान् कश्चिद्रत्नविशेषः, तस्य रुचिः दीप्तिरिव रुचिर्यस्य, तादृशस्य, एतेन यत्सान्निध्यादेव सकलामङ्गलं नश्यति सर्वसौभाग्यसम्पल्लभ्यते, तादृशमनोहारिसमुज्ज्वलदीप्तिमत्त्वं श्रीविग्रहस्योक्तम्। श्रीविग्रहस्यस दिव्यत्वेऽपि दीप्त्युपमानभूतस्य नीलाश्मनोऽपि अश्मत्वसुलभं नैष्ठूर्यमाशङ्क्य तत्र जडत्वप्रयुक्तकाठोर्यमपहरति-* ***कृपानिधेरिति।*** *द्युतिमन्महार्हत्वेऽपि न तस्य परदुःखाद्यसंवेद्यत्वरूपं नीरसत्वमपितु द्रवच्चित्तस्य तस्य समुच्छत्कृपापीयूषपूरपूरितमानसत्वं संसूच्य महाकारुणिकत्वमुक्तम्।*

*श्रीजानकी वल्लभा यस्य, श्रीजानक्या वल्लभ इत्युभयथा विग्रहेण तयोर्मिथोऽनन्यजीवितत्वं सूचितम्, रावयतीति रावण इति सकललोककण्टकवद-*

------------------------------संवित्करः------------------------------

**इसप्रकार वैष्णवीय पञ्चसंस्कार से संस्कृत अधिकारी शिष्य परमवैष्णव होकर नीलमणि जैसी दिव्यश्यामल कान्तिवाले कृपानिधान, रावणारि श्रीजानकीवल्लभ श्रीरामजी की ( पाठभेदपक्ष में श्रीसीता एवं श्रीलक्ष्मणजी के साथ) निरन्तर भक्ति करे।**

---

[1] पा. भे.-विदधात्वहर्निशम्।
[2] पा. भे.- श्रीजानकीलक्ष्मणसंयुतस्य वै।

पदपरामर्शः

चिरोत्पाटनीयता लभ्यते, तादृशस्यापि नायमरिरपितु स स्वयं दौरात्म्यादरिरभूद्यस्येति बहुव्रीहिणा कश्चिदर्थो ध्वन्यते। यद्यपि श्रीजानकीवल्लभश्चासौ रावणारिरिति समानाधिकरणत्वेन कर्मधारये रावणारिपदस्याल्पच्त्वाद् घित्वाच्च पूर्वनिपातः प्रसज्यते किन्तु लक्षणहेत्वोः क्रियाया इति सूत्रे लक्षणहेत्वोरिति प्रयोगदर्शनात्पूर्व-प्रयोगस्यानित्यत्वबोधनादिदमुपपद्यते। अतो यथावस्थिताकारेण सम्बन्धिशब्दप्रत्यासत्त्या श्रीजानकीवल्लभत्वादेवायं रावणारिरित्याश्रितविपद्विमोचनपाटवं सूचितं भवति। एतेनानन्याश्रितविरोधिना सह समूलोच्छेदपर्यवसायि वैरमिति ध्वन्यते। रावणारेरिति पराक्रमबोधनेन सारवत्तारूपं सत्, कृपानिधेरिति सहृदयत्वरूपं चित्त्वं, नील-श्मरुच्युपमानेन परमाह्लादजनकतयानन्दमयत्वं च निर्दिश्य तस्य सच्चिदानन्दरूपता प्रकाशितेति भावः।

**उपाधिनिर्मुक्तमनेकभेदका भक्तिः समुक्ता परमात्मसेवनम्।**
**अनन्यभावेन मुहुर्मुहुः सदा महर्षिभिस्तैः खलु तत्परत्वतः॥72॥**

पदपरामर्शः

परमां भक्तिं प्रकुर्यादिति पूर्वश्लोकोक्तार्थमनुसन्धाय सा विधातव्यत्वेनोक्ता परमभक्तिः केत्यत्र सर्वादौ महर्षिजनसम्मतं तत्स्वरूपमाह- **उपाधीति।** तैर्महर्षिभिर्मुहुर्मुहुरनेकभेदका भक्तिः समुक्ता, सा खलु भक्तिस्तत्परत्वतोऽनन्यभावेनोपाधिनिर्मुक्तं सदा परमात्म-सेवनमित्यन्वयः। **तैरिति** सर्वनाम्नाऽनेकत्वं सर्वलोकप्रसिद्धिञ्च द्योतयति। स्वस्वोत्प्रेक्षा-वशंवदतया साभिनिवेशत्वभ्रान्तन्तत्वादिव्यावृत्तये **महर्षिभिरित्युक्तम्।** तेनार्वाचीन-शङ्करादिव्यवच्छेदः। ऋषयो मन्त्रद्रष्टार इत्युक्ते वाल्मीकिव्यासादीनां तपःस्वाध्याय-निरतानां करामलकवदखिलं निरावृतं साक्षात्कुर्वतां तेषां कुतो भ्रमप्रमादादिप्रसक्तिरिति भावः। तत्त्वहितबुबोधयिषापारतन्त्र्यात्करुणया मुहुर्मुहुराख्यानं तेषां तादृशमहात्मजनसुलभं दीनजनवात्सल्यं सूचयति। **मुहुर्मुहुरित्यनेन** सर्वशास्त्राणां महार्थभूतायां भक्तौ सर्वसाधारणस्याग्रहविशेषो दृश्यते, कथन्न पुनस्तादृशां स्यादिति तत्र तेषां गाढाभिसन्धिर्द्योत्यते। महर्षिभिरनेकभेदका भक्तिः समुक्तेति यस्या एकांशेनाङ्गीकारेऽपि

संवित्करः

महर्षियों ने लौकिकसम्बन्ध एवं कामनादि मनोदोषों से मुक्त होकर अनन्यभाव से पूर्णतत्परतापूर्वक की जाने वाली परमात्मा श्रीराम के चरणारविन्द की निरन्तर सेवा को परा भक्ति कहा है, जो भाव एवं अवस्था के भेद से अनेक प्रकार की होती है।

..........................................................पदपरामर्शः..........................................................

कृतार्थतेति सूच्यते। अनेके भेदका व्यावर्तकविशेषा यस्याःसाऽनेकभेदकेति, अत्रासुप इतीत्वनिषेधः अनेके भेदा यस्या इति विग्रहे वैकल्पिके कपि इत्वं स्यादेवेति विशेषः। पूर्णकामानामपि निर्व्याजकारुण्यादेव येषां लोकहितचिकीर्षया विद्याप्रवर्तकत्वं हितानुशासकत्वात्।

तैस्तादृशैः समुक्ता भक्तिरनेकभेदका, पात्रभेदात् साधकावस्थाभेदात् साध्य-साधनादिभेदेन श्रवणादिभेदाद्वा। सम्यगुक्ता समुक्ता परमोपादेयतामाकलय्य दुरवगाहता-मपसार्य सोपपत्तिः प्रसाद्य सुललितया सुगमया सरण्या चोक्तेति भावः। सा च महर्षिभिः समुक्ता भक्तिः केत्यत्र प्रकृतिप्रत्ययार्थमनुसन्धायोच्यते- **परमात्मसेवनम्** भज्धातोः सेवार्थकत्वात्। चिदचिदोस्तदपेक्षया हीनत्वादुभयोरीशस्यैव सेव्यत्वं निश्चीयते। राम त्वं परमात्मासीति श्रुतेः। परमात्मसेवनरूपभक्तेः सकललोकशास्त्र-प्रसिद्धवैभवत्वं सूचयति- **खल्विति**। सदेत्यनेन नैरन्तर्यं प्रकाशयति, अवान्तरसेवा-व्यावृत्तये लौकिकसेव्यांन्तरव्यवच्छेदाय चाभिधत्ते- **तत्परत्वत** इति। तत्परत्वेन, अत्र तृतीयार्थे सार्वविभक्तिकस्तसिः। तदेकप्राप्यप्रापकत्वानुगुणसर्वाकारपरिपूर्णत्वबुद्ध्येत्यर्थः। वस्तुतः सर्वदेशसर्वकालसर्वावस्थोचितत्वं बोधयितुमाह- **तत्परत्वत** इति। यथोक्तं श्रीरामायणे- अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च त इति। **अनन्यभावेनेति** देवतान्तरकैङ्कर्यव्यावृत्तिः। सेवने प्रयोजनान्तरेच्छैवोपाधिः। उपाधिनिर्मुक्तं परात्म-सेवनमित्यनेन तदितरकामनाराहित्यं सूच्यते। भ्रमशून्यमेकस्मिन्नेव नियतं सेवनमिति भावः। यथोक्तं श्रीमद्भागवते- यस्त आशिष आशास्ते न स भृत्यः स वै वणिगिति। तदित्थं तदितरसकलकामनाशून्यमनन्यदेवताकं सर्वदेशसर्वकालसर्वास्थोचितं परमात्म-सेवनमेव भक्तिरिति महर्षिभिरुक्तमिति श्लोकस्य फलितार्थः। यथोक्तमागमे सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलं, हृषीकेण हृषीकेशसेवनं भक्तिरुच्यत इति।

**सा तैलधारासमनित्यसंस्मृतेः[1] सन्तानरूपेशि परानुरक्तिः।**
**भक्तिर्विवेकादिकसप्तजन्या तथा यमाद्यष्टसुबोधकाङ्गा॥73॥**

.............................................**पदपरामर्शः**.............................................

*वेदान्तवाक्यैर्विधित्सितस्योपासनस्य ध्रुवानुस्मृतिरूपत्वमुक्तं स्ववृत्तौ भगवद्बोधायनाचार्यैः। अतो ध्यानवेदनादिशब्दबोध्याया भक्तेः स्वरूपमाविष्कर्तुमुपक्रमते-* **सेति।** *भगवत्संस्मृतेर्य सन्तानः प्रवाहः, तद्रूपता नाम परम्पराप्रवाहस्य विशदतमाकारता। तत्रातिशयत्वमभ्यासनैरन्तर्येणाधीयते, इयं सन्तानरूपतैवैकताननतापदेनोच्यते। अत्र संस्मृतेः सातत्यमुच्यते-* **नित्येति** *तेनाविच्छिन्नत्वं सूच्यते, तच्च विजातीयचिन्तनाव्यवहितत्वम्। तादृशसंस्मृतिप्रवाहस्य दृष्टान्तः-* **तैलधारासमेति,** *तद्धारायामविच्छिन्नताप्रतीतेः सर्वानुभवसिद्धत्वात्। वस्तुतस्तादृशभगवत्संस्मृतिसन्तानरूपैव भक्तिरिति न, अपितु ततोऽपि जायमाना भगवद्विषयिणी परानुरक्तिर्भक्तिः भक्तेः परानुरक्तिरूपत्वात्। तादृशसंस्मृतिसन्तानाज्जातपरमानुरागरूपभक्तिः कुतो जायते? तत्र तद्धेतुजिज्ञासामुच्यते-* **सा विवेकादिसप्तकजन्येति।** *अयमर्थः श्रौतनिर्वचनानुकूल्येन भगवद्बोधायनवृत्तिलभ्यः। यथोक्तं तत्र तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निवर्चनाच्चेति। अत्र विवेकादिषु कारणत्वं व्यासज्यवृत्तिर्नितु प्रत्येकपर्याप्तम्। विवेकस्तु. जात्याश्रयनिमित्तादुष्टान्नात्कायशुद्धिः। जातिदुष्टं भवति कलञ्जगृञ्जनादि, आश्रयदुष्टं भवति पतितादिस्वामिकम्, निमित्तदुष्टं भवति केशोपहतोच्छिष्टादि। एतत्त्रिविधिदोषरहितादन्नात्कायशुद्धिर्विवेक इत्युच्यते। श्रुतिश्चात्र निर्वक्ति- आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति। विमोकश्चात्र*

-----------------------------------**संवित्करः**-----------------------------------

वस्तुतः वह परा भक्ति तैलधारा के समान अविच्छिन्न भगवत्स्मृतिप्रवाह (निरन्तर ध्यानाभ्यास के कारण प्रत्यक्षसमानाकार ज्ञान) से जन्य परमप्रीतिरूप है, जो विवेक ( दूषित अन्न से कायशुद्धि) विमोक (निष्कामता) अभ्यास, क्रिया (पञ्चमहायज्ञादि का अनुष्ठान) कल्याण (सत्यसरलता-दयादानादि) अनवसाद (शोकजन्यदीनतारूपी मनोमालिन्य का अभाव) एवं अनुद्धर्ष (उपासनादि में असन्तोष) रूपी सात साधनों से उत्पन्न होती है तथा यम-नियम-आसन- प्रत्याहार-प्राणायाम-धारणा-ध्यान एवं समाधि नामक अष्टाङ्गयोग जिसके उपकारक होते हैं।

---

[1] पा. भे.- संस्मृतिः।

........................................................पदपरामर्शः........................................................

*कामानभिष्वङ्गो, निष्कामतेत्यर्थः। अत्रार्थे श्रुतिः– उपासते पुरुषं ये ह्यकामा इति। अभ्यासः पुनः पुनरालम्बनस्य शुभाश्रयस्य संशीलनं परिशोधनमिति। अत्रार्थे श्रुतिर्ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान इति। क्रिया खलु शक्तितः पञ्चमहायज्ञाद्यनुष्ठानम्, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति श्रुतेः। सत्यार्जवदयादानाहिंसानभिध्याः कल्याणान्युच्यन्ते, सत्यं खलु भूतहितम्, वाङ्मनश्चेष्टादीनामैकरूप्यमार्जवम्, स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वं दया, लोभराहित्येन वस्तुसमर्पणं दानम्, कायेन वाचा मनसा च परपीडानिवृत्तिरहिंसा, परकृतापराधचिन्ताराहित्यमभिध्या, अत्रार्थे सत्येन लभ्यात्तपसा ह्येष आत्मा, सम्यग्ज्ञानं ब्रह्मचर्येण नित्यमित्यादिश्रुतयो निर्वचनानि। यच्च देशकालवैषम्याच्छोकवस्त्वा–द्यनुस्मृतेर्जायते तादृशमभीष्टकार्यप्रवृत्यक्षमत्वं दैन्यम्, तादृशदैन्यस्याभावोऽनवसाद उच्यते। निर्वचनं चात्र– नायमात्मा बलहीनेन लभ्य इति श्रुतिः। अनुद्धर्षस्तुष्ट्यभावः, एतैरुपायैर्यतते यस्तु विद्वानिति श्रुतेरतिसन्तोषश्चात्र विरोधीत्यर्थः। एतत्साधन–सप्तकानुष्ठानाज्जायते तादृशस्मृतिसन्तान इति भावः। भगवत्प्राप्त्युपायभूताया भक्तेः स्मृतिसन्तानाख्याया अङ्गानि योगशास्त्रे प्रथितानि यमादीनीत्याह–* ***यमाद्यष्टसु–बोधकाङ्गेति।*** *अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमः, शौचसन्तोषतपःस्वाध्यायेश्वर–प्रणिधानानि नियमः, स्थिरसुखमासनम्, यदासनं स्थिरं सुखमनुद्वेजनीयं भवति तदा तद्योगाङ्गतां भजत इति भावः। तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः, स्वस्वविषयसंप्रयोगाभावे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः, देशबन्ध–श्चित्तस्य धारणा, ध्येयस्वरूपे देशे चित्तस्य विषयान्तरपरिहारेण यत्स्थिरीकरणं सा धारणा। तत्र प्रत्ययैकतानता ध्यानम्, ध्येयस्वरूपे हि प्रत्ययस्य ज्ञानस्य तदालम्बनतयैव निरन्तरमुत्पत्तिर्ध्यानं भवति। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरित्यादिना योगसूत्रकारेण यमाद्यष्टकस्य लक्षणानि प्रस्तुतानि, एतान्येव तादृशध्रुवानुस्मृतेरङ्गानीति भावः। अत्राङ्गपदेनोपकारकमिति लभ्यते। एतेष्वनुष्ठितेषूपकारकेषु ध्रुवानुस्मृतिः सपरिकरमनुष्ठिता पुष्टा च भवतीत्याशयः। वस्तुतस्त्वीश्वरप्रणिधानेनेश्वरानुग्रहेणापि यमाद्यष्टाङ्गं सफलं भवति। समाधिसिद्धिर्योगफलं वा सुतरां लभ्यत इति केचन तदनुग्रहैकबलास्तदेकशरणा भवन्तीति भावः।*

**उदारकीर्तेः श्रवणं च कीर्तनं हरेर्मुदा संस्मरणं पदश्रितिः।**
**समर्चनं वन्दनदास्यसख्यान्यात्मार्पणं सा नवधेति गीयते॥74॥**

..........पदपरामर्शः..........

*मोक्षं प्रति कारणतया प्रथिता या भक्तिः सा परानुरक्तिरूपेत्युक्ता, तदुत्पत्तौ पुराणादौ प्रसिद्धायाः साधनभक्तेर्नवविधत्वं यदुक्तं तदत्र सनामग्राहं समुच्चीयते–* **उदारकीर्तेरिति।** *उदारा वदान्या कीर्तिर्यशोराशिरस्येति तत्कीर्तेरपि मङ्गलमयत्व–मनोज्ञत्वपापहारित्वादित्वात् तत्तुल्यत्वं सूचितम्। भगवत उदारकीर्तित्वा–द्दीनानुकम्पित्वाद्यसाधारणमहिमपौष्कल्याच्छ्रवणकीर्तनाद्यर्हता सूच्यते।* **हरेरित्यनेन** *च हरिर्हरति पापानि, हरणादेव दुःखानामित्यादिस्मृतिसिद्धमाश्रितानिष्टं प्रसह्य हरतीति विवक्षया कारुणिकत्वं संसूच्य रामाख्यमीशं हरिमिति वचनमनुसंहितम्। श्रोतव्य इति श्रुत्या विहितं रूपगुणपरिकरलीलामयशब्दानां श्रवणं प्रथममुक्तं भद्रं कर्णेभिः शृणुयाम देवा इति श्रुत्येप्सितत्वं प्रकाश्य तन्मात्रेण मङ्गलमित्युक्तसामर्थ्यं सूचितम् अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेरित्युक्तेः। यस्याञ्च श्रूयमाणायां भगवत्यखिलात्मनि, भक्तिरुत्पद्ये पुंसां शोकमोहभयापहेत्युक्तेश्च, अत्र न श्रुतायामपितु श्रूयमाणायामिति कथनाच्छ्रवणकाल एव तदवाप्त्युपक्रमो बोध्यते। श्रुतानुभावो भगवान् प्रविश्य श्रोतृव्यसनं तदन्तर्यामितया हरति, यथोक्तम्–*

*प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्।*
*धुनोति शमलं कृष्णः सलिलस्य यथा शरत्॥*

*भगवद्गुणश्रवणरसिकानान्तु तदायत्तजीवनत्वं तत्र तत्र प्रतिपाद्यते–*

*नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते।*
*पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम्॥*

*भगवत्प्रेप्सासिद्धाविदं सर्वथाऽमोघसाधनम् गुणैर्दास्यमुपागत इति श्रीरामायणोक्तेः श्रुत्वा गुणानित्युपक्रम्य त्वय्यच्युताविशति चित्तमपत्रम् इति श्रीरुक्मिण्युक्तेश्च।*

----------संवित्करः----------

**महर्षियों ने उदारकीर्ति वाले भगवान् श्रीराम की नवधा (नौ प्रकार की) भक्ति का विवेचन किया है– प्रभु का चरितश्रवण, नामगुणलीला का कीर्तन, संस्मरण, पादसेवन, पूजन, दास्य, सख्य तथा आत्मसमर्पण।**

..............................................पदपरामर्शः..............................................

अतः श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधना इति पाद्मवचनं सङ्गच्छते। सति वक्तरि श्रोतव्यं, श्रोतरि च सति कीर्तितव्यमित्युक्तेः हरेः कीर्तनमित्यपरो भक्तिभेदः। तत्तद्गुणविभवचेष्टितादिगर्भाणां तदसाधारणनामधेयानां च श्रमावधि सङ्कीर्तनमिति। जीवस्याज्ञत्वादसमर्थत्वाच्च गुणादेरपरिच्छेद्यतया य निश्शेषकीर्तनासंभवस्तथापि जिह्वा सती दादुरिकेव सूत न चोपगायत्युरुगायगाथा इति वागिन्द्रियसार्थक्याय प्रीत्या तद्गुणकथनोक्तेः। अत एव स्वरूपनित्यतया वेदः सदा गायत्येव तद्विप्रासो विपण्यव इति नित्यसूरीणां तद्गानपरत्वं प्रवाहनित्यतया ब्रह्मादितज्जातसनकादीनां तद्गुणकीर्तन-परत्ववर्णनं सङ्गच्छते। तस्माद्भारत सर्वात्मा भगवानीश्वरो हरिः, श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयमिति भागवतोक्त्या क्रमप्राप्तत्वात्तृतीयभेदतया स्मरणमुच्यते- इदमेव श्रुतिसिद्धं निदिध्यासनम्। श्रवणकीर्तनाभ्यां जातान्तःकरणशुद्धेः साधकस्य तदपरित्यागेन भगवत्स्वरूपगुणचेष्टितादिभेदाद्बहुविधं तत्स्मरणं विहितम्। श्रितिः सेवा, पादयोः श्रितिः पादसेवा, भगवद्भागवत परिचर्येत्यर्थः। रुचिशक्त्योः सत्त्वे सेवायां सादरत्वमिष्टम्। अत एव भागवते षडङ्गसेवायां साधनान्तरसमावेशेन कथनं सङ्गच्छते-

तत्तेऽर्हत्तम नमःस्तुतिकर्मपूजाः कर्मस्मृतिश्चरणयोः श्रवणं कथायाम्।
संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत।।

भगवत्सम्बन्धित्वधिया यथाशक्ति सर्वसेवाया अभिप्रेतत्वेऽपि भागवतकैङ्कर्ये फलमुखेन पर्यवसानं दृश्यते- महत्सेवां द्वारमाहुर्विमुक्तेरित्युक्तेः भगवत्सेवाया अर्चनपदेन पृथगुक्तेश्च। वैष्णवागमोक्तविधिना सर्वोपचारैर्भगवत्पूजनं समर्चनमुच्यते। यथोक्तं- गन्धैः पुष्पैः फलैर्मूलैः पत्रैर्वारिभिरेव च, नित्यं भगवतः पूजां यथासंभवमा-चरेदिति भगवदर्चनस्य नित्यत्वम्, अर्चाया वैदिकतान्त्रिकमिश्रेति त्रैविध्यं भागवतादौ निरूपितम्। वैदिकैस्तात्रिकैर्वान्यै श्रौत्रैर्वा द्विजरुत्तम स्वयं व्यक्ते तु भवने मिश्रैर्वा देवमर्चयेदित्युक्तावपि सौम्येन वैदिकेनैव देवदेवं समर्चयेदि वैदिकमन्त्राणां प्राशस्त्यमुक्तम्। सविध्यर्चनं यागः, देवतोद्देश्यकद्रव्यसमर्पणस्य यागत्वात्। आज्यस्य दैवतं विष्णुरिति नारदीयवचनेनाज्यदेवताभूतो भगवानेव। आज्यप्राधान्यादाज्योपादानं समिदन्तरोपलक्षणार्थम्। अमन्त्रकार्चनस्य प्रत्यवायजनकत्वमप्युच्यते-

सर्प दृष्ट्वा यथा कायं कम्पते च मुहुर्मुहुः।

**पदपरामर्शः**

अमन्त्रमर्चकं दृष्ट्वा तथा भीतो जनार्दनः।।

भगवतापि मद्याजी भवेति प्रवर्तना कृता। तस्यापि मन्त्रविध्यादिसापेक्षत्वेन तदनर्हस्य साधनान्तरमुच्यते **वन्दनमिति।** त्रिभिः करणैः प्रणमनमित्यर्थः, तत्र देशकालविशेष-प्रतीक्षणविलम्बाभावात्सौकर्यं सूचितं भवति। परमोपकारिणे भगवते प्रत्युपकार-सामर्थ्याभावात् वन्दनमतिरिच्य किं वान्यन्निदानं जीवस्य, को नाम तत्प्रति विनाञ्जलिमस्य कुर्यादिति भागवतोक्तेः। साधनसौकर्येऽपि न तत्फलं परिच्छिन्नम्, अविरतापराधस्याप्यनिष्टनिवर्तनमस्य फलत्वेन कथितम् बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् न हन्यादनृशंस्यार्थमपि शत्रुं परन्तपेति भगवदुक्तेः। अत एव स्वयं भगवान् सर्वसाधनरहितेभ्योऽन्ते चरमोपायतया मां नमस्कुर्वित्याह। मकारार्थो जीवः सकलविध-कैङ्कर्यनिपुण इत्युक्तेर्जीवात्मस्वरूपानुगुणकृत्यमाह- **दास्यमिति** निरुपाधिककैङ्कर्य शेषवृत्तिः सर्वावस्थोचितवृत्त्या तत्सुखसुखित्वभावनया च भगवद्दास्यमिति भावः। दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मन इत्युक्तेः भगवत्कैङ्कर्यैकरसस्य भक्तस्य तदर्थयाच्ञादर्शनाच्च। यथोक्तं श्रीरामायणे-

भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते।।

अप्रमत्तत्वादिदास्यानुगुणमर्यादापरिपालने शिथिलायमानानामुचितं साधनमुच्यते- **सख्यमिति।** प्रीतिविश्वासगोचरत्वादापदि सखेव भवति भगवान्। स हि सुहृदं सर्वभूतानामिति वक्ता सर्वविधसम्बन्धनिर्वाहकः। प्रतिज्ञातं च स्वयमेव मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चनेति। उपदिष्टञ्चानुग्रहैकविग्रहया जगज्जनन्या- तेन ते मैत्री भवतु यदि जीवितुमिच्छसीति। इदं च सख्यं सयुजा सखाया इति श्रुतिप्रतिपन्नम्। केचित्सखित्वेऽभिनिवेशिन आहुर्यद्दास्यादनन्तरं सख्यस्य कथनं प्रेमविस्रम्भभावनामयत्वा द्दास्यापेक्षयाप्युत्तमत्वापेक्षयैव। सर्वेषां भक्तिभेदानां यत्र पर्यवसानं तदाह- **आत्मनिवेदनमिति।** न केवलं देहादिक्षेत्रार्पणमपितु क्षेत्रज्ञार्पणमपीति लभ्यते- चिन्तां कुर्यान्न रक्षायै विक्रीतस्य यथा पशोः, तथार्पयन्हरौ देहं विरमेदस्य रक्षणादिति विचित्रा देहसम्पत्तिरीश्वराय निवेदितुमित्युक्तार्थोऽपि प्रकाशितः। अहमर्थो ह्यात्मा, तस्यापि समर्पणम्, यथोक्तं श्रीयामुनाचार्यैः-

वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः।

......................................................पदपरामर्शः......................................................

तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः।।

आत्मनोऽपि तच्छेषतया तस्यै समर्पणस्यौचित्यादिति भावः। अत्र न केवलं स्वत्वेनाभिनिवेशात्स्वात्मना सम्बध्यमानस्य वस्तुन एवार्पणमपितु समर्पणकर्तृत्वमपि त्वदीयं त्वदायत्तमिति तत्समर्पणमपि साम्प्रतम् राज्यं चाहं च रामस्येति श्रीभरतोक्तेः। एतेन भरसमर्पणरूपा प्रपत्तिरनुष्ठिता भवतीति बोध्यते। यद्यपि नवधा गीयमानाया भक्तेः श्रवणादीनामन्यतरेणापि पुरुषार्थसिद्धिसम्भवेऽपि चरम आत्मसमर्पणे सर्वेषां परिसमाप्तिर्गम्यते आत्मनिक्षेपस्याङ्गित्वात्।

**एकादशीत्यादिमहाव्रतानि वै कुर्याद्विधेधानि हरिप्रियाण्यथ।**
**विद्धा दशम्या यदि साऽरुणोदये स द्वादशीं तूपवसेद् विहायताम्।।75।।**

......................................................पदपरामर्शः......................................................

परमपुरुषार्थरूपमोक्षस्याव्यवहितोपायत्वेन भक्तिं निरूप्य मुमुक्षुभि-वैष्णवैर्विधेयान्तरमेकादशीप्रभृतिव्रतजातं निर्णेतुरारभते-**एकादशीति**। एकादशीत्यादि-महाव्रतानीति व्रतमात्रस्यास्तिकैः सादरं परिपाल्यत्वं किमुत महाव्रतानामिति सूच्यते। **आदि**पदेन श्रीरामनवमीप्रभृतीनां सङ्ग्रहः। शास्त्रविहितत्वं सूचयितुं लिङा निर्देशः-**कुर्यादिति**, तत्र नित्यविधित्वमाह- निश्चयार्थकेन **वा** इत्यनेन। यथा विप्रादीनां सन्ध्यावन्दनादेर्नित्यत्वं तथैकादश्यास्त्यागे प्रत्यवायश्रवणात्। पापानि निखिलान्य-न्नमायान्ति हरिवासरे, भक्तैस्तत्र न भोक्तव्यं भुक्त्वा भवति नारकीत्युक्तेः, एकादश्यामुपवसेन्न कदाचिदतिक्रमेदिति वचनाच्च। पद्मपुराणे भागवतमाहात्म्य-निरूपणावसरे हरिहरिवासयोः पृथग्भावो नेष्ट इति लभ्यते। स्मृतिग्रन्थेषु एकादशीमाहात्म्यमित्थं प्रकाशितम्-

एकादशीसमं किञ्चित्पावनं न च विद्यते।
एकादशीव्रतं भक्त्या यः करोति नरः सदा।।
स विष्णुलोकं व्रजति याति विष्णोः सरूपताम्।

-------------------------------संवित्करः-------------------------------

वैष्णवों को भगवत्प्रसन्नता के लिए एकादशी आदि महाव्रतों का अनुष्ठान अवश्य करना चाहिए। परन्तु ध्यातव्य है कि एकादशी तिथि दशमीविद्धा न हो। इसका तात्पर्य यह है कि सूर्योदय से पूर्व अरुणोदयकाल में भी यदि दशमी तिथि हो तो वैसी एकादशी वैष्णवों के लिए ग्राह्य नहीं है, उसे छोड़कर द्वादशी को व्रत कर लेना श्रेयस्कर है ।

**पदपरामर्शः**

*नित्यातिक्रमे धर्मलोपभयं प्रदर्श्येदानीं भगवत्प्रीतिजनककर्मण एव सुकृतत्व–परिभाषणादेकादशीवैमुख्यस्य प्रत्यवायत्वेन भगवत्प्राप्तिप्रतिबन्धकरूपतया च तदनुष्ठानस्य भगवत्प्रीतिहेतुतया तदभिमतत्वं निर्दिशति–* ***हरिप्रियाणीति****। भगवत्प्रसाद–जनकानीति यावत्, अत उक्तं भागवते व्रतानि चेरे हरितोषणानीति। श्रीरामपादप्रीति–समीहकवैष्णवजनैस्तद्व्रतोपोषणविषये सदा जागरूकैर्भाव्यमित्यतः परिच्छिनत्ति–* ***विवेधानीति,*** *विगतो वेधो येभ्यस्तानि वेधरहितानीति भावः। यद्येकादशी अरुणोदये दशम्या विद्धा स्यात्तदा तामेकादशीं विहाय वैष्णवो द्वादशीमुपवसेदिति वाक्यार्थः। तुशब्दः पूर्वतिथिव्यावृत्त्यर्थः। द्वादशीमुपवसेदित्यत्रोपान्वध्याङ्वस इति सूत्रेऽभुक्त्यर्थस्य नेति वने उपवसतीतिवत् वार्तिकेन कर्मसंज्ञानिषेधात्तत्र द्वादशीमित्यत्र कथं द्वितीयेति विचारे धातोरकर्मकत्वादकर्मकधातुयोगे देशः कालो भावो गन्तव्योऽध्वा कर्मसंज्ञक इति वाच्यमिति वार्तिकेन कर्मसंज्ञया द्वितीयेति गृहाण। अत्र वंशस्थछन्दः।*

**शुद्धा दशम्या सुयुतेति भेदभागेकादशी सा द्विविधा प्रबुध्यताम्।**
**वेधोऽपि बोध्यो द्विविधोऽरुणोदये सूर्योदये वा दशमीप्रवेशतः।।76।।**

**पदपरामर्शः**

*ज्योतिश्शास्त्रे तिथिविशेषतया प्रथितायाः स्मार्तवैष्णवसमवाये चोपोष्यदिनतया विदितायाश्चैकादश्याः कियन्तो भेदाः, भेदप्रयोजको विशेषः कस्तस्यापि कतिभेद इत्यादि प्रतिपादयितुमाह–* ***शुद्धेति****। सा पूर्वोक्तैकादशी शुद्धा दशम्या सुयुता चेति भेदं भजतीति भेदभाक्। अतो द्विविधास्तीति सर्वैः प्रबुध्यतां ज्ञायतामित्यर्थः। शुद्धा विद्धा चेत्येकादश्या मिथो विभाजको वेध एव। यत्र दशम्या वेधाभावः सा शुद्धा, यत्र च दशम्या वेधः सा विद्धेति भावः। कालनिबन्धनद्वेधभेदोऽप्युच्यते वेधोऽपि द्विविधो बोध्यः, प्रथमोऽरुणोदये दशमीप्रवेशेनापरश्च सूर्योदये दशमीप्रवेशात्। दशमीप्रवेशत इत्यत्र तृतीयार्थे तसिस्तस्य सार्वविभक्तिकत्वात्।*

**संवित्करः**

एकादशी शुद्धा तथा विद्धा भेद से दो प्रकार की मानी गई है। अरुणोदय तथा सूर्योदय काल में दशमी (तिथि) का प्रवेश होने से वेध भी दो प्रकार का माना गया है।

**स पञ्चपञ्चप्रमितो ह्युषो बुधैः कालस्तु षट्पञ्चमितोऽरुणोदयः।**
**प्रातस्तु सप्तेषुमितो निगद्यते सूर्योदयः स्यात्तु ततः परं तथा॥77॥**

पदपरामर्शः

*या चैकादशी वेधरहितत्वादुपोष्यत्वेन वक्ष्यते, तस्याः स्वरूपज्ञानं वेधज्ञानाधीनं, वेधज्ञानञ्चोषःकालादिप्रमाणज्ञानाधीनमिति तत्प्रमाणबोधनाय श्लोकमवतारयति-* ***स पञ्चपञ्चेति।*** *अयं भावः-अहोरात्रः सूर्योदयद्वयपरिच्छिन्नत्रिंशन्मुहूर्तात्मकः षष्टिदण्ड-प्रमितः कालो भवति। तत्र पञ्चपञ्चाशद्दण्डेष्वतीतेषु यः षट्पञ्चाशत्तमदण्डात्मकः कालः स उषःकालो भवति। तस्मिन् दण्डे व्यतीते यश्चतुर्दण्डात्मकालोऽवशिष्यते सोऽरुणोदयकालः, सप्तपञ्चाशत्तमदण्डेऽतिक्रान्ते यो दण्डत्रयात्मककालश्शिष्यते स प्रत्यूषकालस्ततोऽर्धसूर्योदयानन्तरं शिष्टः सर्वोऽपि कालः सूर्योदयकालः प्रोच्यते। यथोक्तं ज्योतिर्विद्भिः-*

*पञ्चपञ्च उषःकालः षट्पञ्च अरुणोदयः।*
*सप्तपञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृत इति॥*

*अत्र निगद्यत इति कर्मक्रियायास्त्रिषु पादेष्वन्वयः। पञ्चपञ्चप्रमित इत्यादी-नामुद्देश्यत्वम् उषः अरुणोदयः प्रात इत्येतेषां सञ्ज्ञात्वाद्विधेयत्वं ज्ञेयम्। बाणवाचकेषुशब्दः पञ्चसङ्ख्यापरः, तेन सप्तेषुमित इत्यस्य सप्तपञ्चमित इत्यर्थः।*

संवित्करः

एक अहोरात्र (दिन एवं रात) में 60 दण्डात्मक काल होता है, जिसमें पचपनवें दण्डात्मक काल को उषाकाल, छप्पनवें को अरुणोदय काल, सन्तावनवें को प्रातः काल तथा इसके बाद के काल को सूर्योदय काल कहा गया है।

**घटीचतुष्कं ह्यरुणोदयाभिधः प्रातर्विमृष्टः समयो महर्षिभिः[1]।**
**तथाऽत्र वेधप्रभृतेर्विपश्चितः प्राहुर्विभागान् चतुरो विवेकतः॥78॥**

पदपरामर्शः

*अरुणोदयकालत्वेन घटीचतुष्टयात्मको यः कालो नियतस्तत्रैव चत्वारो वेधा भवन्तीति बोधयितुमाह-* ***घटीचतुष्कम्*** *इति। चतसृणां घटीनां समुदायो घटीचतुष्कम्। कालविमर्शे प्रामाण्यं दर्शयितुं* ***महर्षिभिरित्युक्तम्,*** *न हि तथाविधा मुधाऽचरन्ति।*

संवित्करः

कालविद् महर्षियों द्वारा रात्रिशेष के चार दण्डात्मक काल को अरुणोदय काल कहा गया है। इसीप्रकार अरुणोदय एवं सूर्योदय वेध को चार प्रकार का कहा गया है।

[1] पा. भे.- प्रातःचतस्रो घट्योऽरुणोदयो विनिश्चयः कालविमर्षिभिः कृतः।

..........पदपरामर्शः..........

*कालगतविशेषन्ते प्रेक्षितुमर्हन्ति ऋतम्भरप्रज्ञात्वात्। तादृशैः प्रातर्घटीचतुष्क-मरुणोदयनामा समयो निर्धारितस्तत्र विपश्चितो वेधप्रभृतेर्विवेकतश्चतुरो विभागान् प्राहुरित्यन्वयः। विपश्चितः कालरहस्यविदः। विवेकतो विवेकेनेति तृतीयायां सार्वविभक्तिकस्तसिः।*

**घटीत्रयं सार्द्धमथारुणोदये वेधोऽतिवेधः कथितो घटीद्वयम्[1]।**
**रविप्रभासस्य तथोदितेऽर्द्धके सूर्ये महावेध इतीर्यते बुधैः॥79॥**

..........पदपरामर्शः..........

*अरुणोदये निर्दिष्टानां चतुर्ण्णां वेधानामपि घटीप्रमाणेन नामग्राहं विभाजनमाह-**घटीत्रयमिति**। रविप्रभासस्य सूर्यप्रकाशस्य दर्शनात्प्राक् सार्ध घटीत्रयम-रुणोदयवेधः, तत्र सूर्यप्रकाशदर्शनात्पूर्व यद् घटीद्वयं स दण्डद्वयात्मककालोऽतिवेधः, रविप्रभासस्य दर्शनादनन्तरमर्धे सूर्य उदिते महावेध इति बुधैः **कालवेर्तृभिरीर्यते**।*

----------संवित्करः----------

**महर्षियों ने सूर्यप्रभा के दर्शन से पूर्व साढे तीन दण्डात्मककाल के वेध को अरुणोदयवेध बताया है। दो दण्ड पूर्व के समय में जो वेध है, उसे अतिवेध बताया गया है,। सूर्यप्रभा के दर्शन से अर्धसूर्य उदित होने तक जो अर्धदण्डात्मक काल है, उसमें जो वेध है, उसे महावेध बताया गया है।**

**योगस्तुरीयस्तु दिवाकरोदये तेऽर्वाक् सुदोषातिशयार्थबोधकाः।**
**सर्वेऽपि वेधा मुनिभिर्विनिश्चिता निर्णेतृभिस्तस्य तु तत्त्वदर्शिभिः॥80॥**

..........पदपरामर्शः..........

*इत्थमत्र वेधत्रयं बोधितम् चतुर्थवेधं निर्धाय तेषां दोषावहत्वं प्रतिपादयति-**योगस्तुरीयस्त्विति**। पूर्णसूर्योदये सति यो बेध स तुरीयश्चतुर्थो योगवेध इतीर्यत इति पूर्वश्लोकेन परामर्शः। पूर्वपूर्वापेक्षया दोषातिशयत्वस्य बोधका इमे सर्वेऽपि वेधास्तत्त्वदर्शिभिर्निर्णेतृभिर्विनिश्चिता इत्याशयः। ये च कालतत्त्वं यथावत्साक्षात्कुर्वन्ति, ते निर्णेतुमर्हन्ति, तादृशैश्चत्वारोऽपि वेधा दोषातिशयत्वबोधनाय इदमेतावदित्या-कारेणावधारिता इति। अरुणोदय विद्धोऽयं वासदोषः पाद्म इत्थं वर्णितः-*

*अरुणोदयकाले तु वेधं दृष्ट्वा चतुर्विधम्।*
*मद्दिनं ये प्रकुर्वन्ति यावदाहूतनारकाः॥*

----------संवित्करः----------

**सूर्योदय के बाद होनेवाले दशमीतिथि को तुरीययोग कहा जाता है। वस्तुतः इससे पूर्वोक्तवेध अतिशयार्थ के बोधक हैं। इस प्रकार के वेध तत्वदर्शी कालनिर्णायक मुनियों के द्वारा ही निश्चित किये गये हैं।**

---

[1] पा. भे.- द्विघटिस्तु दर्शनात्।

**पूर्णेति सूर्योदयकालतः सा या प्राङ्मुहूर्तद्वयसंयुता च।**
**अन्या तु विद्धा परिकीर्तिता बुधै[1]रेकादशी सा त्रिविधापि शुद्धा॥81॥**
**एका तु द्वादशीमात्राधिका ज्ञेयोभयात्मिका।**
**द्वितीया च तृतीया तु तथैवानुभयात्मिका॥82॥**
**तत्राद्या तु परैवास्ति ग्राह्या विष्णुपरायणैः।**
**शुद्धाप्येकादाशी हेया परतो द्वादशी यदि॥83॥**
**उपोष्य द्वादशीं शुद्धां तस्यामेव च पारणम्।**
**उभयोरधिकत्वे तु परोपोष्या विचक्षणैः॥84॥**

**..............................................पदपरामर्शः..............................................**

*इत्थं कालवेधादिविचारात्परमेकादश्या उपोष्यानुपोष्यत्वनिश्चयाय शुद्धाविद्धेति नाम्नाऽवान्तरभेदमाह-* ***पूर्णेति।*** *या सूर्योदयकालतः प्राङ् मुहूर्तद्वयसंयुता सैकादशी पूर्णतया शुद्धेत्युवासयोग्या, या च ततोऽन्या तस्मिन् कालेऽपि दशम्यातिक्रान्ता, सा दशम्या विद्धतया विद्धेति बुधैः कालज्ञैः कथिता। यदि सूर्योदयात्प्रागेव चतुर्दण्डात्मक-कालपूर्वमेवैकादशी प्रविशति चेत्सा शुद्धोपवासार्थं ग्राह्याऽन्यथा दशम्या विद्धेति मत्वा हेयतया तत्र नोपोष्येति भावः। यथोक्तं भविष्यपुराणे-*

*आदित्योदयवेलायां प्राङ्मुहूर्तद्वयान्विता।*
*एकादशी च सम्पूर्णा विद्धान्या परिकीर्तिता॥*

**------------------------------संवित्करः------------------------------**

**सूर्योदय काल से पूर्व के चार दण्ड (दो मुहूर्त) से युक्त जो एकादशी है वह पूर्णा (शुद्धा) तथा उपवासयोग्य मानी गई है। जो एकादशी, दशमीविद्धा है, वह वैष्णवों द्वारा त्याज्य है। इसी प्रकार शुद्धा (वेधरहित) एकादशी भी तीन प्रकार की होती है। प्रथम एकादशी तो वह है, जिसमें द्वादशी तिथि का काल अधिक हो। दूसरी एकादशी वह है, जिसमें उपर्युक्त दोनों तिथियों का काल अधिक हो। तथा तीसरी एकादशी वह है, जिसमें दोनों तिथियों का काल अत्यन्त न्यून हो। वैष्णवों के द्वारा प्रथम प्रकारवाली एकादशी (जिसमें द्वादशी का काल अधिक हो ) में ही उपवास रखकर चाहिए। यदि द्वादशी का काल आगामी तिथि तक हो, तो वह शुद्धा एकादशी भी त्याज्य है। ऐसी स्थिति में द्वादशी को उपवास करके द्वितीय द्वादशी में ही पारण करना चाहिए। दोनों की अधिकता होने पर द्वितीय एकादशी में ही उपवास करना चाहिए।**

---

[1] पा. भे.- ज्ञैः।

.......................................................पदपरामर्शः.......................................................

या च वेधरहितत्वेन शुद्धैकादशी प्रोक्ता सापि त्रैविध्यमापन्नेति वक्ष्यमाणश्लोकेन निर्णीयते- एवं शुद्धाया अपि त्रैविध्यं निरूपयति- **एकेति।** यत्र द्वादश्या मात्रा अधिका भवेत्तादृश्येकादशी प्रथमा, यत्रैकादशीद्वादश्योरुभयोरप्याधिक्यं सोभयात्मिका, यस्याञ्च एकादश्यां द्वादश्याश्च स्वल्पता स्यात्सानुभयात्मिकेति विवेकः। अरुणोदयवेधरहिता शुद्धापि त्रिविधा-

(क) यत्रैकादश्याः क्षयः परञ्च द्वादशी तिथिरधिका, तत्र द्वादशीमात्राधिक्यवत्यां द्वादश्यामेवोपवासः कार्यः।

(ख) यत्रैकादश्यधिका द्वादश्याः क्षयो न सा उभयाधिक्यवती।

(ग) यत्रोभयोस्तिथ्योर्मध्ये न काप्यधिका न च कस्या अपि क्षयः, सा अनुभयाधिक्यवती।

तत्र या प्रथमा, यत्र द्वादश्या मात्राधिक्यं कथितं, सैव वैष्णवैरुपवासार्थं ग्राह्या यदि द्वादशी परदिनमतिक्रांम्यति, तदा शुद्धाप्येकादशी त्याज्यैव। तदा शुद्धां द्वादशीमुपोष्य तस्यामेव पारणं कुर्यात्। उभयोराधिक्ये द्वितीयैवोपोष्येति सङ्क्षेपः। यथोक्तं भागवतादितन्त्रे-

सम्पूर्णैकादशी त्याज्या परतो द्वादशी यदि।
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्।।

**उन्मीलिनी वञ्जुलिनी सुपुण्याः सा त्रिस्पृशाऽथो खलु पक्षवर्धिनी।**
**जया तथाष्टौ विजया जयन्ती द्वादश्य एता इति पापनाशनी।।85।।**

.......................................................पदपरामर्शः.......................................................

एकादशीनिश्चयानन्तरं पारणाविषये द्वादश्या अष्टविधत्वनिरूपणमुखेनोपयुक्तां तिथिं निश्चिनोति-उन्मीलिनी-वञ्जुलिनी-त्रिस्पृशा पक्षवर्धिनी जया विजया जयन्ती पापनाशिनी चेत्यष्टौ द्वादश्यो भवन्ति। एताः सर्वाः सुपुण्या इति श्लोकाशयः। ब्रह्मवैवर्तेऽष्टमहाद्वादशीनां विशेषतो निरूपणं लभ्यते- तत्र सर्वासामेव सर्वपापहरत्वं महापुण्यत्वञ्चोक्तम्।

(क) शुद्धाधिकैकादशीयुक्ता द्वादशी-उन्मीलिनी।

-------------------------------संवित्करः-------------------------------

इसी प्रकार द्वादशी के भी आठ प्रकार बतलाये गये हैं- उन्मीलिनी, वञ्जुलिनी त्रिस्पृशा, पक्षवर्द्धिनी जया, विजया, जयन्ती तथा पापनाशिनी। (यह भेद पुराणों में वर्णित है।)

पदपरामर्शः

*(ख) यत्र द्वादश्येव शुद्धा परञ्चाधिका सा वञ्जुलिनी।*

*(ग) यत्र सूर्योदय एकादशी, द्वादश्याः क्षयो द्वितीयसूर्योदये च त्रयोदशी सा त्रिस्पृशा तिथित्रयस्पर्शात्।*

*(घ) यत्रामायाः पूर्णिमाया वा दिनवृद्धिः (अनयोर्मध्ये काप्येकाधिका) सा पक्षवर्धिनी।*

*(ङ) पुष्यनक्षत्रयुता द्वादशी जया।*

*(च) श्रवणयुता द्वादशी, विजया।*

*(छ) पुनर्वसुयुता द्वादशी, जयन्ती।*

*(ज) रोहिणीयुता द्वादशी पापनाशिनी।*

*अष्टासु चतस्रस्तिथियोगेन चतस्रश्चापरा नक्षत्रयोगाद् भवन्तीत्याशयः।*

**आषाढभाद्रोर्जसितेषु संगता मैत्रश्रवोऽन्त्यादिगतद्व्युपान्त्यकैः।**
**चेद् द्वादशी तत्र न पारणं बुधः पादैः प्रकुर्याद् व्रतवृन्दहारिणी॥86॥**

पदपरामर्शः

*इदानीं तादृशीं द्वादशीं वक्ति, यस्यां पारणं निषिद्धमिति- आषाढभाद्रकार्तिक-मासानां शक्लद्वादशी यदि यथासङ्ख्यमनुराधाश्रवणरेवतीनक्षत्रगतप्रथमद्वितीयतृतीयपादैः संयुक्ता भवति, तदा तादृशद्वादश्यां पण्डितो व्रतपारणं न कुर्यात्तत्र निषेधहेतुमाह-* ***व्रतवृन्दहारिणीति।*** *तस्यां पारणे व्रतसमूहजन्यपुण्यमपि हतं भवतीति भावः। सा हि कादाचित्की द्वादशी हरिवासरयोग्यत्वाद्यथाशक्यमुपोष्या।*

संवित्करः

यदि आषाढ़ भाद्रपद तथा कार्तिक मास के शुक्ल पक्ष की द्वादशी तिथि क्रमानुसार अनुराधा, श्रवण तथा रेवती नक्षत्र के प्रथम द्वितीय एवं तृतीय चरणों से विद्ध हो, तब एकादशी व्रत की पारणा द्वादशी तिथि में नहीं करनी चाहिए। ऐसा नहीं करने से अनेकव्रतों से जन्य पुण्यों का नाश होता है।

**मासे मधौ या नवमी सुयुक्ता शुक्लाऽदितीशेन शुभेन भेन।**
**कर्के महापुण्यतमा सुलग्ने जातोऽत्र रामः स्वयमेव विष्णुः॥87॥**

पदपरामर्शः

*उपवासपारणायोग्यायोग्यतिथिशोधनान्तरं श्रीरामनवमीव्रतं निर्णयति-* **मासे**

संवित्करः

श्रीअयोध्याजी में चैत्रमास के शुक्लपक्ष की, पुनर्वसु नक्षत्र एवं कर्क लग्न से युक्त नवमीतिथि को मध्याह्न काल में स्वयं महाविष्णुस्वरूप भगवान् श्रीरामजी का प्राकट्य श्रीकौसल्याजी के यहाँ हुआ।

..........................................पदपरामर्शः..........................................

**मधाविति**। अदितिरीशा स्वामिनी यस्य तेनादितीशेनादितिदेवताकेन पुनर्वसुनामकेन शुभेन भेन नक्षत्रेण सुयुक्ता मधौ चैत्रमासे या शुक्लपक्षीया नवमी, अत्रैव कर्काख्ये सुलग्ने स्वयमेव विष्णू रामो जातः, सा महापुण्यतमेति यत्तदोर्नित्यसम्बन्धात् तस्यामुपवासादिकं करणीयमिति प्रसङ्गतो लभ्यते। मासं विशिनष्टि– **मधौ चैत्र** इत्यर्थः नाम्नैव स्वादुतमत्वं निसर्गपुष्टिदत्वं च ध्वन्यते। सुयुक्तेत्यनेन सर्व–कल्याणकरत्वं संसूच्य योगस्य कादाचित्कत्वात्सुयोग उक्तः। शुक्लपदेन ज्योतिर्मयत्वं प्रोक्तम्, कर्के सुलग्ने, राश्युदये पुनर्वसुनक्षत्रस्य कर्कराशित्वाच्च तत्रेन्दुः स्थित इति गम्यते। न केवलं सर्वमाङ्गलिकदुर्लभसंयोगादेवास्य महापुण्यतमत्वमपितु यत्काला–धिकरणे भगवद्रामचन्द्रावतरणमभूदिति दिव्याविर्भावावधिसम्पर्कगौरवसमुज्ज्वलत्वमाह– **जातोऽत्र रामः स्वयमेव विष्णु**रिति। तत्कालस्य महिमा कथं कथ्यतां, यस्य स्वावतरणावधित्वेन भगवतैव वरणं कृतमिति भावः। पित्राज्ञापालनाश्रितसंरक्षणा–दिधर्मनिष्ठया लोके सर्वजनप्रसिद्धस्य श्रीरामस्याचिन्त्यमैश्वर्यं निर्दिशन्नाह– **स्वयवमेव विष्णु**रिति। केचित्तु वेदसंहितासु प्रथितप्रभावो विष्णुः स्वयमेव रामो जात इत्युक्त्या विष्णुरेव रामात्मनाविर्भूत इत्याशेरते, अजायमानो बहुधा विजायत इति श्रुत्यर्थो दर्शितः। नात्र विष्णुपदं चतुर्भुजस्वरूपे नियतं वेवेष्टि व्याप्नोतीति व्यापकत्वसूचनेनाकाशव–त्सर्वगतश्च नित्य इतिश्रुत्यर्थसंवादेन च सर्वगतोऽपि विष्णुर्जात इति विरुद्धार्थ–निर्देशाद्विस्मयः प्रकाशितः। स्वयमेव परिपूर्णस्वरूप एवावतीर्णो नत्वंशत इति रामपदेनासौ परं ब्रह्माभिधीयत इति रामतापनीये तस्य साक्षाद्ब्रह्मतोक्तेः। अजत्वाव्ययत्व सर्वेश्वरत्वादिकपारमेश्वरस्वभावमपरिहायावतरतो नात्र लेशतोऽप्यैश्वर्ये तारतम्यमिति निर्दिष्टम्, तेनांशांशिभावो निरस्तः। विष्णुरेव रामो जात इत्यत्रैवकारेण स एवायमितिवत्तत्तेदन्ताबोधात्प्रत्यभिज्ञया तात्त्विकोऽभेदो व्यञ्जितः। स्वयञ्जात इत्यनेन सर्वनियामकस्य जीववत् कर्माधीनजन्मनिषेधात्तदाविर्भावस्याप्राकृतत्वं सूच्यते, जन्म कर्म च मे दिव्यमिति भगवदुक्तेः। साधुपरित्राणदुष्टविनाशधर्मस्थापनानां महाप्रयोजनत्वेऽपि सौशील्यातिरेकाद् मुनीन्द्रादेः शुद्धमनसापि दुर्ग्रहोऽस्मादृशानां नयनविषयोऽभूत् । भक्तस्य आराध्याकारप्रदर्शनेन ध्यानार्थं चेष्टितावलोकालापादिदानेन कृतार्थयितुं जात इति भावः।

**तामष्टमीवेधयुतां विहाय व्रतोत्सवं तत्र करोतु भक्तः[1]।**
**असङ्ख्यसूर्यग्रहतोऽधिका वै या केवला सा नवमीत्युपोष्या॥88॥**

..........पदपरामर्शः..........

*एकादशीव्रतवदत्रापि ग्राह्याग्राह्यत्वावधारणाय व्रतोत्सवोपयुक्तां श्रीरामनवमीं शोधयति- **तामष्टमीति।** भक्तिरस्यास्तीति मत्वर्थीयेनाचा निष्पन्नभक्तशब्दो भक्तिपरमाह। श्रीरामे भक्तिमान् अष्टमीवेधयुतां नवमीं विहाय पुनर्वसुनक्षत्ररहितामपि व्रतोत्सवानुष्ठानायाङ्गीकुर्यात्। यदि मध्याह्नव्यापिन्यां नवम्यां पुनर्वसुनक्षत्रयोगः स्यात्तदातु सा परमोत्कृष्टैव, नक्षत्राराहित्येऽपि नवम्याः प्राशस्त्यातिशयादसाधारणपुण्यफलत्वं स्मर्यते। अत उच्यते- **असङ्ख्यसूर्यग्रहतोऽधिकेति।** सूर्यग्रहणेभ्योऽप्यस्या अधिकफलप्रदत्वात्। तिथिप्राधान्यात्तत्रैव नक्षत्रसमावेशात्तन्महिमा, यथोक्तं-*

*तिथिश्शरीरं देवस्य तिथौ नक्षत्रमाश्रितम्।*
*तस्मात्तिथिं प्रशंसन्ति न नक्षत्रं कदाचन॥*

***तत्र भक्तो व्रतोत्सवं कुर्यादिति** शास्त्रादेशसहकृत आचार्यादेशोऽपि गम्यते, स्ववाक्ये लिङर्थकलोटः प्रयोगात्। व्रतसहितो व्रतप्रधानो व्रतनिमित्तको वोत्सवो व्रतोत्सवस्तं करोत्विति भावः। वै निश्चये निपात इति कर्त्तव्यतायां दाढ्र्यं सूचयति- **वा** इति।*

----------संवित्करः----------

वैष्णवजन, अष्टमी वेध रहित श्रीरामनवमी के दिन व्रतोपवास करते हैं तो उन्हें असंख्य सूर्यग्रहणजन्यपुण्यफल प्राप्त होता है। उपर्युक्त नक्षत्रादि के अभाव में भी श्रीरामनवमी का व्रत अवश्य करना चाहिए । वैष्णवजन, अष्टमी वेध रहित श्रीरामनवमी के दिन व्रतोपवास करते हैं तो उन्हें असंख्य सूर्यग्रहणजन्यपुण्यफल प्राप्त होता है। उपर्युक्त नक्षत्रादि के अभाव में भी श्रीरामनवमी का व्रत अवश्य करना चाहिए ।

**अत्र प्रकुर्वीत मुदा व्रतोत्सवं रामार्चनं जागरणं महाफलम्।**
**अनेकजन्मार्जितपापनाशनं श्रीरामकीर्तेः[2] श्रवणं च कीर्तनम्॥89॥**

..........पदपरामर्शः..........

*न केवलमुपवासमात्रेणानुष्ठेयापितु तत्साङ्गतासिद्ध्यर्थमिष्टाविर्भावपुण्यावसरं*

----------संवित्करः----------

श्रीरामनवमी के दिन मुदितमन से किये गये, श्रीरामार्चन, रात्रिजागरण आदि सत्कर्म महाफल प्रदान करते हैं। वैष्णवों को एकादशी में उपवास के अतिरिक्त सकलपापनाशिनी श्रीरामकथा का श्रवण तथा भगवन्नामगुणों का कीर्तन अवश्य करना चाहिये।

---

[1] पा. भे.- तु वैष्णवश्चरेत्।

[2] पा. भे.- रामस्य कीर्तेः।

.........................................................पदपरामर्शः.........................................................

मत्वोत्सवपूजनजागरणकीर्तनतद्गुणश्रवणादिकमपि सहैवानुविधेयमित्याशयेनोपदिशति- **अत्रेति।** मुदा चित्तसमुन्नत्या हर्षप्रकर्षेणाखिलामपि पुण्यतिथिमतिवाहयेत्तत्रातिवाहन-साधनमाह- **व्रतोत्सवं रामार्चनं जागरणं श्रीरामकीर्तिश्रवणं तत्कीर्तनञ्च मुदा प्रकुर्वीतेति।** तत्र फलप्रदर्शनेन प्रवर्तयति- **अनेकजन्मार्जितपापनाशनमिति।** अनेक-जन्मसु समुपार्जितपापानां दुष्कृतानां तत्क्षणनाशादनिष्टनिवारकत्वं संसूच्येष्ट-प्रापकत्वमप्यभिधत्ते- **महाफलमिति।** भगवत्सायुज्यप्रदमिति भावः। अर्चनादौ कालनियमात्कथमहोरात्रव्यापित्वमुत्सवस्य स्यादित्यत आह- **श्रीरामकीर्तेः श्रवणञ्च कीर्तनमिति** तयोः कालनियमाभावात्। श्रवणस्यापि वक्तृसापेक्षतया तदभावे कीर्तनस्यानुष्ठेयता तत्र स्वातिरिक्तानपेक्षितत्वात्।

इत्थमनेकजन्मार्जितपापनाशनं महाफलमिति च प्रतिसाधनमन्वेति। यथोक्तम्-

अस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः।<br>
यत्किञ्चित्क्रियते कर्म तदक्षयकरं स्मृतम्।।<br>
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम्।<br>
तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः।।<br>
श्रीरामनवमी नाम पुण्यात्पुण्यतमव्रतम्।<br>
यज्ञदानतपांस्यस्य तीर्थस्नानादिकाः क्रियाः।।<br>
न रामनवमी नाम व्रतस्यैककलासमाः।<br>
य इदं कुरुते भक्त्या श्रीरामनवमीव्रतम्।।<br>
सर्वपापप्रमुक्तश्च अन्ते ब्रह्मत्वमाप्नुयात्।

**पुष्यान्वितायां तु कुजे नवम्यां श्रीमाधवे मासि सिते हलेन।**<br>
**कृष्टा क्षितिः श्रीजनकेन तस्याः सीताऽविरासीद् व्रतमत्र कुर्यात्।।90।।**

.........................................................पदपरामर्शः.........................................................

श्रीरामनवमीव्रतानुष्ठानकालविधिविवेचनात्परं नित्यसन्निहितत्वाच्छ्रीसीतानवमी निर्णयार्थमुपक्रमते- **पुष्यान्वितायामिति।** श्रीजनकेन क्षितिः कृष्टा, तस्याः सीता-

-----------------------------संवित्करः-----------------------------

**वैशाख मास के शुक्लपक्ष की पुष्यनक्षत्रयुक्त नवमीतिथि, में मंगलवार को विदेहराज श्रीजनकजी के द्वारा पूजनपूर्वक हलकर्षण के समय पृथिवी से श्रीसीताजी का प्राकट्य हुआ। अतः इस पावन तिथि में भक्तों को उपवास के साथ सोल्लास मङ्गल उत्सव मनाना चाहिए।**

.................................................पदपरामर्शः.................................................

विरासीत्, अत्र व्रतं कुर्यादिति वाक्यत्रयम्। क्षितिकर्षणकाल एवाविर्भावकाल इत्यनुसन्धाय व्रतादिविधानाय प्राकट्यकालमाह- **श्रीमाधवे मासि** वैशाखमास इत्यर्थः। मधुमासे भगवदवतारं विचार्य तन्नामाभिनिवेशेन माधवे चेयमवतीर्णेति मधुमाधवयोरिव कश्चिद्विलक्षण एव प्रीतियोगो द्योत्यते। श्रिया स्वजन्मयोगेन समादृतत्वाच्छ्रीयोगोऽप्यत्रोपपद्यते। सिते प्रकाशमये शुक्लपक्षे पुष्यान्वितायां नवम्यां तिथाविति। नवेति प्रकृत्यैव पूर्णत्वबोधिका सङ्ख्या, तत्रापि पूरणार्थेनाटा नवमी, तत्रापि पुष्यान्वयः, यस्य पुष्यन्त्यस्मिन्नर्था इति सर्वार्थसिद्धिकरत्वन्तु नाम्नैव लभ्यते, तस्यापि प्रसह्यातिगाढसंश्लेष इत्यन्वितपदार्थद्योत्यः। तत्रापि दिवसमाङ्गल्यमभिधत्ते- **कुजे मङ्गल**वासरे। कोः पृथिव्या जायत इति कुजे सोदरस्नेहात्तन्नामकदिवस आविर्भाव ध्वन्यते। अवतारकालस्यानवद्यत्वमुक्त्वावतारकथां स्मरति- **श्रीजनकेन हलेन क्षितिः** कृष्टेति। जनकेन तथाविधज्ञानिनापि श्रौतयागानुष्ठानक्रमेऽग्निचयने द्वाभ्यामृषभेण कृषतीति श्रुत्यादेशमनुपालयता क्षितिः कृष्टेति क्रियावानेष ब्रह्मविदां वरिष्ठ इति श्रुत्यर्थः प्रकाशितः। क्षियति वसत्यस्यामिति व्युत्पत्या सर्वावासभूतेत्यर्थबोधनेन दिव्ये स्वोत्सङ्गे श्रीजानकीधारणयोग्यता सूचिता। श्रीजनकेनेति श्रियोऽपि जनकस्य नाम कथङ्कारं श्रिया योगं विनोच्चार्येत इत्यानुगुण्यं द्योत्यते। तैन सविधि कृष्टाया देवयजनवसुन्धरायाः सीताविरासीदित्यनेनोत्पत्तिपरिपूतत्वेन सहायोनिजत्वमूलमप्राकृतत्वं सूचितम्। अत्रापि पूर्ववदेव जीववत्कर्माधीनजन्मादि-व्यावृत्त्या निसर्गकारुण्यादेवाविर्भावो लब्धः। सिनोति बध्नाति पातिव्रत्यादिप्रयुक्तप्रीत्या भगवन्तं वशीकरोति या सा सीतेति सीते वन्दामहे त्वेति श्रुतिसिद्धं नामानुसन्दधाति। तादृश्याः श्रीसम्प्रदायप्रवर्तिकायास्तन्नवमीव्रतमुपवासोत्सवादिना नूनं परिपालयेदिति शास्त्रादेशं स्मरति- **व्रतमत्र कुर्यादिति।** अत्रास्मिन्नेव दिन इत्युक्त्वा तुल्यन्यायाद्द्वेधादिविचारस्य कर्तव्यतां निर्दिशति। भविष्यपुराणे गोतममार्कण्डेयसंवादे श्रीजानकीनवमीव्रतविधिः सविस्तरं वर्ण्यते यथोक्तं तत्र-

अष्टम्या यदि विद्धा स्यान्नवमी माधवे सिते।<br>
कुर्यान्नेदं व्रतं तस्यां कृतञ्चेन्न्यूनता भवेत्।।<br>
मध्याह्नव्यापिनी ग्राह्या व्रतेऽस्मिन्नवमी तिथिः।<br>
स्तुत्वेत्थं जानकीदेवीं गीतवाद्यादिभिर्व्रती।<br>
रात्रौ जागरणैः सर्वां तां रात्रिमपवाहयेत्।।

**स्वात्यां कुजे शैवतिथौ तु कार्तिके कृष्णोऽञ्जनागर्भत एव मेषके।**
**श्रीमान् कपीट[1] प्रादुरभूत् परन्तपो व्रतादिना तत्र तदुत्सवं चरेत्।।91।।**

......................................................पदपरामर्शः......................................................

*श्रीसीतारामयोरवतारलक्षणनवमीनिश्चयानन्तरं तत्पादारविन्दमकरन्दास्वादनभृङ्गायित मानसस्य श्रीमन्मारुतेर्नित्यासन्नतया स्मरणौचित्याच्छ्रीसम्प्रदायाचार्यपरम्परानुराधेनापि क्रमप्राप्तत्वात्तज्जयन्तीव्रतानुष्ठानाद्यर्थं जन्मकालं शास्त्रसम्मत्या ज्ञपयति-* **स्वात्यामिति।** *कार्तिके कृष्णपक्षे शिवतिथौ चतुर्दश्यां कुजे मङ्गले स्वातिनक्षत्रे मेषलग्नेऽञ्जनागर्भतः परन्तपः श्रीमान् कपीट् कपीश्वरः प्रादुरभूदिति। तस्यामेव सायाह्नव्यापिन्यां चतुर्दश्यां व्रतपूजनगुणकीर्तनादिना श्रीहनुमज्जयन्त्युत्सवमाचरेदिति श्लोकपदान्वयः, अगस्त्य-संहितानुसारं तथैवोक्तेः। श्रीमानित्यनेन भक्तिज्ञानादिसद्गुणसम्पत्तिरुच्यते- अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिरित्यादिरामायणोक्तेः। परन्तप इत्यनेन दुष्टनिग्रहादेरमितसामर्थ्यं प्रकाश्यते। कपिशब्दश्चाञ्चल्पादिधर्मारोपान्मनसि लाक्षणिक-स्तदीष्टे नियमयतीति कपीट्, तेन स्वायत्तमनस्कतया जितात्मत्वं सूच्यते। यद्वा कं पिबनीति कपिः सूर्यस्तमीष्टे स्वपराक्रमेण धर्षयतीति कपीट्, फलबुध्या सूर्यधर्षणकथा परामृश्यते। कपिं सुग्रीवं भगवत्समाश्रयणार्थमीष्टे प्रेरयतीति कपीट्, एतेनाचार्यलक्षणं सुव्यक्तं भवति।*

-------------------------------संवित्करः-------------------------------

कार्तिक मास के कृष्णपक्ष की चतुर्दशी तिथि, मेषलग्न, स्वातीनक्षत्र एवं मंगलवार के दिन सायंकाल श्रीअंजनामाता के गर्भ से शत्रुसन्तापक कपीश्वर भक्तराजश्रीहनुमानजी का प्राकट्य हुआ । इस दिन भक्तों को श्रीहनुमानजी की प्रसन्नता के लिए व्रत पूजन आदि के साथ मङ्गल उत्सव मनाना चाहिए।

**वैशाखमासीयचतुर्दशी सिता निशामुखे याऽनिलभेन संयुता।**
**सोमेऽवतारो नृहरेरभूदथो वतोत्सवं तत्र मुदा समाचरेत्।।92।।**

......................................................पदपरामर्शः......................................................

*सपरिकरस्य स्वाराध्यस्य जयन्तीव्रतोत्सवादिनिर्धारणात्परं तदभिन्नस्वरूपतया*

-------------------------------संवित्करः-------------------------------

वैशाख मास के शुक्लपक्ष की स्वातीनक्षत्रयुक्त चतुर्दशी तिथि सोमवार के दिन सायंकाल में परम कृपालु भगवान् श्रीनृसिंह का आविर्भाव हुआ। अतः इस पावनतिथि के दिन भगवान् श्रीनृसिंह का व्रतपूजन आदि का अनुष्ठान अवश्य करना चाहिए।

---

[1] पा. भे.- कपीन्द्रः।

.................................................पदपरामर्शः.................................................

*तदवताराणामपि जयन्तीव्रतानुष्ठानस्य वैष्णवजनकरणीयतयादावाश्रितदुःखासहिष्णोः स्तम्भं विदार्य प्रादुर्भूतस्य स्वाखिलव्याप्तिं बोधयतः परमकृपालोः श्रीनृसिंहस्य जयन्तीव्रतनिर्णयं विधत्ते-* **वैशाखमासीयेति।** *वैशाखमासस्य स्वातिनक्षत्रेण संयुक्तायां शुक्लचतुर्दश्यां सोमवासरे सायं भगवतो नृहरेरवतारो बभूव, अतस्तत्तिथौ तज्जयन्त्याः सोल्लसं व्रताराधनं कार्यमिति भावः। पुरुषसिंहस्य भगवतः श्रीरामचन्द्रस्यैव श्रीनृहरिरूपेणावतरणेन सत्यं विधातुं निजभृत्यभाषितमिति भागवतार्थः स्मारितः। भक्तरक्षायै तथाविधमदृष्टपूर्वं लोकभीषणमपि रूपं दधारेति नाम्ना गम्यते।*

**स्मरेण विद्धा तु चतुर्दशी यदा भवेद्धनापत्यविनाशिनी तदा।**
**तत्रोपवासो न जनैर्विधीयतां महात्मभिर्विष्णुपरायणैरपि॥93॥**

.................................................पदपरामर्शः.................................................

------------------------------संवित्करः------------------------------

यदि चतुर्दशी तिथि त्रयोदशी से अरुणोदय काल में वेधयुक्त हो तो वह धन एवं पुत्र का विनाश करने वाली होती है। अतः इसमें विष्णुपरायण भक्तजनों को उपवास नहीं करना चाहिए ।

*आविर्भावकालमुक्त्वोपवासोपयुक्ततिथिं शोधयति-* **स्मरेणेति।** *प्रोक्ता चतुर्दशी यदि स्मरेण स्मरसम्बन्धिन्या त्रयोदश्या अरुणोदयकाले विद्धा, तदा सा धनापत्यविनाशिनी भवति, तस्यां वैष्णवजनैर्महात्मभिश्चोपवासो न विधीयताम्। महात्मनामपत्यादिलौकिकसम्बन्धपरित्यागेनानपत्यतया वा विष्णुपरायणानां भगवदेकाश्रयिणाञ्च धनानपेक्षणात् तन्नाशेऽपि न क्षतिः, तथापि शास्त्रनिषिद्धत्वेन प्रत्यावायहेतुतया तत्रोपवासादि न युक्तमित्याशयः। यद्यपि* **स्मरेण विद्धेत्यत्र** *स्मरशब्दः प्रसङ्गानुरोधेन कामदेवताकायास्त्रयोदश्या बोधकस्तथापि स्मरेण विद्धः कामुको यथा वासनया धनविनाशेन पुत्रादिकमप्यापद्गतं कृत्वा तद्विनाशहेतुर्भवति तथेयं चतुर्दशीति व्यज्यते।*

**भाद्रेऽसिते निशीथेऽथ रोहिण्यामष्टमीतिथौ।**
**सिंहमर्के गते सौम्ये कृष्णो जातो विधूयते[1]॥94॥**

.................................................पदपरामर्शः.................................................

*श्रीनृसिंहचतुर्दशीव्रतोपासनकालविशेषं व्यवस्थाप्येदानीं श्रीकृष्णाष्टमीव्रतं*

------------------------------संवित्करः------------------------------

भाद्रपद मास के कृष्णपक्ष की रोहिणीनक्षत्रयुक्त अष्टमीतिथि को सिंहस्थसूर्य में अर्धरात्रि के समय भगवान् श्रीकृष्ण का प्राकट्य हुआ। वैष्णवजन उस जन्मोत्सव में बालरूप प्रभु को पालने में पधरा कर झुलाते हुए आनन्द प्राप्त करते हैं।

---

[1] पा. भे.- विधूदये।

पदपरामर्शः

*निश्चिनुते- **भाद्र** इति। भाद्राख्ये मासि सितेतरपक्षे कृष्णपक्षे निशीथे मध्येनिशम् अष्टमीतिथौ रोहिणीनक्षत्रे सिंहं गतेऽर्के (सिंहराशौ स्थिते भानौ) तादृशे सौम्ये शुभवासरे भगवान् श्रीकृष्णो जात आर्विभूतः। भक्तभावानुरूपं शैशवानुगुणमुत्सवं स्मरति- **जात एव विधूयत इति।** तत्प्रीत्यर्थं दोलामारोप्य मन्दमन्दमान्दोल्यत इति बालगोपालानुरूपसेवाविधिरुच्यते। श्रीविग्रहस्य जीववत्कर्माधीनशरीरधारणादि निरस्यति- **जात** इति। असितपक्ष इति स्ववर्णानुरूप्यात्तादृशपक्षस्वीकारः सूचितो भवति, लप्स्यमानजननीस्नेहमनुसन्धाय तन्नामसाम्ये नक्षत्रविशेषे स्वाभिसन्धिः प्रकाशितः। अर्कः स्वयमेव तप्तकिरणस्तत्रापि तादृशादम्यसिंहं गतस्य समारूढस्य तापकत्वं कथं कथ्यताम्, तादृशेऽपि तस्मिन् सौम्ये सौम्यत्वं शीतलत्वं गत इत्यतिलोकप्रभावसूचनेन प्रकारान्तरेण विलक्षणत्वं व्यञ्जितम्। यथा च भागवतेऽपि निशीथेऽपि ह्रदा जलरुहश्रिय इत्युच्यते।*

**कृष्णजन्माष्टमी सोक्ता तस्यां कृष्णव्रतोत्सवम्।**
**कुर्वीत विधिसंयुक्तं चतुर्वर्गफलप्रदम्।।95।।**

पदपरामर्शः

*अवतारकालं निरूप्य फलकथनेन व्रतोत्सवस्य विधेयतामभिदधाति- उपर्युक्तकाल एव श्रीकृष्णजन्माष्टमीति नाम्ना लोके व्यह्रियमानायां, तस्यामेवाष्टमीतिथौ विधिपूर्वकं श्रीकृष्णव्रतोत्सवं तत्प्रीत्यर्थोपवासपूजनाद्युल्लासप्रकाशं कुर्यादिति। कुर्वीतेति विशेषतस्तज्जन्यफलस्य व्रतानुष्ठात्रभिप्रायकत्वं सूचयति। तादृशव्रतोत्सवस्य सविध्यनुष्ठाने फलप्रदर्शनेन प्रवर्तयति- **चतुर्वर्गफलप्रदमिति।** ततो जातपरमभक्तिलाभमुखेन परमपुरुषार्थरूपभगवदवाप्तिमपि कारयति किमुत त्रिवर्गोपलब्धिमिति सूचयति। उद्दिधीर्षुभिरवश्यविधेयतां द्योतयति **कुर्वीतेत्यत्रत्यो लिङ्।** अर्थतस्तेनाबन्ध्यत्वं निर्दिष्टम्।*

संवित्करः

**इस अष्टमी का नाम ही श्रीकृष्णजन्माष्टमी है । इस अवसर पर किये गये सभी व्रतोत्सवादि सत्कर्म चारों पुरुषार्थों को देते हैं। अतः वैष्णवों को भगवत्प्रीत्यर्थ विधिपूर्वक व्रत उत्सव आदि अवश्य करना चाहिए।**

**त्याज्याष्टमी चेदथ वाजिविद्धा तथाग्निविद्धं विधिभं च हेयम्।**
**चेदष्टमी नो विधिभेन युक्ता महात्मभिर्विष्णुपरायणैस्तैः॥96॥**

........................................................पदपरामर्शः........................................................

*प्रसक्ततिथ्यादिवेधदोषोक्त्या ग्राह्यतिथ्यादिकं शोधयति-* ***यद्यष्टमी*** *सप्तम्या विद्धा भवेद्रोहिणीनक्षत्रं च कृत्तिकया विद्धं भवेत्तदुभयं त्याज्यम्। वाजिशब्दोऽश्ववाचकतया सप्तसङ्ख्याबोधकः। विधिर्ब्रह्मा, तद्देवताकं रोहिणीनक्षत्रं यद्यग्निदेवताकेन कृत्तिकानक्षत्रेण विद्धं भवति चेदिति भावः। वेधरहिताष्टम्यां कृत्तिकयाऽविद्धे रोहिणीनक्षत्र एव महात्मभिर्वैष्णवजनैश्च स काल स्वीकार्यः। महात्मभिर्वैष्णवजनैश्चेत्यनेन व्रतोवासनादेर्गृहस्थविरक्तोभयसाधारणत्वमुक्तं भवति।*

------------------------------संवित्करः------------------------------

यदि यह अष्टमी सप्तमीतिथि से विद्ध हो, तथा रोहिणीनक्षत्र कृत्तिका से युक्त हो तो वैष्णवों को उस दिन व्रतोत्सव नहीं करना चाहिए। इसका अभिप्राय यह है कि वेधरहित अष्टमी, तथा वेधरहित रोहिणी ही व्रत के लिए ग्राह्य है।

**विद्धा जयन्ती यदि सप्तमीयुता शुद्धा तथा सा नवमीयुता यदि।**
**विद्धाऽथ वेद्याऽग्नियुता हि रोहिणी[1] ज्ञेया तु शुद्धा यदि सा परान्विता॥97॥**

........................................................पदपरामर्शः........................................................

*जयन्त्याः शुद्धाशुद्धविवेकेनोपास्यानुपास्यत्वनिर्धारणायावतारयति-* ***विद्धा जयन्तीति।*** *यथा सप्तमी युता विद्धा भवति, नवमीयुता च सा जयन्ती शुद्धा तथा कृत्तिकायुता रोहिणी विद्धा मृगशिरसा युक्ता च शुद्धा ज्ञेयेति। तिथिवेधनक्षत्रवेधतदुभयवेधभेदात् वेधत्रैविध्येनोभयवेधरहिता भाद्रकृष्णाष्टमी शुद्धा विज्ञेया। तत्रैव जयन्ति अनुष्ठेया, अष्टमीकृष्णपक्षस्य रोहिणी ऋक्षसंयुता, भवेत्प्रौष्ठपदे मासे जयन्तीनाम सा स्मृतेति विष्णुधर्मोत्तरपुराणोक्तेः।*

------------------------------संवित्करः------------------------------

यदि अष्टमी तिथि सप्तमी से युक्त हो, तथा रोहिणीनक्षत्र कृत्तिका से युक्त हो तो उसे विद्धा जयन्ती समझनी चाहिए। इसीप्रकार अष्टमीतिथि नवमी से युक्त तथा रोहिणीनक्षत्र मृगशिरानक्षत्र से युक्त हो तो उसे शुद्ध (जयन्ती) जाननी चाहिए।

---

[1] पा. भे.- या रोहिणी वह्नियुता तु विद्धिका।

**भाद्रेऽथ शुक्लेऽभिजिति प्रभुर्हरिर्या द्वादशी वैष्णवभेन संयुता।**
**तत्रादितावाविरभूच्च वामनो व्रतोत्सवं तत्र मुदा समाचरेत्॥98॥**

**पदपरामर्शः**

*श्रीकृष्णाष्टमीव्रतं निरूप्य मासैकसामानाधिकरण्यात्तदनन्तरवर्तित्वाच्च वैष्णवानुष्ठेयव्रतरूपेणोपस्थितं वामनद्वादशीव्रतं स्मरति-* ***भाद्र इति।*** *भाद्रमासे शुक्लपक्षे वैष्णवभेन विष्णुदेवताकेन श्रवणनक्षत्रेण युक्तायां द्वादश्याम् अभिजिन्मुहूर्ते मध्याह्नेऽदितौ महर्षिकश्यपधर्मपत्न्यां हरिः प्रयुर्वामन आविरभूत्। भगवतोऽयमप्येकोऽवतार इत्याशयेन भाद्र एवायमप्यवतार इत्याशयेन च* ***चकारोऽवतारं*** *समुच्चिनोति। अदितौ वामन आविरभूदिति तदवतारकथां परामृशति। आविरभूरिति जन्मादेः पूर्ववत्प्राकृतत्वं निरस्यते। आश्रितरक्षणव्रतपालनाय महतो महीयसोऽपि विभोरपि वामनरूपेणाविर्भावो न सङ्कोचस्थानं प्रत्युत भक्तवात्सल्याद्यतिरेकद्योतनेन तन्माहात्म्यं प्रकाशयति। आपद्धरणशीलमाह-**हरिरिति,** तादृशशीलानुगुणसामार्थ्य-प्रकाशनाय अघटितघटनापटीयस्त्वं सूचयति-* ***प्रभुरिति।*** *आश्रितसम्पत्समृद्धये स्वरूपस्य याच्ञानुरूपतामभिधत्ते- वामन इति। नहि महाकारः कश्चिद्याचने प्रयुक्तो युक्तः प्रतिभातीति भावः। प्रभुःसन्नपि वामन इति भक्तप्रीतिवशंवदो भगवान् किन्न कुर्यादित्यहो भगवद्विषयकप्रीतेस्तद्वशीकरणप्रभाव इति व्यज्यते। अतस्तस्य भगवतो वामनस्य द्वादशीव्रतं नियततिथावेव महता समारम्भेण समाचरेदित्यादेशो वैष्णवजनेषु।*

**संवित्करः**

भाद्रपद मास के शुक्लपक्ष के श्रवणनक्षत्र से युक्त द्वादशी तिथि को मध्याह्न काल में स्वयं भगवान् श्रीअदितिमाता के यहाँ वामन रूप में प्रकट हुए। अतः इस दिन उपवास के साथ सोल्लास वामन भगवान् का पूजनोत्सव का आयोजन करना चाहिए।

**स्पृशत्येकादशीं स्पृष्टा द्वादशी श्रवणेन चेत्।**
**विष्णुशृङ्खलयोगोऽयं भाद्रे शुक्ले प्रकीर्तितः॥99॥**
**श्रावणद्वादशी ह्येषा पुनरावृत्तिनाशिनी।**
**तस्मादुपवसेदत्र यत्नतो मतिमान्नरः॥100॥**[1]

.................................................पदपरामर्शः.................................................

*तत्र कादाचित्केन प्राप्तं योगविशेषं निर्दिशति-* ***स्पृशत्येकादशीमिति।*** *यदि श्रवणनक्षत्रेण स्पृष्टा भाद्रशुक्लस्य सा द्वादशी एकादशीमपि स्पृशतिचेत्तदा मणिकाञ्चनसंयोग इव कश्चिद् विष्णुशृङ्खलनामा योगः सम्पद्यते। तद्योगस्य को विशेष इत्यत आह- तादृशी श्रवणद्वादशी पुनरावृत्तिनाशिनी, पुनरावृत्तिः जन्ममरणादि-फलककर्मप्रवाहरूपः संसारस्तन्नाशिनी निवारिणी मोक्षदायिनी भवतीतियावत्* ***न स पुनरावर्तत इति*** *श्रुतेः। कालस्य तादृशमाहात्म्ये तद्वर्तिनां समेषामविशेषेण मोक्षो भवेत्किमुपदेशेनेत्युच्यते योगविशेषं विज्ञाय तत्रोपवासादिकं विना न तल्लाभः, भेषजस्य रोगनाशहेतुत्वेऽपि तद्ग्रहणं विना तन्नोपपद्यते। प्रशस्तव्रद्भिर्मानवो दुर्लभयोगं मत्वा जागरूकः सन् तत्रोपवासादिकं चरेत्। न हि कश्चिदप्रमत्तो हितावहदुर्लभयोगं मौढ्यादुपेक्षत इति भावः।*

-------------------------------संवित्करः-------------------------------

भाद्रपद मास को शुक्ल पक्ष की द्वादशी, यदि एकादशी तथा श्रवण नक्षत्र से युक्त हो तो उस दिन का यह दुर्लभ संयोग विष्णु शृंखल योग कहलाता है। अतः बुद्धिमान् भक्तों को विष्णु शृंखलयोगवाली उस (एकादशी से विद्ध) श्रवण द्वादशी के दिन अवश्य उपवास करना चाहिये। क्योंकि यह विशिष्टयोगवाली श्रवणद्वादशी पुनः संसार प्राप्ति का नाश करती है अर्थात् मोक्ष प्रदान करती है।

**तथा यथाकालमतन्द्रितैस्तैरथाधिरोपादिकमुत्सवादिकम्।**
**सदा विधेयं हरितोषणं परं शुभप्रदं तद् बहुशास्त्रसम्मतम्॥101॥**

.................................................पदपरामर्शः.................................................

*एकादश्यादिव्रतेषु यथोपवासेन सह जागरणादिना भगवत्स्मरणे तन्मयतानिमित्तकं*

-------------------------------संवित्करः-------------------------------

जिस प्रकार पूर्वोक्त शास्त्रसम्मत कल्याणप्रद हरितोषण व्रतों एवं जयन्ती उत्सवों का भगवत्प्रसन्नता के लिए भक्तों द्वारा सविधि परिपालन किया जाता है, ठीक उसी प्रकार प्रतिवर्ष उन उन भगवत्सम्बन्धी तिथियों पर रथयात्रा, विवाहपञ्चमी, झूलन, शरत्पूर्णिमा आदि अन्य उत्सवों को भी आलस्यरहित होकर सोत्साह मनाना चाहिंए।

---

[1] इन दोनों श्लोकों के स्थान पर किसी-किसी प्रति में निम्नांकित श्लोक उपलब्ध होता है-

स्पृश्येकादशी किं वा श्रवणं द्वादशी यदि।
विष्णुशृंखलयोगोऽसौ तत्रोपोष्यं महत्फलम्॥

.......................................................पदपरामर्शः.......................................................

भजनकीर्तनप्रवचनादिकं विहितं यथा च जन्माष्टम्यादावुपवासेन सह सोल्लास-जयन्त्युत्सवपरिपालनञ्च विहितं तथैव रथयात्राजलविहारशरत्पूर्णिमान्नकूटाद्युत्सवेषु वार्षिकेषु सोत्साहं प्रवृत्तिर्जायतामित्यत आह- **तथा यथाकालमिति।** अतन्द्रितैरालस्यप्रमादादिकमपहाय वैष्णवैर्दोलान्दोलनोत्सवादिकं सदा विधेयम्। तेषां विहितत्वमुच्यते- **बहुशास्त्रसम्मतमिति।** अनेकैर्वेदोपबृंहणभूतैः स्मृतिपुराणेतिहासैः सह संवादितया साक्षाद्वोक्तत्वादवश्यविधेयतां सूचयति, एतेन तदुपेक्षाया प्रत्यवायजनकत्वं लब्धं भवति। यथा वराहपुराणे भगवदपचारवर्णने साक्षाद्भगवद्वचनम्-

गीतवादित्रनृत्यादिपुण्याख्यानकथाश्च ये
लोपयन्त्यथ पारुष्यैर्मम वेश्मसु मानवाः।
ते यान्ति वसुधे पापा नरकानेकविंशतिम्
ततस्तेऽपि महाभागे गार्दभीं योनिमाश्रिताः।।

विहितपालनस्य पुण्योत्पत्तिद्वारा कल्याणकरत्वमुक्तम्- **शुभप्रदमिति।** वैष्णवानां तदेव मुख्यं जीवनोद्देश्यमनुसन्धायोक्तम्- **हरितोषणमिति।** वैष्णवानां चेष्टामात्रस्य तदुदेश्यकत्वात्फलपारम्यं द्योत्यते।

**कर्मप्रवाहेण तु चेतनस्य संमग्नस्य संसारमहार्णवे चिरम्।**
**उपर्य्यहो[1] संसरतोऽवशस्य सत्[2] कृपोद्भवत्येव हरेरहेतुका[3]।।102।।**

.......................................................पदपरामर्शः.......................................................

एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः। जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते।। इत्युक्तार्थमनुचिन्त्य मोक्षसाधनजिज्ञासायां भगवत्कृपाया एव प्रामुख्य-मुक्त्वा तस्या अनन्याधीनत्वरूपनित्यसिद्धत्वात्साध्यत्वं निषेधति- **कर्मप्रवाहेणेति।**

-------------------------------संवित्करः-------------------------------

इस संसारसागर में अनादिकाल से अपने शुभाशुभ कर्म एवं उससे जनित विविध योनियों के जन्ममरणादि सुख दुःख के प्रवाह में निमग्न होकर बहते हुए अत्यन्तदीन एवं विवश जीव पर कभी श्रीहरि (परमप्रभु श्रीराम) की कल्याणकारिणी अहैतुकी (अकारण, यादृच्छिक) कृपा प्रकट हो जाती है।

---

[1] पा. भे.-उपर्यधः।
[2] पा. भे.- सा।
[3] पा. भे.- अहैतुकी।

........................................................पदपरामर्शः........................................................

संसारमहार्णवे संनिमग्नस्य कर्मप्रवाहेण चिरं संसरतोऽवशस्य चेतनस्योपरि अहो हरेरेव सत्कृपा उद्भवतीति वाक्ययोजना। संसरतीति व्युत्पत्त्या नित्यपरिणामितां संसूच्य तस्य महार्णवत्वरूपणेन भीषणावर्तशतसमाकुलत्वेनागाधत्वेन च दुस्तरत्वं द्योतितम्। तत्र विषयपोष्कल्यान्महत्त्वम्, आमौलि पूर्णतो विषयाक्रान्तत्वमेव **संनिमग्नत्वम्।** वीचितरङ्गन्यायेन कर्मतद्विपाकतज्जन्यरागादिवशात्पुनः कर्मप्रवृतिरितिवत्पूर्वपूर्वोत्तरस्योत्तरोत्तरं प्रति कारणतया तत्प्रवाहस्याविच्छिन्नत्वं विवक्षितम्- **चिरमिति** तस्यानादिकालप्रवृत्तत्वं सूचयति। अत्र दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानां सन्ततिर्न्यायसूत्रनिर्दिष्टा विवक्षिता। एतेन विषयप्रावण्यस्य दृढमूलतया सुगाढत्वं द्योतयन् यत्नशतेनापि दुर्निवार्यत्वं व्यनक्ति। **संसरत** इत्यत्रानाद्यनेहसः प्रवृत्तं यत्संसरणन्तदिदानीमपि नोपरतमिति पापवशात्तादृशसंसरणानुवृत्तिं वर्तमानत्वसूचकः शता व्यनक्ति। विड्भुज इव नष्टप्रज्ञतया देहात्मभ्रान्त्या विषमिश्रे मधुनीव क्षुद्रेऽपि सुखे भूयोभावेन मोमुह्यमानस्येत्यर्थः, अतः सुखस्यापि दुःखतया परिगणनं न्याये। अविच्छिन्नासह्यदुःखपरम्पराया मुक्त्यै वितथप्रयत्नस्य नासिकया प्रोतरज्जोः पशोरिव कर्माधीनतया स्वयं स्वसामर्थ्येन कर्मजालच्छेदनाशक्तत्वं वदति- **अवशस्येत्यनेन।** ज्ञातृत्वबोधकचेतनपदं ज्ञानेच्छाकृतिमत्त्वेन कर्मफलभोक्तृत्वं प्रकाशयति। संनिमग्नस्य चेतनस्येति प्रत्यक्त्वेन स्वरूपतः प्रकृतेर्विलक्षणत्वेऽपि पङ्के पतितमणेरिव हतवैभवस्यायुक्तता ध्वन्यते। एतेनास्यावश्यानुकम्पनीयत्वं बोध्यते। संसरतश्चेतनस्योपरि सत्कृपेति चेतनानां चेतनस्य भगवतो निसर्गसिद्धमच्युतत्वं व्यञ्जयति प्रवहन्त्यां नावि प्रवहन्ती नौर्बद्धा नेतरत्राणाय भवतीत्युक्तेः। एवकारोऽत्र भिन्नक्रमस्तेन हरेरेव सत्कृपा नान्यस्य। तदानीमहल्यानिषादकपिगृध्रादिष्वपि करुणावन्तं पापसन्तापहरणलक्षणं हरिपदवाच्यं श्रीरामं विना कस्तथाविधः, ब्रह्मादीनामपि कर्मवश्यतया तदितरस्य कस्यापि तादृशज्ञानसामर्थ्यवैभवाद्यभावेनेति भावः।

कृपा हि परदुःखनिराचिकीर्षा भवति, भगवतस्तु सा स्वप्रयोजनान्तरमनपेक्ष्यैव जायते, तत्रापि तस्याः सुग्रीवादाविवाविच्छिन्नत्वं सूचयितुं सद्विशेषणम्। वत्सं विलोक्य गोरिवोद्भवति। भगवतः सा जायमाना कृपा अहेतुका स्वाभाविकी न तु कारणजन्या भवति, निसर्गत एव तस्य कारुणिकत्वात्। केचनात्र प्रयोजनार्थठञ्निबन्धनेन ङीपाऽहैतुकी स्यादित्याचक्षते। अविद्यमानो हेतुर्यस्यामिति

**पदपरामर्शः**

*बहुव्रीहौ शेषाद्विभाषेति वैकल्पिकः कप् समासान्तः। ननु घट उद्‌भवतीत्यत उत्पद्यत इति प्रतीत्योत्पद्यमानायाः सत्कृपाया कार्यत्वे कारणं विना कार्योत्पत्यसंभवादहेतुकेति न युक्तमिति चेन्न भगवत्कृपाया नित्यत्वेनाजन्यत्वात्। भगवत्कृपा अजन्या (नित्या) कारणमुखापेक्षित्वाभावात् अनन्याधीनत्वादित्यर्थः। न च येषां स एव भगवान् दययेदनन्तः सर्वात्मनाश्रितपदो यदि निर्व्यलीकमिति भागवतवचने निर्व्यलीकपादाश्रयरूपभक्तेः दयां प्रति कारणत्वकथनाद् भक्तिसापेक्षत्वात्कथ-मनन्याधीनत्वमिति वाच्यम् जीवानां प्राणवाय्वादिप्रदानेन सत्तास्थितिप्रवृत्यादिदर्शनात् कृपासामान्यस्य सर्वत्र सत्त्वात्, कृपाविशेषं प्रति भक्त्यपेक्षत्वेऽपि तादृशभक्तेषु भक्तेर्भगवदन्तरङ्गवस्तुतया महासारतया च भगवन्मयत्वाद् तस्या भगवदधीनत्वा-च्चानन्याधीनत्वाक्षतेः। अत एव जीवकृतायाः कृपायाः पुण्यजन्यायाः परिमितफलतया तद्व्यावृत्तये सद्विशेषणं सङ्गच्छते। अत एव यमेवैष वृणुते तेन लभ्य इति श्रुत्या तदवाप्तौ साधनान्तरं निरस्यते। अत्र विस्मयबोधकेना**हो** इति निपातेनालभ्यलाभो द्योत्यते।*

**मोक्षे मुमुक्षोर्नहि तारतम्यं फले प्रपन्नस्य तु सत्प्रपतेः।**
**अस्त्येव तद्रामकृपोपलभ्ये[1] पतिं श्रियोऽनन्तगुणार्णवन्तम्॥103॥**

**पदपरामर्शः**

*भगवत्कृपया प्रत्यगात्मनामर्चिरादिना गतानां पारेविरजं त्रिपादविभूतौ नित्याप्राकृते श्रीसाकेतधाम्नि प्रविष्टानां मुक्तिदशायां परमपुरुषार्थसिद्धौ संभवन्त्या निर्वृत्तेरनुभूतौ मुक्तजनोपभोग्यायां साम्यं वैषम्यं वेति निर्णेतुं श्लोकमवतारयति- **मोक्षे मुमुक्षोर्नहीति।** तमनन्तगुणार्णवं श्रियःपतिं प्रपन्नस्य मुमुक्षोः सत्प्रपत्तेस्तद्रामकृपोपलभ्ये फले मोक्षे तारतम्यं नह्येवास्तीत्यन्वयः। नित्यानवद्यसौन्दर्यमाधुर्यवात्सल्यादिभिः सह*

**संवित्करः**

अनन्तकल्याणगुणसागर करुणामय श्रीजानकीनाथ भगवान् के चरणों में शरणागत जीवों की प्रपत्ति (शरणागति) से प्राप्य भगवत्कृपाजन्य मोक्षरूपी फल में किसी तरह का तारतम्य नहीं हाता है अर्थात् मोक्ष तथा उसके आनन्द प्राप्तिरूप स्वरूप में किसी प्रकार की विषमता या भेद मान्य नहीं है। मोक्ष एक ही प्रकार का है और वह है सायुज्य।

[1] पा. भे.- तद्विष्णुकृपोपलभ्यते।

........................................................पदपरामर्शः........................................................

सत्यज्ञानसत्यसङ्कल्पत्वाद्यनेकगुणाकरत्वे सति स्वरूपभूतशक्तिविशिष्टं भगवन्तं निर्दिश्य निर्विशेषवाद उपाधिवादश्च प्रत्याख्यातौ। नासमर्थस्य कृपा शोभत इत्युक्त्या तादृशसर्वेश्वरस्यैव सा युज्यत इति ध्वनयितुं **तद्रामकृपोपलभ्य** इत्युक्तम्, यश्चातिनीचेषु कपिकिरातगृध्रादिष्वपि कृपावानिति कृपावानविकत्थन इति धीरोदात्तनायकतया तस्यैव लोकप्रसिद्धेः। तद्रामकृपयैवोपलभ्य इत्यवधारणार्थोऽनुसन्धेयः। न केवलं लीलाविभूतौ लीलाहेतुकं श्रीसाहित्यमपितु तत्रापि श्रीसीतया नित्ययुक्तस्य भगवतः सर्वेश्वरत्वं प्राप्यत्वं मुक्तोपसृप्यत्वञ्चेति द्योतयितुमेवाह– **श्रियः पतिमिति।** तेन तत्र मुक्तानां मातापितृवात्सल्यस्निग्ध–परिपूर्णानन्दपुष्टिपौष्कल्यं च लभ्यते। अनन्तगुणार्णवमित्यनेन परमयोगिभिरप्यपरिच्छे–द्यज्ञानकरुणाद्याकरत्वं सूच्यते। **तमित्यनेन** च लीलाविभूतावयोध्यानाथदशरथनन्दन–द्विभुजस्वरूपेण दृष्टश्रुतस्मृताकारेणावबुद्धस्य तस्य तदाकारेणैव दर्शनात्स एवायमिति प्रत्यभिज्ञानं निर्दिश्यते। तस्य द्विभुजस्यैव परत्वमास्थाय तद्रूपेणावतारः सिद्धान्तितः। **प्रपन्नस्येत्यनेन** सकलोपायशून्यस्य भगवत्पादैकाश्रयस्य महाविश्वास–पूर्वकावस्थितस्येत्यर्थो लभ्यते, मुमुक्षोरिति संसाराग्निप्रतप्तदाहमसहमानस्य भगवन्तं प्रेप्सोरिति। मोक्षे रामकृपोपलभ्यत्वकथनात् तत्कृपैकसाध्यत्वं तस्य संसूच्य तत्सिद्धौ साधनान्तरनिरासः क्रियते। सकलसाधनानां तदेकपर्यवसायित्वं सामानाधिकरण्येन दर्शयति– **मोक्षे फल इति।** प्रपत्तेरेव मोक्षजनकत्वं निश्चित्य मोक्षसुखस्य प्रपन्नैकास्वाद्यत्वं प्रकाश्यते। मुक्तो हि त्रिपादविभूतौ साकेताख्यं नित्यं भगवद्धामावाप्य ब्रह्मानन्दानुभवेन सञ्जाततद्विषयकप्रीतिप्रकर्षप्रेरितो भगवतः सर्वविधकैङ्कर्यं करोति। तादृशमोक्षाख्यफलास्वादे तत्स्वरूपे चानेन तारतम्यं न्यूनाधिकत्वं निरस्य सगुणोपासकानां कार्यब्रह्मप्राप्तिरक्षरोपासकानामक्षरबोधप्राप्तिरिति भेद इति वदतां मतं समूलमुच्छिद्यते। इत्थमेव भागवती मुक्तिर्ज्ञानिजनमुक्तिरिति पार्थक्येन निरूपयतां मतमपि निरस्यते। वस्तुतोऽद्वैतिनां जीवन्मुक्तिः कैवल्यमुक्तिरिति भेदं तत्कृतस्वरूपवैषम्यञ्च शास्त्रविरुद्धत्वात्प्रत्याख्यातुमेवेदमुपक्रान्तम्। मोक्षोपायनिष्ठस्य चरमशरीरावसाने विरोधिकर्मनाशादपहतपाप्मत्वादिगुणाष्टकाविर्भावेन च सायुज्यं मोक्षः। सायुज्यञ्च न भगवति लयः, शरीरैक्यं, स्वरूपैक्यं वा, अपितु समानात्मगुणयोगित्वमेव भोगसाम्यमिति भावः। इदं भिन्नयोरेकत्र योगं दर्शयति, परमं साम्यमुपैतीति श्रुतेर्मम

.........................................................पदपरामर्शः.........................................................

साधर्म्यमागता इति स्मृतेश्च। ब्रह्मवेद ब्रह्मैव भवतीत्यादीनामपि साम्यबोधने तात्पर्यम्। श्रीधरस्वामिनो–यत्सायुज्यमेकत्वमिति व्याख्यानमपि चिन्त्यम्। सालोक्यसामीप्यसारूप्य-सायुज्येषु सायुज्यमेव मुख्यो मोक्षः, अन्यत्र मुक्तिशब्दप्रयोगो गौणः, सायुज्ये लब्धे तेषां सुतरामेव सिद्धेः। सालोक्यादिभेदेन तारतम्यमयुक्तं सर्वकर्मनिवृत्तौ स्वतः प्राप्तब्रह्मसुखानुभवे तारतम्यायोगात्। तत्र परिगृहीताप्रकृतशरीरे स स्वराड्भवतीति श्रुत्या महत्ताकारेणानन्याधिपतित्वेन सङ्कल्पसिद्धौ, असङ्कुचितज्ञानत्वेन लीलारसानुभूतौ च न तारतम्यम्, परमपुरुषार्थकाष्टाभूतनिरुपाधिकभगवत्कैङ्कर्यस्य स्वादुतमत्वेनानुभूयमानत्वे फलरूपे तस्मिंश्च न तारतम्यम्। सेवाधिकारे प्रभावे तत्तदधिकारनियोगे तद्विप्रासो विपण्यवो जागृवांस समिन्धत इत्याद्यनुभवप्रकारेण तच्छेषतैकरुचित्वे च न तारतम्यमिति सर्वेश्वरलक्षणजगद्व्यापरवर्ज भोगसाम्यं जायते, सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चितेति श्रुतेः।

**भवन्त्युपायान्तरमेव सर्वे स्वातन्त्र्यतो मुक्तिपदप्रदास्ते।**
**सुकर्मसंवेदनभक्तियोगाः प्रपत्तिनिष्ठैः समनुष्ठितास्तु॥104॥**

.........................................................पदपरामर्शः.........................................................

श्रीरामप्रपत्तेर्मोक्षे कारणतां निरूप्य तदपेक्षया मुक्तावुपायान्तरमपि समुच्चिनोति **भवन्त्युपायान्तरमेवेति।** सुकर्म च संवेदनञ्च भक्तिश्चेतरेतरद्वन्द्वे, द्वन्द्वान्ते श्रूयमाणस्योपायवाचकयोगपदस्य प्रत्येकमन्वयात्सुकर्मयोगः संवेदनयोगो भक्तियोगश्चेति योगत्रयं लभ्यते। शास्त्रार्थतत्त्वज्ञानतः कर्मयोगः, तेन निरुद्धमनसः शुद्धात्मभावनारूपो ज्ञानयोगः, तद्द्वारा कर्मयोगेन वात्मावलोकनम्, तेन लब्धाधिकारस्य भक्तियोग इति क्रमस्य विवक्षणादल्पाच्त्वे घित्वेऽभ्यर्हितत्वेऽपि भक्तिशब्दस्य न पूर्वप्रयोगः। यद्यप्यन्यत्र वेदनं ध्यायपर्यायतया भक्तौ दृश्यते तथाप्यत्र यथावस्थितात्मविषयं ज्ञानमेव **संवेदन**मिति विवक्षितम्। शास्त्रविहितं वर्णाश्रमनियतं काम्यादिव्यावृत्तं कर्मैव सुकर्मपदेनोच्यते। **समनुष्ठानं** सेवनम्, तच्च ज्ञानशक्तियोग्यतानुगुण्येन यथाधिकारमाफलोदयं सादरं परिग्रह एव। यद्यपि सुकर्मयोग आत्मज्ञानं भगवत्प्रीति-

------------------------------संवित्करः------------------------------

भगवत्प्रपत्ति में विश्वास रखनेवाले भक्तों के द्वारा सम्पादित शरणागति के अतिरिक्त ज्ञानयोग-कर्मयोग-भक्तियोग भी मोक्षप्रद उपायान्तर हैं। किन्तु साधनान्तर निरपेक्ष एवं स्वतंत्र उपाय तो प्रपत्ति ही है।

........................................................पदपरामर्शः........................................................

श्चानुवर्तेते, संवेदनयोगेऽप्यन्तःकरणशुद्ध्यर्थं नियतकर्मण आराध्योपासनायाश्च परिग्रहो दृश्यते, भक्तियोगेऽपीतरयोरनुवृत्तिश्च, तथापि प्रधानभूते भक्तियोग इतरयोर्गुणतयानुप्रवेशेन विभागस्य नानुपपत्तिरिति भावः। यथोक्तं स्वयं भगवता–

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
कर्म ज्ञानञ्च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्।।

अत्र त्रयाणामपि योगानां स्वातन्त्र्येण मुक्तिपदप्रदत्वकथनं यथाशास्त्रं परस्परान्वयेन व्याख्येयम्। **मुक्तिपदप्रदा** इत्यत्र मुक्तिपदेति तद्विष्णोः परमं पदमिति मन्त्रानुसन्धानेनोक्तम्। यद्वा पद्यत इति व्युत्पत्त्या पदं मुक्तप्राप्यतया सिद्धं पुरुषोत्तमस्य भगवतो रामचन्द्रस्याप्राकृतं स्थानं साकेताख्यं धाम तत्स्वरूपं वाभिधत्ते। वस्तुतः स्वातन्त्र्यं नात्रानन्याधीनत्वमपितु स्वप्रयोज्यफलसिद्धौ पर्याप्तत्वमित्येव। यद्यपि मोक्षे परमभक्तेरेवाव्यवहितोपायत्वमङ्गीकृतं तथापि तादृशभक्तिसिद्धौ यथावस्थितसुकर्म-संवेदयोरात्मसाक्षात्कारद्वारा भक्तियोगाधिकारनिर्वर्तकत्वेन साधनत्वमावर्जनीयम्। रजस्तमोमूलपापनाशेन सत्त्वविवृद्धिसाध्यत्वमात्मयाथात्म्यज्ञाने, फलसङ्गकर्तृत्वादि-परित्यागपूर्वकभगवदाराधनैकधिया नित्यनैमित्तिककर्मानुष्ठानेन तत्साध्यत्वं च भक्तावित्यङ्गाङ्गिभावेन मिथः सम्बन्धः। यद्यपीमे त्रयोऽपि योगाः प्रपत्त्यपेक्षयान्ये तथापि प्रपत्तिनिष्ठैरिमेऽनुष्ठेया भवन्तीति दृश्यते नोपायधियापितु यथाशक्यं भगवदाज्ञापालनस्यौचित्यात्, नैष्कर्म्ये पातित्यप्रसक्तिभिया, भगवद्व्यतिरिक्तोपायाश्रयणे तु महाविश्वासभङ्गात्प्रपत्तेरेवासिद्धेः। प्रपत्तावेव निष्ठा येषां तैः **प्रपत्तिनिष्ठैरिति**। नियता स्थितिर्यावत्फलं स्थिरपरिग्रहणमेव निष्ठापदेनोच्यते। केचन तु स्वातन्त्र्यतो मुक्तिपदप्रदा साध्यभक्तिरेव प्रपत्तिरेवास्ते इत्यन्वयवैचित्र्यादभीष्टार्थं साधयन्ति।

**विभुत्वतो निर्भरतापरैस्तैः श्रीव्याप्तिरार्यैरभिधीयते हि।**
**प्रपञ्चनिर्मातृविरिञ्चिहेतुश्रीरामपादाब्जनिविष्टचित्तैः।।105।।**

........................................................पदपरामर्शः........................................................

वैष्णवेष्वपि केषाञ्चिन्मते श्रीतत्त्वं त्रिविधचेतनेषु नित्यजीवविशेषकोटौ

------------------------------------संवित्करः------------------------------------

सकल जगत् के निर्माता ब्रह्माजी के कारणभूत श्रीरामजी के चरणारविन्द में मन को निविष्ट किये हुए तथा प्रभु पर पूर्णतः निर्भर रहनेवाले, विज्ञ आचार्यो ने श्रीसीताजी को विभु होने के कारण ईश्वर कोटि में स्वीकार किया है न कि अणुरूप मानकर विशिष्टजीवकोटि में।

.....................................................पदपरामर्शः.....................................................

सन्निवेशितम्, तत्र स्ववैमत्यं प्रकाशयितुं तन्मतं सुदृढं प्रत्याचष्टे- **आर्यैर्विभुत्वाच्छ्रीव्याप्तिरभिधीयत** इत्यादिना। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् व्यापकत्वमित्यर्थः, तच्च यथा भगवतस्तथा श्रियोऽपि स्वरूपतो विग्रहतो धर्मभूतज्ञानतस्त्रिविधमपि। भगवतो रामस्येव पराम्बायाः श्रीसीताया अपि अनन्या राघवेणाहम्, अनन्या च मया सीतेत्युभयप्रयुक्त्या ज्ञानानन्दाद्यत्यन्तसाम्याद् जगज्जनकत्वशेषित्वशरण्यत्वप्राप्यत्वादिसाम्याच्चोभयोर्विभुत्वस्वीकारे न क्षतिः। अत्र विभुद्वयासंभवत्वं बाधकमिति चेन्न काले नित्यमुक्तेश्वराणां धर्मभूतज्ञानेऽपि विभुत्वस्वीकारात्। अत एव सिद्धान्ते श्रीव्याप्तिरङ्गीक्रियते, त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरमित्युक्तेः। सकलस्यापि श्रीव्याप्तत्वादेव तदेकचरणाश्रितानां सा नूनं मां पालयिष्यतीति धिया तत्र तत्र स्तवनवन्दनादिकं सङ्गच्छते सर्वत्र तस्या अन्तर्बहिर्व्याप्तेः। नान्तर्बहिर्व्याप्तिं विनेशितृत्वं युज्यते, यच्च "अस्येशाना जगतः" इति श्रुत्या प्रतिपाद्यते। अतोऽत्र तां प्रति भाविता निर्भरतापि साम्प्रतम्। श्रीव्याप्तौ हेतुमाह- **विभुत्वतो,** विभुत्वादिति हेतौ पञ्चमी। व्यापकत्वादित्यर्थः, व्यापकत्वे सति चेतनत्वमिति हीश्वरलक्षणम्। एवमर्थाभिधाने वक्तृप्रामाण्यमाचष्टे- **श्रीरामपदाब्ज-निविष्टचित्तैर्निर्भरतापरैस्तैरार्यैरभिधीयत** इति। भक्तिबलाज्ज्ञातरहस्यैरिति भावः। भक्तानां स्वाराध्यपक्षपातित्वदर्शनात्तेषां कथं प्रामाण्यमित्यत आह- **आर्यैरि**ति। कुलीनत्वात्सन्मार्गानुवर्तित्वाच्च नान्यथावक्तृत्वमिति भावः। यद्वा वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवत्त्वं रामपादाब्जनिविष्टचित्तैरित्यनेन, निर्भरतापरैरित्यनेन रागाद्यनुपहितत्वम् आर्यैरित्यनेनानन्यथाभाषित्वमुक्त्वाप्तत्वमुच्यते। यत्पादाब्जे भक्तानां चित्तं सर्वदा निविष्टं तिष्ठति, तं स्वाराध्यं भगवन्तं श्रीरामं विशिनष्टि- **प्रपञ्चनिर्मातृविरिञ्चिहेत्विति।** प्रपञ्चस्य निर्मातुरपि विरिञ्चेर्ब्रह्मणोऽपि हेतुत्वकथनात्तस्योत्पत्तेरपि भगवन्मूलकत्वं प्रदर्श्यते, यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेः। महदादिसृष्टिक्रमेण पूर्वं ब्रह्माणं विधाय तस्मिन् प्रलयतिरोहितवेदानाविष्कृत्य दानात् तदायत्तस्थितिप्रवृत्यादिकं संसूच्य भगवदधीनकृर्तत्वात्तत्कृतस्यापि भगवत्कृतत्वमेवोक्तं भवति। वस्तुतस्तु भगवाञ्छ्रीराम एव विरिञ्चावन्तर्यामितया स्थितः प्रपञ्चं निर्मातीति सिद्धम्। यथोक्तं भागवते स्वयमेव ब्रह्मणा-

सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदित इति।

..........................................................पदपरामर्शः..........................................................

*तादृशस्य निखिलजगदेकहेतुभूतस्य* **पादाब्जे निविष्टत्व***कथनेन भक्तानां मुधकरत्वद्योतनेन पादाब्जमकरन्दलिप्सयाऽभिनिवेश उक्तः। तेन रसिकत्वव्यञ्जनया तदेकजीवनत्वेन तर्जनादिभिरपि दुर्निवार्यत्वं प्रकाशितम्। पादाब्जशब्दोऽपि दिव्यसौकुमार्यसौरभादिमूलकं परमप्रेमार्हत्वं ध्वनयति। यद्वा विरिञ्चिहेतुभूतं तु श्रीरामापादाब्जमेव, तत्र निविष्टचित्तैरित्यर्थान्वयविच्छित्त्या तादृशनिर्माणविधेरपि तच्चरणारविन्दमात्रहेतुकत्वकथनात्कैमुतिकन्यायो व्यञ्जितः। तथाविधकठिनकार्यं सुपेशलचरणाब्जसाध्यमिति विरोधाभासगर्भश्चमत्कारः। एतेन तादृशसर्गादिविधेरप्य-नायाससाध्यत्वं प्रतिपाद्यते। इत्थमन्वयविच्छित्त्या श्रीरामपादाब्जपरिचर्यायां एव फलं तस्य विरिञ्चित्वमित्यर्थतो लभ्यते।* **निर्भरतापरैः***, तेषामहं समुद्धर्ता, योगक्षेमं वहाम्यहम्, अभयं ददामीत्याद्युक्तवति भगवति सर्वसमर्थे स्वाराध्ये सर्वविधभारनिक्षेपेण वीतचिन्तैरित्यर्थः। तथाभूतैरार्यैरमर्थोऽभिधीयते सिद्धान्ततया आस्थीयत इत्यर्थः। श्रियोऽणुत्वं जीवत्वमिति वादिनामयं दुरभिसन्धिः– यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तमेत्युक्त्या भगवत्साम्यस्य तत्रातिदेशाच्चन्द्रवन्मुखमित्यत्र यथोपदेश-स्थलादतिदेशस्थले न्यूनताया प्रतीतिस्तथा भगवदपेक्षया न्यूनप्रभावेयमिति। एवञ्चास्याः सर्वशरीरित्वमपि न, मातृत्वमप्यस्या भगवत्पत्नीत्वप्रयुक्तं सर्वपत्नीसाधारणम्, पिताहमस्य जगतो माता धाता पितामह इति भगवदुक्तेस्तस्यैव मातृत्वपितृत्वादिकम्। एवम्भूतायास्तस्याः पुरुषकारत्वादिकमपि भगवतैव प्रदत्तम्। केचनात्र विभुत्वं स्वीकृत्याप्यणुचेतनत्वरूपं जीवलक्षणमुपेक्ष्य परतन्त्रचेतनत्वमिति लक्षणं निश्चित्य जीवकोटिप्रवेशमेव समर्थयन्ते। केचन च पतिपुत्रव्यावृत्तपत्नीन्यायेनास्या कोट्यन्तरत्वमाहुः, श्रियोऽपि सत्ता भगवदधीना भगवतश्च वैभवं रत्नप्रभापुष्पपरिमलन्यायेन भगवत्यायत्तम्। अन्ये च स्वरूपस्थितिरेवमस्तु विभूतिद्वयशेषित्वमीश्वरलक्षणमिति व्युत्पाद्य अस्या विभुत्वादीश्वरकोटि-प्रवेशमभिप्रयन्ति। इत्थमनेकविधविकल्पप्राप्तावस्याः श्रीसीतायाः सम्प्रदायसिद्धं विभुत्वमीश्वरत्वञ्च सुदृढं स्थापयितुमेवेदं पद्यमुपक्रान्तमिति मन्यामहे।* **तत्रायं निष्कर्षः***– अर्थो रामश्च वाक्सीतेत्यादौ यावदुक्तपदार्थनिरूपितमात्मत्वमानुरूप्याच्छ्रियः एष्टव्यमेव, आत्मत्वञ्च शेषित्वाभावे न स्याद् दिव्यदम्पत्योः श्रीसीतारामयोश्चाविशेषेण सर्वशरीरित्वात्। स्वरूपादिष्वतिगाढः संश्लेषविशेष एव नित्यजीवसमूहापेक्षयास्या*

..........................पदपरामर्शः..........................

*विभुत्वं व्यनक्ति व्यापकाविति संश्लेषादेकतत्त्वमिवोदिताविवित्युक्तेः। किञ्च श्रुतिषु परमपुरुषस्यैव विशेषतः श्रावितत्वाज् ज्ञातं वस्तु यथेति प्रदर्श्य ज्ञापनीयं तथेति प्रतिपाद्यते। यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तमेत्यत्र सर्वगतो विष्णुर्यत्स्वभावः, इयमपि तत्स्वभावेति व्याख्याय सर्वगतत्वसत्यज्ञानादिस्वरूपकल्याणगुणादीनामतिदेशः, यद्वा भगवान् पूर्णत्वाद् विभुत्वाच्च सर्वगतस्तथेयं सर्वगतेत्युभयोरेकाभिप्रायतापरत्वं तस्य लभ्यते। उपमानापेक्षयोपमेये न्यूनताप्रतीतेर्नास्ति नियमः, तथात्वे राजीवलोचनः, समुद्र इव गाम्भीर्ये इति भगवद्रामवर्णने उपमेयोत्कर्षो निर्विवादः। पतिपत्नीभावादि-मूलस्वातन्त्र्यपारतन्त्र्ययोः स्वयमेव तयोरिष्टत्वादीश्वरद्वित्वादिदोषप्रसक्तिर्नास्ति। अत एव चोभयाधिष्ठानं चैकं शेषित्वमित्युक्तिः सङ्गच्छते, अविभागस्मृतेः। पूर्वमीमांसायां षष्ठाध्याये महेन्द्रदेवतात्वे नेन्द्रो देवतापितु महत्त्वविशिष्ट इन्द्रो देवता, तथैव श्रीविशिष्टो भगवान् ब्रह्म शेषी च। यथाग्नीषोमीययाग उभयोरप्येकदेवतात्वं तथा श्रीसीतारामयोरेकं शेषित्वमिति सारः।*

**नित्यं सा पुरुषाकारभूता सीताऽनपायिनी।**
**अनुपायान्तरैर्विज्ञैरुच्यते तदुपायता॥106॥**

..........................पदपरामर्शः..........................

*श्रीरामायणे गगनं गगनाकारं सागरः सागरोपम इत्युक्तवदभेदेऽपि सादृश्योपलब्धेस्तथैवेयमित्यत्र यः सर्वज्ञः स सर्वविदिति श्रुतिवत्समानविषयेऽपि यत्तदोः प्रयोगात्प्रत्यभिज्ञयेव तयोर्भगवतोः श्रीसीतारामयोः किमप्यनन्यत्वं प्रकाशितम्, यच्च युवयोर्न तु भेदगन्ध इत्युक्त्वा वैष्णवाचार्यैः सूचितम्, तथापि हितप्रियताभिनिविष्ट-मातापित्रोर्वात्सल्यसमास्वादनप्रयुक्तं पृथगाविर्भावं सर्वथानुरूप्यगुणप्रकाशनेन यं "तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्, राघवोऽर्हति वैदेहीं तञ्चेयमसितेक्षणेति*

--------------------संवित्करः--------------------

**परमप्रभु श्रीराम से नित्ययुक्ता एवं अभिन्नस्वरूपा श्रीसीताजी ईश्वररूप होकर भी मातृसुलभ करुणा के कारण असहाय मुमुक्षु जीवों की ओर से सहायक बन कर उसकी करुणप्रार्थना एवं दीनदशा प्रभु को सुना कर क्षमापनपूर्वक उनसे उद्धार करवाती हैं, जीव एवं परमात्मा के मध्य घटक (सम्बन्धसाधिका, जीवपक्षनिवेदिका) बनने के कारण पुरुषकारस्वरूपा वह जगदम्बा भगवत्प्राप्ति के लिये भक्ति आदि उपायों से रहित जीवों के लिये स्वयं उपाय (मोक्षोपाय) बन जाती हैं, ऐसा सम्प्रदाय के रहस्यज्ञ बताते हैं।**

.........................................................पदपरामर्शः.........................................................

समुन्नयत्यादिकविस्तत्रात्यन्तसाम्यविवक्षणेऽपि विशेषणाधिकदानेन भगवदपेक्षया श्रियः कश्चिद्विशेषो व्यञ्जित एव। स च पुरुषकाररूपः, तथा हि सामान्यतो विशेषतश्च नित्यज्ञानवत्त्वेन जीवकृताखिलपापादेरचिरेण वेत्तुः शास्ता जनानामिति श्रुत्यनुगुणाकुण्ठ-शासनतया नियन्तुमुद्यताच्च सर्वेश्वराज्जीवं को रक्षेत्? तादृशादपि तदानीमनुग्रहैकस्वभावा वात्सल्यातिरेकान्निवार्य रक्षति। यदा वा परमहितैषित्वेऽपि प्रतापोष्मलपितृत्वेन निग्रहानुग्रहोभयसमर्थो भगवान् जीवैर्दुरासदतया दण्डधरादिव भीत्या न समाश्रीयते, तदानीं या सांसिद्धिकसम्बन्धोपपादनेन निर्भरवात्सल्यप्रयुक्तेनाभय-समाश्वासनगर्भेण जीवविषयककारुण्योत्तम्भकेनालापादिना स्वयमपि तन्मध्ये मिथो घटकतयावतिष्ठते, जीवं स्वजनयति च, तस्याः श्रीरामवल्लभायाः सर्वमङ्गलैकफलं परमधन्यतां दुहानं च पुरुषकारमनतिसाधारणवैभवधिया स्मरत्याचार्यवर्यः- **नित्यमिति।** नित्यमिति पुरुषकारभूता, अनपायिनी, तदुपायतेति त्रिष्वप्यन्वेति, तेन तदुपायतादौ सदातनत्वं लभ्यते। **सेति** 'ईश्वरीं' सर्वभूतानामित्याद्याम्नाता इष्टां सर्वस्य जगत इत्यादिना रामायणे समादृता दार्शनिकैः सर्वशेषितया सोपपत्तिकं सिद्धान्तिता, श्रीसम्प्रदाये प्रवर्तकाचार्यतया सुपूजिता लोकेऽनुकरणीयानवद्यपातिव्रत्यादिनाऽपामरं ख्यातवृत्ता, भक्तानान्तु परमाराध्यतया जीवातुभूततया प्रथिता श्रीरामवल्लभा परामृश्यते। अतः श्रुदिसिद्धं लोकसिद्धं सम्प्रदायसिद्धं च नामाह **सीतेति,** तस्या एवानुगुण्यात्तथात्वात्। यस्य जगच्छरण्योऽपि न शरण्यो भवति, तस्यापीयं शरण्या भवति। इमामश्रित्य सर्वेश्वरादपि न भयम्। यथोक्तं वानरगणे श्रीहनूमता- अलमेषा परित्रातुं राघवाद्राक्षसीगणमिति। घटकत्वेन भीतिनिवारकसम्बन्धसाधकत्वेन भगवत्कारुण्योल्लासद्वारेण तस्या भगवत्प्रापणहेतुभूतगुणवैभवमाह- **पुरुषाकारभूतेति।** छन्दोऽनुरोधेनाकारघटितप्रयोगः, अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेदित्युक्तेः, तेन पुरुषमाकारयतीत्यपि च लभ्यते। उन्मत्तेष्वपि "विदितः स हि धर्मात्मा शरणागतवत्सल इत्यादिगुणमाभिगमिकमुक्त्वा तेन ते मैत्री भवतु इत्यवबोध्य एवं हि ते भवेत्स्वस्तीत्युच्चार्योपायप्रदर्शनेन इयमेव कृतपापविपाकभीतमप्यभया-श्वासनेनाकारयति, इयमेव परमपुरुषं साक्षात्कारयति, तत्पादमूलं प्रापयति, तवास्मीत्युचिताकारेण स्तावयति, इयमेव च पुनर्भगवते निवेद्य तद्दशां श्रावयति पापानां वा शुभानां वा वधार्हाणामथापि वा कार्यं कारुण्यमार्येण न कश्चिन्नापराध्यती-

....................................................पदपरामर्शः....................................................

त्युक्तप्रकारेण प्रसाद्य भगवतोपकारयति धन्यतामापादयति चेति सर्वनिर्वाहकत्वमस्याः सिद्ध्यति। सापराधाशुवधार्हेष्वपि कार्यं कारुण्यमार्येणेत्यार्यानुगुणकृत्ये सम्प्रेत्य न केवलं जीवानुपकरोति, भगवत्कारुण्यादिकं सफलयति। अधिकदयापात्रं मत्वा पूर्वं स्वयमनुगृह्य पश्चात्पत्यानुग्राहयतीति पतिवशीकरणसामर्थ्यं जीवकल्याणार्थं विनियुङ्क्त इति। अपराधभीतानां तत्पुरस्कारेणैव भगवत्समाश्रयणं सिद्ध्यतीति भावः। तद्घटकतयावस्थित्या तद्द्वारिकया भगवदवाप्तिर्न तदसामर्थ्यं सूचयति, सा तु व्यापारमात्रे सामरस्याद् भर्तृवाल्लभ्यातिरेकात्पत्य एव श्रेयोदाननिमित्तिका, पत्युः पत्न्या अपीति नियमेन प्रतीतेः। आश्रितानुद्दिश्य भगवत्यमोघस्तस्याः पुरुषकारः, तत्प्रीतिपारवश्यादेव तत्सन्निधौ भगवानपराधिनोऽपि दण्डयितुं नोत्सहते, जीवैकपक्षपातिनीयं कस्यापि स्वसमक्षममङ्गलं द्रष्टुं नार्हति। अतस्तथाविधाक्षम्यमपराधं कृत्वापि तच्छिरः पादयोस्तस्य योजयामास जानकीत्युक्तरीत्या जयन्तो रक्षितः, सान्निध्याभावे रावणवालिप्रभृतयो निगृहीताः। इयं कृपैकमती रावणवधानन्तरं तद्वधापरिज्ञाने अविरतापराधा राक्षसीरपि हनुमतश्चित्रवधान्निवार्य रक्षितवतीति रामायणे प्रथितमेव। युक्तं प्राचीकशच्छ्रीगुणरत्नकोशकारः पुरुषकारत्वम्–

> पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने
> हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः।
> किमेतन्निर्दोषः क इह जगतीति त्वमुचितै–
> रुपायैर्विस्मार्य स्वजनयसि माता तदसि नः।।

तयोपायभूतया सहोपेयस्य नित्यान्वयं सूचयति– **अनपायिनीति**। नित्ययोगात्त्रिष्वपि कालेषु पार्थक्यं नेति लीलायां विश्लेषशोकादेरभिनयमात्रत्वं लभ्यते। भगवतः किमपि तदनन्वितं नेति भावः। अन्य उपाय इत्युपायान्तरम्, अविद्यमानमुपायान्तरं येषां **तैरनुपायान्तरैः** शास्त्रोक्तकर्मज्ञानभक्त्याख्यत्रिविधसाधनशून्यैरित्यर्थः। किन्तु श्रीसीतायाः सर्वशेषित्वातिरिक्तं तद्गतं विशेषं तत्स्वभावं प्रभावं तदनुगुणप्रयोगं च ये जानन्ति, तादृशैर्विज्ञैस्तदुपायता तस्या उपायभाव उच्यते, विशिष्य निरूप्यते। यद्वा सैवोपाय इति तदुपायः, ततः स्वार्थे तल् सत्तेतिवत्। उपेयैवोपायाकारेण परिणता घटकभावमाश्रितेत्यहो कारुण्यम्। एतेन तस्या वत्सं प्रति धेनोरिव जिघृक्षापारवश्यं जीवस्य च तदाश्रयणेनैव सकलेष्टसिद्धिर्लभ्यते। प्रणिपातमात्रेण प्रसन्नायास्तस्या उपायतयाश्रयणेन पश्चात्स्वयत्नैरपक्ष्यं सुतरां गम्यते। इत्थं श्रीसीतापुरस्कर–णमनायासशीघ्रसंसारतरणकारणमिति सारः।

**विभोश्च वात्सल्यमहार्णवस्य वै वात्सल्यमिष्टं जनदोषभोगिता।**
**समुच्यते तैर्नृभिरस्वतन्त्रकैः सदा सदाचारपरायणैर्वरैः॥107॥**

..........................................पदपरामर्शः..........................................

*पराम्बायाः श्रीरामवल्लभायाः पुरुषकाराख्यगुणविशेषं संसूच्य तया परिचरित-चरणयुगलस्य तज्जीवातुभूतस्य तद्धृदयेश्वरस्य भगवतः श्रीसाकेतनाथस्याश्रित-सङ्ग्रहणरक्षणोपयुक्तगुणेषु कन्दभूतमवतरणबीजं सौलभ्यौतम्भकत्वेन सर्वातिशायितया वात्सल्यं लक्षणमुखेन निरुच्य तस्य भगवदेकाश्रयत्वमाह-* ***विभोरिति।*** *जनदोषभोगिता वै वात्सल्यम् इष्टमभिमतम्। यज्ञो वै विष्णुः पाङ्क्तो वै यज्ञ इत्यादिषु सामानाधिकरण्येन स्वरूपावधारकवाक्येषु वैनिपातेन लक्षणकथनस्य शास्त्रकृत्प्रकृतिसिद्धत्वात्। न केवलं भगवत्स्वभाववेदिनां वैष्णवानामेवेष्टमपितु तदेकाश्रयस्य भगवतोऽपीति।* ***इष्टशब्दस्याभिमतार्थत्वादेव*** *विभोरित्यादौ षष्ठ्युपपद्यते, क्तस्य च वर्तमान इत्यनुशासनात्। अत्रापि वर्तमानत्वमविवक्षितं तस्य नित्यत्वेन देशकालाद्यपरिच्छेदात्। जनानामाश्रितभक्तानां दोषाणां भोगिता अनादरेण तदुपेक्षणेन तदपसारणेन वाश्रितस्वीकृतित्वरेति। तत्स्वीकारेच्छायां दोषा न प्रतिबन्धकीभूता भवन्ति तानुपेक्ष्य भक्तानाश्लिष्यति वत्सान् वाश्रेव भगवाननुग्रहकातर्येणेति भावः। विदितः सर्वधर्मज्ञः शरणागतवत्सल इत्युक्त्याश्रितेष्वेव तन्नियमनान्न सर्वविषयं तद्वात्सल्यमिति प्रतीयते किन्तु तत्रैव रिपूणामपि वत्सल इत्युक्ते सर्वाविशेषेणेति लभ्यते। अत एवात्र* ***जनशब्दः*** *प्रयुक्तस्तस्य दुर्जनसज्जनेत्यादौ सामान्यतो दर्शनात्। सर्वभूतानामन्तर्यामितया मलिनेऽपि हृदये नित्यमवस्थितत्वात्कथमीश्वरस्य ततो जुगुप्सा स्यादिति अङ्गुष्ठमात्रः*

------------------------------संवित्करः------------------------------

सदाचारनिष्ठ विशेषज्ञों का कथन है कि दोषभोगिता ही भगवान् का वात्सल्य है अर्थात जैसे पिता अपने नालायक पुत्र के अपराधों को यह सोच कर सह लेता है कि मेरे ही पालनपोषण एवं शिक्षा संस्कार देने में कमी रह गयी इसलिये यह विगड़ गया है, ठीक उसी भावना से जगत्पिता भगवान् भक्त के दोषों को सह लेते हैं, उसका बहुत विचार नहीं करते, कभी-कभी तो उनके दोषों का दायित्व अपने ऊपर ले लेते हैं, यही वात्सल्यसागर प्रभु श्रीराम की जनदोषभोगिता है, वात्सल्यगुण है। जैसा कि सनकादिकों के समक्ष भगवान् ने जय-विजय के दोषों को अपने द्वारा किया हुआ अपराध माना है- तद्धीत्यात्मकृतं मन्ये (भागवत- 3.16.4) इसके साथ यह भी समझना चाहिये कि जैसे गाय अपने मलिन बछड़े से घृणा नहीं करती, प्रत्युत उसके विकारों को स्वयं चाट कर दूर करती है, स्वाभाविक अपनेपन के अतिरेक से द्रवित हो दुग्धस्राव से उसका पोषण-पालन एवं पूर्ण सतर्कता से रक्षण भी करती है, वैसे भगवान् अपने अनन्याश्रित भक्तों का।

..............................................पदपरामर्शः..............................................

पुरुषो मध्ये आत्मनि तिष्ठति, ईशानो भूतभव्यस्य न ततो विजुगुप्सत इति श्रुतेः। भगवद्गुणदर्पणे वात्सल्यमुपजीव्य पठिता इमे श्लोकाः–

आश्रितदोषभोक्तृत्वं वात्सल्यमिति केचन।
आश्रितागस्तिरस्कारबुद्धिर्वात्सल्यमित्यपि।।
सुस्निग्धहृदयत्वं यद्दोषरौक्ष्यातिगं निजे।
जने स्यात्तद्धि वात्सल्यं भक्ते प्राणस्य वै हरेः।।
ममतामोहसम्पर्को द्रढीयांस्तनुजादिषु।
यत्पिच्छलमनस्कत्वं विदुर्वात्सल्यमुत्तमाः।।
वत्सः स्नेहगुणस्थेमास्तद्वत्ता वत्सलो हरिः।

क्षमया पृथिवी सम इति भगवत्युक्ताया क्षमायाः परा काष्ठैव वात्सल्यमतो नान्तरीयकतया सा तु सुतरामेवोच्यते। स्थाने **चकारः** पूर्वोक्तार्थेन सह संवादीत्यव्यवहितवक्तव्यत्वाद्भगवतोऽपि वात्सल्यस्येति द्योतयति तत्सजातीयवस्तुगण-समाकलनव्यग्रतां च ध्वनयति। तथाविधवात्सल्यस्य नित्याश्रयमाह **विभोर्वात्सल्य-महार्णवस्येति** पदद्वयेन तत्रापि प्रथमं श्रियो विभुतां संस्थाप्याव्यवधानेन भगवतोऽपि विशेषणद्वारेण तत्त्वमुच्यते– **विभोरिति।** सर्वमूर्तसंयोगिन इत्यर्थः, देशकालाद्यपरिच्छेदेन सर्वत्र स्फूर्तिमुक्त्वा वात्सल्यानुगुणं सामर्थ्यमुक्तं भवति, न ह्येकदेशी वत्सलोऽपि देशान्तरस्थजनदोषनिराकरणे तदङ्गीकरणे तद्रक्षणे वा प्रभवेदिति तादृशस्य तद् न सर्वत्र सफलं भवति। नित्यज्ञानत्वेन सर्वगतत्वेन च भगवतस्तत्सफलं भवति। न प्राकृतो जनो जीवस्य जन्ममरणजरादिदुःखं विज्ञायापि परिहर्तुं शक्नोति, न हि तुषतण्डुलवत्ते दोषाः स्वाल्पश्रमेण शक्यपरिहारा इति भावः। अत उक्तं– स रक्षिता रक्षति यो हि गर्भ इति। गुरवो दीनवत्सला इत्युक्तेः सत्त्वशुद्धेः सामर्थ्यस्य च परिमितत्वेन नित्यशुद्धस्यानन्तसामर्थ्यस्य भगवतश्च तदपरिमेयमित्याह– **वात्सल्यमहार्णवस्येति।** महार्णवकथनेनाश्रितस्य सर्वेऽपि दोषास्तत्र निमंग्ना भवन्तीति ध्वन्यते। वस्तुतोऽन्वर्थतश्च वात्सल्यं भगवत्येव घटतेऽन्यत्र तत्प्रयोगस्तु तद्गुणलेशयोगाद्भाक्त एवेति पद्यपूर्वार्धस्य विवक्षितम्। एवम्भूतवात्सल्यस्य भगवदेकाश्रयताया वक्तरि प्रामाण्यमुच्यते– **समुच्यत** इत्याद्युत्तरार्धेन। **अस्वतन्त्रकै**र्भगवदधीनताप्रत्ययवद्भिः **सदाचारपरायणै**श्शास्त्रविहितकर्मतत्परै**र्वैर्**ज्ञानतो वयसा तपसा च वृद्धत्वाच्छ्रेष्ठै-

पदपरामर्शः

नृभिरिति। इत्थं शास्त्रवश्यत्वबुद्ध्या कर्मनिष्ठा तत्प्रवृत्तिश्च तया च वरत्वमुत्कृष्टतया सर्वमान्यत्वमिति मिथो हेतुपरम्परा, तेन तदुच्यमानस्याविगीतत्वं सूच्यते। **परायण**शब्दादेव नित्यावलम्बत्वप्रतीत्या विभोः सदा वात्सल्यमीष्टमभिमतमित्यर्थसिद्धये सदाशब्दस्य पूर्वार्धेऽन्वय उचितः। यथा लोके माता वात्सल्यात्पुत्रदोषान् अविगणय्य स्निह्यति तच्छरीरगतमलादिकमपसार्योपेक्ष्य वाश्लिष्यति तथा भगवान् शरणागतजीवान् तद्गदोषोपेक्षया तान्निवार्य वा स्वीकर्तुं व्यग्रो भवतीत्याशयः। सर्वदोषनिराकरणस्य तदुपेक्षाया वा सामर्थ्यस्य भगवत्येव सत्त्वाद् वात्सल्यं तन्निष्ठमेवेति भावः।

**दयान्यदुःखस्य निगद्यते बुधैरप्राकृतैस्तैरसहिष्णुता स्मृता।**
**कृपामहाब्धेः समुदारकीर्तेर्विष्णोरचिन्त्याखिलवैभवस्य वै।।108।।**

पदपरामर्शः

स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या भगवत्कल्याणगुणानां स्वाभाविकत्वोक्त्याऽबाध्यत्वमुक्तम्, तेषु दिव्यगुणेषु सर्वापेक्षया भगवद्दयाया एव साधनरहितेषु सद्योऽमोघफलसाधकत्वेनेदमित्थमित्याकारेण तल्लक्षणं निश्चित्य तस्या भगवदेकन्निष्ठत्वं वक्ति- **दयेति**। अप्राकृतैरन्यदुःखस्यासहिष्णुता विष्णोर्दया स्मृतेति बुधैर्निगद्यत इत्येवं मुख्याशयानुरूपपदयोजना। अत्रापि शास्त्रसिद्धं "वै" इति लक्षणाकारं बोधयितुं भिन्नक्रमेणावस्थितम्। अन्यदुःखस्यासहिष्णुता तन्निराकरेणच्छा वै दयेति। परदुःखस्यासहिष्णुतेत्यस्य अन्तर्यामित्वेन सौहार्देन च सद्योद्रवच्चित्तवृत्तितया समर्थत्वात्तन्निवारणेच्छापारवश्यं बोध्यते भक्तदुःखं न सहत इति भावः। अत्र दुःखनिराचिकीर्षातिरिक्तप्रयोजनशून्यत्वमपि योज्यम्, अन्यथा प्रयोजनान्तरसिसाधिषया प्रवृत्तेष्वपि दयालुत्वमापद्येत। आप्तकामपूर्णत्वादिश्रुतिस्मृतिशतैरिच्छाराहित्यं भगवतो गम्यते तथापि तत्राप्तकामशब्द एष्टव्याभावमिच्छाराहित्यं वा न वदति, सर्वमिष्टं प्राप्तमेवेति तत्तात्पर्यात्, पूर्णशब्दोऽपि गुणादिप्राचुर्यमभिधत्ते। भगवान् सर्वदा अप्रतिहतानन्याधीनेच्छावान् भवति, इष्टालाभजन्यं दुःखमपि बद्धस्यैव, नित्यानां

संवित्करः

दिव्य मनीषियों ने दीन जनों के दुखों की असहिष्णुता (सहन न कर पाने) को परमसमर्थ करुणासागर प्रभु की दया माना है, अतः आर्त्तजनों के कष्ट दूर करने हेतु प्रभु दौड़ पड़ते है, जैसे ग्राहग्रस्त एवं असहाय गजेन्द्र की रक्षा के लिये भगवान् दौड़ पड़े थे। यह स्वार्थनिरपेक्ष एवं सर्वेश्वर प्रभु का स्वाभाविक दिव्य गुण है, जो उनके स्वरूप के सर्वथा अनुरूप है।

......................................................पदपरामर्शः......................................................

मुक्तानामीश्वरस्य च कदाचिदपीष्टालाभ एव नेति परदुःखदुःखित्वमिति न दयालक्षणम्। दुःखस्य पापफलतयोश्वरे तत्प्रसक्त्यभावात्, सङ्कल्पसिद्धस्य कार्यजातस्याबाधात् दुःखहेत्वप्रसक्तेश्च। सोऽकामयतेति श्रौती कामना तु तत्र जायत एव। इत्थन्तैर्वाल्मीकिव्यासादिनामभिः प्रथितैरप्राकृतैरलौकिकै रामायणमहाभारत-पुराणादिरचयितृभिर्वेदवैदिकपरिग्रहप्रकर्षादाप्ततमैरन्यदुःखासहिष्णुता दयारूपेण स्मृता लक्षितेति बुधैरर्वाचीनमनीषिभिरपि तदुक्तरीत्या निगद्यते निश्चित्योच्यत इति।

आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः।
राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम्।।

अत्रादिकविनोक्तेषु भगवतष्षड्गुणेष्वानृशंस्यमनुक्रोश इत्यनयोः प्रथमोपादानम-न्यापेक्षयाभ्यर्हितत्वं सूचयति। परदुःखनिराचिकीर्षाऽल्पसत्त्वजीवेषु न युज्यते इत्यत आह- **विष्णोरिति** व्यापकस्य भगवतो रामस्येत्यर्थः। लौकिकदयावतामपि भगवदधीनत्वात्सामर्थ्यतारतम्येनेतरविहितयोः कृपावात्सल्ययोरप्यन्तर्यामितया प्रवर्तकत्वाद्भगवत्कृतत्वमेव। इतरेषु दयासत्त्वेऽपि किं तेन, सर्वत्रोपलब्ध्यभावेन दयनीयं यावद् न गतिः स्यात्तदर्थं दयाकर्तुर्व्याप्तिं वदति- **विष्णोरिति।** विभुत्वेऽपि किं दयया, यदि तस्य दुःखनिराकरणसाधनसम्पत्तिर्न स्यादित्यत आह- **अचिन्त्याखिलवैभवस्य** सकलेश्वर्यसम्पन्नस्येत्यर्थः, एतेनैश्वर्यं प्रकाशितम्, ततः प्रयोजनान्तरनिरपेक्षता सूचिता। किं व्यापकस्यापि दयारहितस्य समृद्ध्येत्याह- **कृपामहाब्धेरिति**, न केवलमयं कृपालुरपितु नित्यापरिमेयकृपाविशिष्टतया महासहृदय इत्युक्तं भवति। महाकृपाब्धित्वेन दयनीयाश्रितदोषवक्तृभिरक्षोभ्यं व्यञ्जितम्- यथा विभीषणशरणागतौ सुग्रीवाद्युक्तमाकर्णयन्नपि भगवान् निष्प्रकम्प एव स्थितोऽन्ते तमनुजग्राहेति प्रसङ्गोऽनुसन्धेयः। दयाब्धित्वाद्दयामुखेनैव भगवतोऽपि यशोलाभ इति भगवन्तं विशिनष्टि- **उदारकीर्तेरिति।** दयाप्रयोगमूला तस्य सुकीर्तिरिति भावः। न हि कृपणस्य समृद्धकोषोऽपि तद्यशसे भवति, वितरणरसिकस्यैव तल्लाभात्। उदारा वदान्या कीर्तिर्यस्य, तस्येति उदारो दातृमहतोरिति कोषादुदारा दात्री कीर्तिर्यस्येति चार्थः। स्वार्थनिरपेक्षप्रचुरदयाप्रयुक्त्या दीनजनरक्षणपालनादितो लब्धस्य यशसोऽपि प्राचुर्यम्। श्रवणादिष्वेकतरस्य समाश्रयणेनापि श्रवणादिकर्त्रे भगवत्स्वरूपज्ञानं तद्प्रतिञ्चोपलम्भयति। न भगवत्येवापितु तत्कीर्तावपि सकलाभीष्टफल-प्रदत्वलक्षणमौदार्यमिति लभ्यते। यथाऽन्यस्मै पुष्पाञ्जलिदानावसरे दातुरप्यञ्जलिना सौरभयोगोऽनीच्छयापि भवत्येव तथैव दयाकरस्योदारदयाप्रयुक्त्या तद्यशः फलत्वेनासाद्यत एवेति भावः।

**स्वीयप्रवृत्तेस्तु निवृत्तिरिष्टो न्यासोऽथ वेद्योऽपि बुधैः सदैव।**
**ऐकान्तिकैस्तत्त्वविचारदक्षैः परात्मनिष्ठैः परमास्तिकैस्तैः।।109।।**

..............................................पदपरामर्शः..............................................

*भूतदयाया धर्माङ्गतया विहितत्वात्साधुजनलक्षणे दयालुत्वादिनिवेशाच्च भगवतो दयैव दयेति तस्यास्तन्मात्रवृत्तित्वकथनमयुक्तम्, तदर्थं सर्वेश्वरस्य परदुःखासहिष्णुताख्यदयालक्षणे यत्प्रकारीभूतं स्वार्थनिरपेक्षत्वं निवेशितम्, तल्लक्षणलक्षिताया अपि दयायाः सर्वसज्जनहृदयवृत्तितया भगवतः को विशेषः? न हि तत्र दयासत्त्वमेव संसारसन्तरणहेतुः, तथात्वे तत्र दयाया नित्यत्वाद्युगपत्सर्वोद्धारः स्यात्, न चेह क्वचिद्दुःखयोगः श्रूयेत। किं भगवान् निरपेक्षरक्षको भूत्वा साधनशून्यमपि रक्षति, स कथं सहृदयोऽप्यस्मिन्नर्थे विमन्येत, अन्यथा किन्तस्य तादृश्यापि दयया? इत्थमाशङ्क्य प्रोच्यते- सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन् संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते। भगवन्मां नूनं रक्षिष्यतीति गोप्तृत्वेन महाविश्वासपूर्वकं स्वाभिप्रायनिवेदनेन सहात्मात्मीयभरार्पणरूपात्मनिक्षेपमात्रेण तादृशस्योपायान्तरशून्यस्यापि सकलेष्टसिद्धिर्भवतीति बोधयितुं न्यासाख्यस्य ब्रह्मविद्याविशेषस्य बुधजनवेद्यत्वोक्त्या लक्षणं प्रस्तौति-* ***स्वीयप्रवृत्तेरिति।*** *स्वीयप्रवृत्तेर्निवृत्तिर्न्यास इष्ट इति भावः। न्यासः प्रपत्तिश्शरणागतिरित्यनर्थान्तरम्। निक्षिप्यासनं न्यासः, निक्षेपस्य कर्मणोऽवधेरुद्देश्यस्य चापेक्षणात्सर्वधर्मान् परित्यज्येत्यवधिरुच्यते मामेकमित्युद्देश्यम्, प्रत्यासत्या जीवात्मनश्च कर्मत्वम्। तदित्थं सर्वधर्मावधिको भगवदुद्देश्यकः स्वात्मकर्मको निक्षेपो न्यास इति फलति।*

------------------------------संवित्करः------------------------------

भगवत्प्राप्ति के लिये शास्त्रप्रोक्त भक्ति आदि साधनों में उपायबुद्धि से प्रवृत्ति नहीं करना ही न्यासविद्या (प्रपत्ति या शरणागति) है, जो तत्त्वविचारक भगवन्निष्ठ ऐकान्तिक वैष्णवजनों द्वारा सर्वथा जानने योग्य है। अर्थात् अपने भरणपोषण के लिये प्रवृत्ति नहीं करना मात्र ही न्यास नहीं है, इसमें आत्मकल्याणार्थ कर्मयोग, ज्ञानयोग, भक्तियोग जैसे मुक्ति के साधनों में भी उपायबुद्धिका सर्वथा परित्याग कर केवल भगवान् में ही सुस्थिर उपायबुद्धि की जाती है। इस प्रकार अन्य अवलम्बनका त्यागकर ''भगवान् मेरा रक्षण अवश्य करेगें'' इस महाविश्वास के साथ पूर्णतः भगवदाश्रित हो अपनी रक्षाकी याचना ही न्यास है (वस्तुतः प्रपत्ति के विशेषरहस्य को परमैकान्तिक वैष्णवाचार्य से ही प्राप्त करना चाहिये)।

..........................................................**पदपरामर्शः**..........................................................

भक्तिप्रपत्त्योरुद्देश्यस्यैक्येऽपि भक्तेरपेक्षया न्यासस्य भगवान् श्रीराम एवोपायः स्वप्राप्ताविति महाविश्वासपूर्वकं यदनन्योपायत्वं तदेव विशेषः। यथोक्तम्–

अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः।
त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः।।
अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।
तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिः।।

इत्युक्तभावनया गोप्तारं भगवन्तं प्रपित्सोरुपायान्तरनिवृत्त्या भगवति निरपेक्षरक्षकत्वमनुसंहितं भवति, अत्र प्रपद्यमानेन स्वस्य निरुपायत्वमेव पुरस्कार्यम्, अन्ते च प्रपत्तौ तूपायबुद्धिरपि निवर्तनीया। तदेवात्र विशदयति– **स्वीयप्रवृत्तेस्तु निवृत्तिरिति।** नात्र सर्वव्यापारोपरामोऽपेक्ष्यते, न हि कश्चिदपि प्रपन्नोऽत्यन्तनिर्व्यापारो दृष्टः श्रुतो वा। अतो भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तेर्निवृत्तिर्न तु स्वीयसर्वप्रवृत्ति-निवृत्तिरिष्टा। भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिश्च स्वरक्षणार्थं स्वातन्त्र्येण स्वव्यापार-पुरुषान्तराश्रयणं, दुःसहापचारादिकं वा, अतस्तस्या निवृत्तिरेव न्यासः प्रोच्यत इति भावः। इत्थम्भूतो न्यासोऽपि साधनान्तरवद् बुधैः सदैव वेद्योऽस्तीति निरूप्यते– श्रुतिप्रमाणकोऽयं न्यासः, मुमुक्षुर्वै शरणमहं प्रपद्ये, तस्मादपि वध्यं प्रपन्नं विरथं न प्रतियच्छन्तीत्यादिश्रुतेरपारकारुण्यजलधेरीश्वरस्य प्रपन्नसंरक्षणं लभ्यते, प्रपदनविधि-वाक्यान्तरमप्युनुसृत्य भगवत्प्रपदनं रक्षणाय भवतीति बोध्यते। स्वतः सर्वज्ञेन भगवता निखिलजगदुद्धरणाय प्रणीते पाञ्चरात्रशास्त्रेऽस्य प्रतिपादनात्, सकृदेव प्रपन्नायेत्यत्राप्यभयप्राप्तिकामो मां प्रपद्येतेति वाक्यतात्पर्यस्य सिद्धत्वात्, प्रपत्तिसञ्ज्ञकः शीघ्रलाभहेतुको निष्प्रमादः स्वाभिमतफलोदयोऽयं न्यास इति सिद्ध्यति। भक्त्या त्वनन्या शक्य इति गीताविरोधपरिहाराय न्यासविद्याया भक्तिविशेषत्वस्वीकारे न क्षतिः, यत्र भक्तिरुपाय इति भक्तावुपायधिया क्रियमाणा भक्तिरुपायभक्तिः, यत्र भगवानेव स्वप्राप्तावुपाय इति धीः सैव साध्यभक्तिरिति व्याख्यातुं शक्यत्वात्। भक्तिवत्प्रपत्तेरपि ज्ञानविशेषतया नान्यः पन्थाः विद्यतेऽयनायेति श्रुतेरविरोधः। यथोपनिषत्प्रतिपदितासु ब्रह्मविद्यासु प्रत्येकपर्याप्त्या एकस्या अप्यनुष्ठानं स्वातन्त्र्येण भवति तथैवायमपि ब्रह्मप्राप्तिरूपफलावाप्तौ क्षमत्वादभिमतफलसाधनाय न भक्तियोगादिविद्यान्तरैर्न समुच्चीयते अस्यापीतरानपेक्षत्वात्। यां शरणागतिं विधाय भक्तिनिष्ठा भक्तियोग-

**पदपरामर्शः**

मनुतिष्ठन्ति सा भक्त्यङ्गभूता शरणागतिरतो भिन्नैव, या च मोक्षार्थ स्वतन्त्रतयानुष्ठीयते तत्र न कस्यापि समुच्चय इति भावः। अनुष्ठानसाम्येऽपि न्यासो भगवत्प्राप्तिविरोधिपापनिर्वर्हणार्थः, भक्तिश्च भक्तिविरोधिपापनिर्वर्हणार्थेति फलाभिसन्धिभेदान्मिथो भिद्यते। अङ्गिप्रपत्तावुपायस्थाने भक्तिरेवोपदिश्यते। भक्त्यापि भगवत्कृपैवोत्ताम्यते, सा चाकिञ्चने प्रपन्ने स्वयमेवोपतिष्ठते, अत्र भक्तिसाध्यां तामीश्वरस्वभाव एव निर्वर्तयतीति विशेषः।

न्यासविद्याया अपि भक्तिविशेषत्वात्कथं सा भिद्यते, तत्रोच्यते भक्तियोगस्य यावज्जीवमहरहरसकृदावृत्तिर्भवति, न्यासस्य च जीवने सकृदनुष्ठानम्। भक्तियोगो वर्णाश्रमधर्मानुष्ठानमपेक्षते न्यासस्तु न , अयन्तु भक्तियोगमपि नापेक्षते। मोक्षरूपं फलमुभयोः समानमिति तत्कथं सरलं न्यासं विहाय कठिने भक्तियोगे प्रवृत्तिः स्यादिति कठिनत्वाद्वैयर्थ्यं प्रसज्येत। यद्यपि भक्तेरसकृदनुष्ठेयतया वर्णाश्रमधर्मसापेक्षत्वात्काठिन्यं न्यासस्य च सकृद्विधानंरूपसौकर्यं प्रतीयते, तथापि न्यासेऽपेक्ष्यमाणमहाविश्वासोऽतिकठिनः, भक्तिस्तु न तमपेक्षत इत्येकांशेन सरला। इत्थं न्यास एकतः सुकरोऽपरतो दुष्कर इत्युच्यते। यद्यपि भक्तिन्यासयोर्निषिद्धत्यागादेः साम्यम्, नित्यनैमित्तिकयोर्विधानं काम्यकर्मणान्तु स्वरूपत एव परित्यागो भवति। यद्यपि नित्यनैमित्तिकयोरुपायभक्तेरङ्गतया तयोरपि परित्यागो युज्यते तथापि विहितत्वाच्चाश्रमकर्मापीति सूत्रोक्त्या तदनुष्ठेयता।

आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।<br>
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणन्तथा।<br>
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः।

इत्यत्रात्मनिक्षेपोऽङ्गी पञ्चाङ्गयुक्तो न्यास इति भावः। अत्र न्यासस्य भक्त्याऽगतार्थतासूचकं तथ्यमाविष्कर्तुम् आर्तप्रपन्नस्य प्रारब्धनाशोऽपि वर्ण्यते, परन्तु तत्र श्रुतिः प्रमाणमन्विष्यते, भागवते भगवद्विरहार्त्तगोपिकाया सद्यो देहत्यागवर्णनात्तदर्थे प्रमाणं वक्तुं शक्यते–

तमेव परमात्मानं जारबुद्ध्यापि सङ्गता।<br>
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः॥

........................................................पदपरामर्शः........................................................

*प्रारब्धे शरीरस्थितिरेव मानमत्र तदनन्यायाश्चरमशरीरनाशेन प्रारब्धोऽपि नष्ट इति तट्टीकाकर्तृव्याख्यानाल्लभ्यते। इत्थमनन्यसाध्यस्वाभीष्टसाधनसमर्थवशीकरणं न्यास इति लक्षणं पर्यवसीयते। पूर्वार्धेन न्यासलक्षणं तस्य बुधजनवेद्यताञ्च प्रकाश्योत्तरार्धेन तादृशान् विद्याविशेषजिज्ञासून् अर्हतासूचकविशेषणैः परिगणयति-* ***ऐकान्तिकैरि****त्यादि। एतेनास्य दुर्वेद्यत्वं सूचितम्। न्यासरहस्यावगतौ न केवलं प्रशस्तबुद्ध्यैवालम् अपितु न्यायादिशास्त्राभ्यासनिशितप्रज्ञयैव तदर्थाधिगम इत्याह-* ***तत्त्वविचारदक्षैरि****ति प्रामाण्यकोटिमाटीकमानैस्तर्ककर्कशपरीक्षणक्षमैरित्यर्थः, एतेन प्रगुणीकृतव्युत्पत्तिपाटवं सूचितम्। न तादृशैरपि वेद्यः, गुरुवेदान्तवाक्येषु श्रद्धापेक्ष्यते, तदाह-* ***परमास्तिकैः****, वेदादिशास्त्रेषु विशिष्य नारदपाञ्चरात्राद्यागमेषु स्वाचार्यपरम्परायां प्रामाण्यबुद्धिं दधानैरित्यर्थस्तेन श्रद्धासम्पदुक्ता, तत्रापि श्रद्धानुगुणसदाचाररूपा परमात्मनि निष्ठापेक्ष्यते इत्यत आह-* ***परमात्मनिष्ठैः****, परमात्मनि भगवति श्रीरामे निष्ठांनुरक्तिर्येषान्तैरित्यर्थः। एतेन चित्तशुद्धिः प्रकाश्यते, भक्तावप्येक्षितमनन्यत्वमुच्यते-* ***ऐकान्तिकैरिति*** *अनन्यदेवताकैरनन्यप्रयोजनकैरनुरक्तभक्तैरिति। तादृशैरेव न्यासो यथावस्थिताकारेण वेद्यत इति भावः। अत्रत्योऽतिसूक्ष्मो विशेषो यथासम्प्रदायमेवानुसन्धेयः। अत उक्तम्- सूक्ष्मः परमदुर्ज्ञेयस्सतां धर्मः प्लवङ्गमेति। अत्र न्यासस्य स्वरूपानुपपत्तिः, लक्षणानुपपत्तिः अनुष्ठानानुपपत्तिः विध्युनुपपत्तिरित्यनुपपत्तिचतुष्ट्यं निषेधैक्याशक्त्यख्यातिसम्प्रदायविरोधादिभञ्जनं समाधानपूर्वकं विज्ञायैव यथार्थबोधः संभव इति भावः।*

**सर्वे प्रपत्तेरधिकारिणः <u>सदा</u>[1] शक्ता अशक्ता पदयोर्जगत्प्रभोः।**
**अपेक्ष्यते तत्र कुलं बलं च नो न चापि कालो न च शुद्धतापि वै॥110॥**

........................................................पदपरामर्शः........................................................

*यथाशास्त्रं न्यासाख्यप्रपत्तिस्वरूपमुक्त्वोपायान्तरापेक्षयाऽस्याः सुकरत्वमनुसन्धाय*

--------------------------------संवित्करः--------------------------------

भगवान् श्रीरामजी की शरणागति में सभी का अधिकार है,चाहे वह समर्थ हो या असमर्थ। क्योंकि अत्यन्त कृपालु परमप्रभुश्रीराम की चरण शरण ग्रहण करने में उत्तमकुल, विद्याधन आदि का बल, उचितसमय तथा किसीप्रकार शुद्धि आदि की अपेक्षा नहीं होती है। अतः जीवमात्र भगवत्प्रपत्ति का अधिकारी है।

---

[1] पा. भे.- मताः।

..................................................पदपरामर्शः..................................................

प्रपित्सुप्रवृत्तये प्रथममधिकारित्वनिश्चयस्यावश्यकतया सामर्थ्याद्युपेक्षयाऽर्थित्वमात्रस्यै-वाधिकारित्वमाह- **सर्व** इति। सर्वाविशेषेणेत्यर्थः। पुरुषेच्छाधीनप्रवृतिर्हि पुरुषार्थो भवति यथा फलं तदुपायो वा, शश्वदानन्दे भगवति कस्यार्थिता न स्यात् किन्तु यथा ब्रह्मविद्यायामर्थित्वेऽपि संस्कारपरामर्शापेक्षयाच्छास्त्रकृतसामर्थ्याभावान्न शूद्रस्याधिकार-स्तथात्र न। इतिकर्तव्यतासु प्रवृत्तिर्विधिपराधीना भवति, अत्र तु वध्यं प्रपन्नं न प्रतियच्छन्तीत्यत्र जीवसामान्यमुद्दिश्य विधानान्न सामर्थ्यमपेक्ष्यते। अत उक्तम्- **शक्ता अशक्ता** इति। अशक्तानामेवाधिकारित्वे शास्त्रकृतसामर्थ्यं दधानानां तत्र प्रवृतिर्न स्यादिति शक्ताशक्तसामान्यस्याधिकारो निर्दिश्यते। अतश्च सर्वलोकशरण्याय राघवाय महात्मने, इत्यादावापामरजीवराशिबोधकतया प्रयुक्तं सर्वपदं सङ्गच्छते। रक्षापेक्षामेव प्रतीक्षमाणस्य पुरस्तात्प्राप्तिमात्रमपेक्षितं न त्वर्चनस्तवादिकमपीति बोध्यते। **सर्वेऽधिकारिण** इति कथनेन अपि शत्रुं परन्तप स दुष्टोऽप्यदुष्टो वेत्युक्त्या निर्दोषत्वं न प्रपत्तौ हेतुरुक्तः। मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चनेत्यत्रापि मित्रभावश्शरणागतत्वम्, विदितः सर्वधर्मज्ञः शरणागतवत्सल इत्युपक्रम्य तेन ते मैत्री भवत्वित्युपसंहृतेन तत्रैव परिसमाप्तिदर्शनात्। यद्वा मित्रत्वात्सर्वस्य शरणं सुहृदित्यनुसन्धाय महाविश्वासेनेत्यर्थः। अत एव वधार्हमपि काकुत्स्थः कृपया पर्यपालयदिति सङ्गच्छते। आशालेशमात्रेणापि सम्प्राप्तस्य, वास्तवमित्रत्वाभावेऽपि मित्रत्वाभिनयमात्रेणापि वा सम्प्राप्तस्य सर्वदेशसर्वकालसर्वावस्थासु परित्यागानर्हत्वं विमृश्यं प्रपत्तौ सर्वाधिकारतोक्ता। यद्वा यथा सत्यवचनादौ सर्वाधिकारः, वर्णाश्रमवेदवेदाङ्गप्रयुक्तादिनियमाभावेन येन केनापि कर्त्तव्यत्वबोधनात् तथैव प्रपत्तावपीति लभ्यते। प्रपदनं हि आस्त्रीबालपण्डितमाब्राह्मणश्वपाकं सुकरं शास्त्रीयञ्चेति विवक्षितम्, सामान्यशास्त्रस्याप्यत्र निरपवादत्वात्। अत्रायं शास्त्रीयो विमर्शः- सकृदेवेति चरममन्त्रे चकारबलात्केचन वाक्यभेदं प्रकल्प्य व्याख्यान्ति- सर्वभूतेभ्य इति चतुर्थी, पञ्चमीपक्षे तु कारकविभक्तिसम्भावनायामुपपद-विभक्त्याश्रयणममर्षणीयम्, भीत्रार्थानां भयहेतुरित्यनेन हेतौ पञ्चमीविधानात्तस्य च व्यापारनिर्व्यापारसाधारणतया प्रधानक्रियानियतत्वाभावेन तस्या उपपदविभक्तित्वमेव, किञ्च पञ्चमीपक्षे भीत्यर्थकपदानुपादानात्तदर्थस्याक्षेपादुपसर्जनान्वयरूपोऽपरो दोषः। अतः केचन सर्वभूतेभ्य इति चतुर्थी व्याचक्षते, तेन प्रपत्तेः सर्वाधिकारत्वं लभ्यते।

........................................................पदपरामर्शः........................................................

*प्रपन्नाय सर्वभूतेभ्यः इत्यत्रैकवचनबहुवचनयोः समानाधिकरण्यासंभवाद् गोवलीवर्दन्यायेन सर्वभूतेभ्य इत्यस्य प्रपन्नेतरविषयत्वन्तु नेष्टं, प्रपन्नेतरेषामभयप्रदानस्य शास्त्रविरुद्धत्वात्। अतः प्रपन्नायाभयं ददामि तच्च सर्वभूतेभ्य इति वाक्यभेदः सोढव्यः प्रपन्नायाभयदानं सिद्धं कृत्वा तदनुवादेन सर्वभूतेभ्य इति न केवलमनपकारिभ्यः सुग्रीवविभीषणादिभ्यः, अपितु आर्द्रापराधेभ्यो रावणजयन्तादिभ्योऽपीत्युक्तं भवति। अत एव स्वयमुच्यते भगवता–*

आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया।
विभीषणो वा सुग्रीव यदि वा रावणः स्वयम्।।

*जगत्प्रभोः श्रीरामस्य पदयोः प्रपत्तेः सर्वाधिकारत्वमेव विशदयति–* ***अपेक्ष्यते तत्रेत्यादिना। जगत्प्रभोरित्यनेन*** *स्वेतरसर्वचेतनाचेतननिरुपाधिकस्वामित्वमुच्यते,* ***प्रभुपदेन*** *चानितरचेतनप्रेर्यत्वं द्योत्यते, यथोक्तं ब्रह्मणा रामायणे– त्वं त्रयाणां हि लोकानामादिकर्त्ता स्वयंप्रभुरिति।* ***पदयोरित्यस्य*** *शुभाश्रययोरुपायतयाकैङ्कर्योद्देश्यतया च फलभूतयोरित्यर्थः, प्राप्यतया चरमावधित्वं द्योत्यते। निषेधार्थनिपातस्य त्रिःप्रयोगात्साधनापरिग्रहे महाभिसन्धिः प्रकाश्यते। कुलादिकस्य नामग्राहमेकैकस्य निषेधादेकस्याप्युपायभावेनाश्रये प्रपत्तेरसिद्धिर्ध्वन्यते। भक्त्याद्यपेक्षया न्यासाख्ये विशेषं निर्देष्टुमाह–* ***तत्रेति। कुलं,*** *पुण्यजन्यं सत्कुलप्रसूतत्वं नापेक्ष्यते। वंशशुद्धिराभिजात्यादिकमिति कुलशब्देनान्येऽप्यर्थाः सन्निधाप्यन्ते–*

आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम्।
निष्ठा वृत्तिस्तपो दानं नवधा कुललक्षणम्।।

*नायमात्मा बलहीनेन लभ्य इति श्रुत्यापेक्ष्यमाणबलस्याप्यत्र नापेक्षेत्याह–* ***बलमिति।*** *बलमत्र साधनं तदाश्रयणप्रयुक्तसम्पन्नताधीर्वा। शास्त्रेषु भगवत्प्राप्तौ सदुपायतयोक्ता कर्मज्ञानभक्तिशब्दवाच्याः, तत्परिग्रहस्यात्यन्ताभावो लक्ष्यते। धनबलं बाहुबलं तपोबलं सिद्धिबलं बुद्धिबलमित्यादेस्तत्रानुपयोगात् प्रपन्नानां बलं हरिरित्यर्थानुस्मृत्या।*
*यथोक्तं भागवते श्रीप्रह्लादेन–*

मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजः प्रभावबलपौरुषबुद्धियोगाः।
नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय।।

..........पदपरामर्शः..........

नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता
न दानं न तपो नेज्या न शौचं न व्रतानि च
प्रीयतेऽमलया भक्त्या हरिन्यद् विडम्बनम्।।

दर्शपूर्णमासादिवत् तिथिनक्षत्रपक्षर्तुहायनादिकालनियमोऽत्र नास्तीत्याह- **न चापि काल** इति। यथा समर्थ कारुणिकमुद्दिधीर्षु विलोक्य पङ्कपतितः स्वोद्धाराय न मुहूर्त्तं प्रतीक्षते, सर्वतः प्रसृतदावाग्निमध्यात् दन्दह्यमानो जीवोऽमृतसरोवरं प्रवेष्टुं न कालं शोधयति, तथैवात्यन्तभयावहसंसारात्तितीर्षुर्भगवत्प्रपदन इति भावः। सर्वदा प्रपन्नसंरक्षणदीक्षितस्य प्रपत्तौ सार्वकालिकत्वात्कालविशेषप्रतीक्षणविलम्बाभावं संसूच्य यदेच्छा तदैव कर्तुं शक्यतया सौकर्य प्रकाशितम्। वस्तुतः कालशब्दो देशावस्थादेरप्युपलक्षणम्, तेन जातपुत्रः कृष्णकेशोऽग्नीनादधीतेतिवत् कृष्णकेशाद्यवस्थानियमाभावो बोधितः। **नात्र शुद्धतापेक्ष्यते,** शुद्धता, शौचमित्यर्थः, अर्थाशुचिता-भावाशुचितादिदोषसद्भावेऽपि प्रपत्तिर्न प्रतिबध्यते। न हि ज्ञानेन सदृशं पवित्रमिह विद्यत इति ज्ञानयोगः शुचिता, अज्ञानञ्च पापयोगं वदति, सर्वपापेभ्यो मोक्षयिष्यामीति वक्तुर्भगवतः समक्षं तस्य कियन्मूल्यमिति भावः। इत्थं सर्वाधिकारायाः प्रपत्तेरपि सार्वकालिकत्वं द्योतयितुमाह- **सदेति।** अनुरूपमेवाह श्रीहनुमान् भगवद्रामस्वभावनिरूपणे भागवते-

न जन्म नूनं महतो न सौभगं न वाङ्न बुद्धिर्नाकृतिस्तोषहेतुः।
तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये वत लक्ष्मणाग्रजः।।

**धर्मत्यागोऽपि परमैकान्तिकैरुच्यते वरैः।**
**इत्थं हि कर्मणां त्यागः स्वरूपस्याखिलस्य च ।।111।।**

..........पदपरामर्शः..........

तत्त्वहितावेदकतया मातापितृसहस्रेभ्योऽपि वत्सलतराणामुपनिषदां सारभूताया गीताया

----------संवित्करः----------

कर्मजन्य स्वर्गादि फल का त्याग, फलसाधक होने से अपने कर्म के प्रति ममता का त्याग तथा ईश्वर में कर्तृत्व का अनुसन्धान करते हुए अपने कर्तृत्व का त्याग, ये त्रिविध परित्याग ही वस्तुतः कर्म का स्वरूपतः शास्त्रीय त्याग है। अतः मुमुक्षु वैष्णवों के द्वारा कर्तृत्वाभिमानत्यागपूर्वक कर्म एवं समस्त कर्मफलों की वासना के त्याग को ही धर्मत्याग कहा गया है, क्योंकि भगवदाज्ञारूप होने से शास्त्रविहित नित्यनैमित्तिक कर्म का परित्याग विवक्षित नहीं है।

..................................................पदपरामर्शः..................................................

अपि यत्रार्थे परिसमाप्तिः, यद्रहस्याविष्करणे प्रतिसम्प्रदायं स्वस्वोत्प्रेक्षावशंवदानामाचार्याणां बद्धपरिकर इव सन्नाहो दृश्यते, प्रपत्तिसिद्धान्तस्योत्तम्भकत्वाद् वैष्णवाचार्याणां जीवातुभूतमिव यद्भगवद्वचनम्, यत्र गुह्याद्गुह्यतमत्वाच्छास्त्रं पर्यवसन्नम्, तदस्ति सर्वधर्मान् परित्यज्येति शास्त्रसारोपलम्भकं पद्यम्। तत्र पूर्वार्धस्य प्रथमपादे ल्यबन्तान्ते यच्छरणव्रजनात्पूर्वकालसम्पाद्यं समानकर्तृकं सर्वधर्मकर्मकपरित्यजनमुक्तम्, तत्रेदं जिज्ञास्यं यन्नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः, विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति स इति दुर्गतिप्रतिपादनेन धर्मत्यागस्य निन्दितत्वात् स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति परिगृहीतधर्मस्य भयनिवर्तकत्वेन प्रशंसनाच्च धर्मसंस्थापनार्थाय संभवामि युगे युगे इति वक्तुरपि यथोक्तिर्नूनं किञ्चिन्निगूढाशयं निदिर्शति। तद्भगवदभिप्रेतं किमिति यथासम्प्रदायं सिद्धान्तयति- **धर्मत्यागोऽपीति।** यथा निरुपायत्वमेव, रक्षिष्यतीति महाविश्वास एव च प्रपत्तावधिकारित्वाधायकं तत्त्वमितीत्थं प्रतिपादितं तथैव धर्मत्यागस्य विवेच्यतां सङ्गृह्णाति। **अपिना** समानस्थलकत्वात्प्रसक्तिं सूचयति। वरैः परमैकान्तिकैः कर्मणामखिलस्य स्वरूपस्य त्याग एव धर्मत्याग उच्यते इति पदान्वयः। परम एकान्तोऽनन्यत्वमेषां तैर्भगवदायत्तजीवनैरित्यर्थः येषाञ्जीवने फलान्तरसङ्गरूपाऽन्तरायोपहतिर्नास्ति तादृशैः सततं भगवन्तमेव ध्यायद्भिरत एव वरैः सर्वथा श्रेष्ठैरुच्यते, तेन तद्यथार्थावधारणे प्रामाण्यमिति भावः। अत्र सकलधर्माधर्मरूपसर्वकर्मपरित्याग इति नैष्कर्म्याभिनिवेशिभिः शङ्कराचार्यैरुक्तम्, तदाशयमनुधावद्भिर्मधुसूदनप्रभृतिभिश्च कर्मणामन्यसापेक्षतया भगवदनुग्रहस्यान्यनिरपेक्षतया च तत्रानादरेण कर्मभ्यो निवारणमेव धर्मपरित्यागतया विवेचितमिति। वस्तुतोऽत्र सर्वधर्माणां यः परित्यागः कथितः स शास्त्रीयो न तु शङ्कराचार्यप्रभृतिभिर्व्याख्यातो लोकसामान्यः। त्रयोऽपि कर्मज्ञानभक्तियोगा भगवत्प्राप्तिसाधनभूताः विहितत्वादेषां भगवदाज्ञाधिया यथाधिकारं परिपालनन्तु तत्प्रसादजनकं तदाराधानमेवेति ये स्वरूपत एव तदाज्ञामुपेक्षन्ते ते तामसा इत्युक्त्वा तादृशपरित्यागस्य निन्दनं दृश्यते। अतो यथाधिकारं क्रियमाणेषु वैदिककर्मसु फलपरित्यागः, कर्मपरित्यागः कर्तृत्वपरित्यागश्चेति त्रिविधत्याग एवात्र शास्त्रीयः परित्यागः। कर्मजन्यं फलं स्वर्गादिकमहं न लभेयेति फलत्यागः यत्कर्म यदीयफलं साधयति तत्तस्य कर्म मन्यते,

.......................................................पदपरामर्शः.......................................................

*अतो ममेदं कर्मेत्याकाराया कर्मविषयण्यिा ममतायाः परित्यागः कर्मपरित्यागः, परमहितैषी भगवान् अन्तर्यामितया सामर्थ्यादिप्रदानेन प्रेरणया च तदधीनेन मया कारयतीति स एव वस्तुतः कर्त्तेत्यनुसन्धानेन स्वस्य कर्तृतापरित्यागः। अतो भगवान् पूर्वमेव त्रिविधं त्यागमुक्त्वा फलादित्यागस्य सात्त्विकत्वमजीगणत्, किञ्च कर्मफलत्यागिनमेव यथार्थत्यागिनं निरधारयत्। इत्थं क्रियमाणकर्मसु फलसङ्ग-कर्तृत्वाभिमानादित्याग एव शास्त्रीयः परित्यागः, स एव चात्र विवक्षितः, देहधारणायापेक्ष्यमाणानामशनपानादीनां कर्मणान्त्ववर्जनीयत्वमिति न तत्परित्यागः। यद्वा भक्तियोगसिद्धये तदारम्भविरोधिपापानामपरिमेयतया तदपेक्षया तत्प्रायश्चित्तरूपधर्मा अपि दुरनुष्ठेया भवन्ति, अतस्तादृशान् प्रायश्चित्तरूपधर्मान् परित्यज्य मामेकं प्रपद्यस्व, अहं सर्वपापेभ्यो मोक्षयिष्यामीत्याशयः फलति। अयमेव च कर्मणामखिलस्य स्वरूपस्य त्यागो धर्मत्यागत्वेन वैष्णवैर्निरूप्यत इति भावः। यथोक्तम्-*

*प्रपत्तौ भक्तिवन्नास्ति तद्धर्मान्तरङ्गता।*
*इति बोधयितुं तत्तत्यागोक्तिरिह युज्यते।।*
*न चान्यानङ्गतामात्रादननुष्ठानसंभवः।*
*स्वतन्त्रविधिसिद्धत्वादन्यथातिप्रसङ्गतः।।*

**अथोपायान्तराण्येव प्रवदन्ति मनीषिणः।**
**विरोधीति[1] प्रपत्तेस्तु सम्बन्धज्ञानकोविदाः।।112।।**

.......................................................पदपरामर्शः.......................................................

*पूर्वोक्ता भगवदेकाश्रया तदवाप्तावमोघा प्रपत्तिर्निरन्तराया समनुष्ठितास्तु, मा भूदत्र वैगुण्यसंसर्गलेशोऽपीति समपेक्षितसुदृढलक्षणसम्पुष्ट्यै निष्कम्पतावेक्षणोपयुक्तं तस्याः स्वरूपनाश-विरोधि-वस्तुनिर्देशेन प्रपन्नपात्रताभङ्गाद् वारयति-* ***अथो-***

----------------------------------संवित्करः----------------------------------

विद्वज्जनों का कहना है कि प्रपत्ति में किसी भी अन्य साधन का अनुष्ठान अन्धकार-प्रकाश के समान परस्पर विरोधी है। अतः यहाँ मोक्ष के मुख्यसाधनभूत श्रीभगवान् के अतिरिक्त अन्य उपाय (ज्ञान कर्म भक्ति) का साधनबुद्धि से आश्रयण कर कल्याण की कामना को शरणागति की सिद्धि में प्रतिबन्धक मानते हैं। महाविश्वासवाली प्रपत्ति एवं उपायान्तर का अवलम्बन ये दोनों एक साथ नहीं रह सकते हैं। अर्थात् इन उपायान्तरों का आश्रय प्रपत्ति का विरोधी है।

---

[1] पा. भे.- विरोधिनि।

........................................................पदपरामर्शः........................................................

**पायान्तराण्येवेति।** अथ सम्बन्धज्ञानकोविदा मनीषिण उपायान्तराण्येव तु प्रपत्तेर्विरोधीति प्रवदन्तीति पदयोजना। प्रपत्तौ स्वप्राप्तौ भगवानेवोपायः, अत्र तमतिरिच्य प्रपत्तावप्युपायधीर्न भवति। तत्र शास्त्रेषु यानि कर्मज्ञानभक्तियोगरूपाणि त्रीणि साधनानि मोक्षोपायत्वेन निर्दिष्टानि, तानि प्रपत्त्यपेक्षयोपायान्तराण्युक्तानि, तान्येवात्र प्रपत्तेर्विरोधित्वेन प्रपत्तिरहस्यज्ञा विशिष्टाद्वैतिनो निरूपयन्ति। उपायान्तराश्रयण-मन्यथालाभबुद्धिं गोचरयति। साध्यातिरिक्तसाधनान्तरानपेक्षा प्रपत्तिः कथमपि साधनान्तरयोगं न सहते, अनन्योपायनियतायास्तस्या अन्योपायवद्वृत्या सह विरोधस्य स्वाभाविकत्वात्। वस्तुतोऽत्रान्योपायाश्रयणं भगवान् निरपेक्षरक्षक स एव म उपाय इति व्यवसायस्य प्रकृत्यैव **विरोधि।** पर्याप्त्या प्रपत्तिः केनापि सह साङ्कर्यं न सहते परिपूर्णसाधनत्वादनन्याधीनत्वाच्च। नात्र साध्यसिद्धौ संशयः, न च शीघ्रसाधकत्वे सुसम्पाद्यत्वे सौकर्ये वा सन्देहः। एवं साधनान्तराश्रयणं स्वरूपाद् भ्रंशयति। यत्र भगवानेवोपायस्तत्र तदतिरिच्याऽन्यस्य कस्यापि साधनबुद्ध्याश्रयणं सर्वथानौचित्यात्, सङ्कल्पप्रतीत्योर्भ्रंशेन स्वरूपप्रच्युतेश्चानन्योपायत्वरूपं लक्षणमेव प्रतिबन्धातीति लभ्यते। तादृशविरुद्धस्वभावयोरेकत्र समावेशाभावात्सहानवस्थानरूपस्य विरोधस्य जागरूकत्वात्। अत्रायमाशयः- यदि प्रपन्नगता भक्तिः प्रपत्त्यविच्छेदस्य हेतुर्भवति, तदा तदनुप्रवेशेऽपि न क्षतिः, भक्तेर्हि केवलमुपायत्वमेव न, अपितु फलरूपतयोपेयत्वमपि। अतोऽत्रापि ज्ञानपूर्त्या ह्यनन्योपायत्वं भक्तिपूर्त्या चानन्यप्रयोजनत्वं स्थिरीभवतीति भक्ति-प्रार्थनामात्रेण प्रपन्नस्यानन्यताविरोधो न भवति, केवलं तत्रोपायबुद्धिर्मा भूदिति भावः।

**लोकसङ्ग्रहणार्थन्तु श्रुतिचोदितकर्मणाम्।**
**शेषभूतैरनुष्ठानं तत्कैङ्कर्यपरायणैः।।113।।**

........................................................पदपरामर्शः........................................................

पूर्वोक्तरीत्या साधनबुद्ध्या शास्त्रविहितस्यापि कर्मयोगाद्यनुष्ठानस्य प्रपत्ते-

------------------------------संवित्करः------------------------------

सभीप्रकार से भगवत्सेवा में तत्पर प्रपन्न वैष्णवगण उपायबुद्धि से नहीं अपितु लोकसंग्रह की भावना से श्रुतिविहित नित्यनैमित्तिकादि कर्म का अनुष्ठान करते हैं। ताकि समाज को कर्मविमुख होने की प्रेरणा न मिले तथा विधि का लोप भी न हो।

---

(टिप्पणी- किसी-किसी प्रति में "तन्न्यासाङ्गानुकूल्यादौ यस्य कस्य महात्मभिः। शेषवृत्तिपरैर्हानौ प्रपत्तेर्न्यूनता नहि।। यह श्लोक अधिक है। इसका अर्थ है कि आनुकूल्यस्य संकल्पः इत्यादि श्लोक के द्वारा प्रपत्ति के जिन अंगों का निर्देश किया गया, उनमें से किसी अंग की पूर्ति न होने पर प्रपत्ति में कमी नहीं आती। वस्तुतः वहाँ आत्मनिक्षेप अंगी है तथा शेष आनुकूल्य का संकल्प आदि पाँच अंग हैं।)

........................................................पदपरामर्शः........................................................

विरोधित्वात्प्रपन्नैः सर्वथा तत्त्याग एवोचितस्तत्रोच्यते- **लोकसङ्ग्रहार्थमिति।** प्रपन्नैर्भगवन्निष्ठैस्तेषां नित्यनैमित्तिकादिकर्मणां शास्त्रविहितत्वादनुष्ठानं लोकसङ्ग्रहार्थं क्रियते न तु मोक्षोपायतया। यथा सर्वधर्मान् परित्यज्येत्यत्र विहितकर्मणां फलासक्तिकर्तृत्वाद्यभिमानरहिततया विधानमपि तत्परित्याग एव मन्यते, तथैवात्राप्युपायबुद्ध्यानुष्ठानमेव प्रपत्तिविरोधि न तु लोकसङ्ग्रहार्थं विधानमपीति मत्वा प्रपत्तिनिष्ठैः श्रुतिविहितकर्माण्यनुष्ठीयन्ते, लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसीति भगवदुक्तेः। शास्त्रविहितं न त्यजन्त्यपितु कुर्वन्तीति भावः। **लोकसङ्ग्रहणार्थमित्यस्य** लोकशिक्षणार्थमित्यर्थः, ग्रह उपादाने धातोर्ज्ञानाद्यर्थकत्वात्। लोकस्य यत्र श्रेष्ठत्वधीस्तमनुकरणीयं मत्वा तदाचरणं स स्वशिक्षार्थमुपादत्तेऽतो विहितकर्मरहितं तमनुवर्तमानो लोकोऽपि कर्मभ्रंशान्नाशं न प्राप्नुयादिति लोको विहितं कर्माचरन्तं तं विलोक्य शास्त्रप्राप्तं नियतं कर्म करणीयमेवेति शिक्षामादाय कर्मानुष्ठानेन स्वकल्याणं कुर्यादित्यर्थम्। लोको हि महापुरुषजनचेष्ठितं विमृश्य स्वकर्तव्यं निश्चिनोति, तदनुष्ठाने च प्रवर्तते, तस्य गतानुगतिकत्वात्। अतः सत्यसङ्कल्प आप्तकामोऽपि भगवान् स्वं निदर्शयन्नाह-

न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन।<br>
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि।।<br>
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।<br>
मम वर्त्मानुवर्तन्ते मनुष्या पार्थ सर्वशः।।<br>
उत्सीदेयुरिमे लोका न कुर्या कर्म चेदहम्।।

अत्र **श्रुतिचोदितकर्मणामित्यत्र** कर्मणां श्रुतिचोदितोक्तेः श्रुतिस्मृती ममैवाज्ञे इत्यनुसन्धानेनानुल्लङ्घनीयत्वं सूचितं भवति। तत्कैङ्कर्यपरायणैस्तादृश-कर्मणामनुष्ठानमित्यत्र कर्तृकर्मणोः कृतीत्युभयत्र प्राप्ता षष्ठी उभयप्राप्तौ कर्मणीति नियमनात्कर्मणीति शाब्दिकव्यवस्था। तत्कैङ्कर्यपरायणत्वे हेतुमुपन्यस्यति- **शेषभूतैरिति।** यथेष्टविनियोगार्हत्वं शेषत्वमिति शेषमात्मानमनुसन्धाय शेषतैकरतिनिबन्धना या भगवत्किङ्करता तत्र संलग्नत्वं तेषां सूच्यते, शेषः परार्थत्वादिति स्वरूपज्ञानप्रयुक्ता तत्कैङ्कर्यैकप्रयोजना निष्ठा, तेन स्वरूपज्ञानं भगवत्सेवायां पर्यवस्यतीति लब्धं भवति, भगवत्किङ्करा एव यथावस्थिताकारेण स्वात्मानं जानन्तीत्यर्थतो निश्चीयते भक्तेर्ज्ञानपूर्वकत्वात्।

**रामप्रसादहेतुर्हि न्यासोऽयं विनिगद्यते।**
**नित्यशूरैः सदाचारैर्हरिपादाब्जमानसैः॥114॥**

**पदपरामर्शः**

*भक्तिर्भवतु प्रपत्तिर्वा भगवत्प्रसादाद्वारेणैवेष्टप्राप्तिर्भवतीति निश्चयात्पूर्वाचार्यैर्भक्तिप्रपत्तिभ्यां प्रसन्नो भगवान् मुक्तिं ददातीति सिद्धान्तितम्, धातुप्रसादान्महिमानमात्मन इति श्रुतेः। तत्र प्रीयतेऽमलया भक्त्येत्यादिना भक्तेर्भगवत्प्रसादजनकत्वं प्रथितं किन्तु प्रपत्त्याख्यस्य न्यासस्य तत्प्रसादजनकत्वे सन्दिहानस्य संशीतिवारणायाह- **रामप्रसादहेतुरिति।** आप्रयाणादसकृदावृत्तभक्तिहेतुको रामप्रसादः सकृदनुष्ठितप्रपत्त्या कथं सिद्ध्येत् प्रयत्नवैषम्ये फलवैषम्यस्यौचित्यात्। हिर्निश्चये अयं न्यासो निश्चयेन रामप्रसादहेतुर्भवति। रामशब्देन रमन्ते योगिनो यस्मिन्निति श्रुतिसिद्धं सच्चिदानन्दं परं ब्रह्म प्रोच्यते। रामप्रसादशब्दोऽपि जीवकृतकर्मजन्यक्षुद्रप्रसादव्यावर्तकः सन् सम्बन्धिशब्दमहिम्ना तत्प्रसादेऽमोघत्वं नित्यत्वं निरतिशयत्वञ्च सूचयति, यत्प्रसादे चराचरात्मकमिदं जगत्सत्तां स्फूर्तिं सरसताञ्च धत्ते, यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजा इति रामायणोक्तेः। अयं न्यासो रामप्रसादस्य नूनं हेतुरुल्लासक उत्तम्भको भवति। हेतुशब्दस्य कारणवाचकत्वे तत्प्रसादे जन्यत्वमापद्येत, स च नित्यं प्रसन्नात्मेति रामायणोक्तिश्च विरुध्येत। बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतिमिति रामायणोक्तप्रपत्त्याकारानुरोधेन न्यासस्योपक्रमोऽपि भगवन्तं प्रसादयति किमुत परिपाकः, अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनीत्युक्तेः। अयं निर्दुःखनित्यनिरतिशयानन्दमनुभवत्वितीच्छा भगवत्प्रसादेनैव भवति, प्रसादविशेषेणैव निग्रहरूपकालुष्यस्य निश्शेषनिवृत्तिर्भवति, उपायवैकल्ये फलप्रतिबन्धो निवार्यते। सूरिषु स्वभावत एवावस्थितं यत्सौहार्दं तादृशप्रसादविशेषेणैव शरीरपातसमये ज्ञानपौष्कल्यादपरिच्छिन्नप्रबोधस्य, अनाद्यनुवृत्तदुरत्यमायाकार्यापसारणेन स्थूलसूक्ष्मप्रकृतिपरित्यागेन देवपथेन दिव्यदेशगमनं भवति, अपुनर्भवाय नाडीकोशभेदनक्रमेणाक्षरं भित्त्वा मृत्युं भिनत्तीत्याद्युक्तप्रकारेण सूक्ष्मप्रकृतिविमोक्षानन्तरं भगवत्प्रसादेनाविलम्बमनोरथपूर्तिर्भवति। अत्रार्थे न कश्चिद्बद्धश्शरीरपातानन्तरभाविफलनिश्चये प्रमाणं*

**संवित्करः**

**यह न्यास प्रभु श्रीरामजी की प्रसन्नता का कारण बनता है, ऐसा सदाचारसम्पन्न भगवच्चरणाश्रित महापुरुष कहते हैं।**

......................................................पदपरामर्शः......................................................

भवितुमर्हति। अनाद्यनेहसोऽनेकप्रपन्नप्रपत्तिहेतुकभगवन्मुखोल्लासं प्रपन्नजनानुभूत-मोक्षानन्दं च साक्षात्कृतवतां प्रत्यक्षं कुर्वाणानां नित्यसूरीणां वचनं प्रामाण्यं धत्त इत्यत आह- **नित्यशूरैः सदाचारैर्हरिपादाब्जमानसैर्विनिगद्यत** इति। सूरिशब्दार्थे शूरशब्द इति केचन, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इत्यत्र सूरिपदोपन्यासात्। शूरा विक्रान्ता विशेषेण विरजां क्रान्तास्ते मुक्ताः, नित्याश्च ते शूरा, एतेन विजितदोषतया संयमः प्रोक्तः। सन् शास्त्रसत्कृत आचारो वर्तनं येषान्तैः, इति वृत्तमुक्तम्, हरिपादाब्जे भ्रमरवल्लुब्धं नित्यसमास्वादनपरं मानसं येषान्तादृशः, एतेन प्रीतिरुक्ता। त्रिभिरपि पदैर्विग्रहबलं प्रज्ञाबलं मनोबलञ्चोक्तम् **शौर्येण** भगवत्कैङ्कर्यपरत्वादसुरादि-निराकरणसामर्थ्याच्च प्रातिकूल्यवर्जनं सदाचारतया आनुकूल्यसङ्कल्पः, पादकमलानुरक्त्यात्मनिक्षेपश्च सूचितम्। विग्रहसाध्यं दास्यं, मन्त्रोच्चारणादिसापेक्षमर्चनं मनःसाध्यन्तत्पादकमलामोदास्वादनरूपमात्मनिवेदनञ्चेति यथायथं त्रिभिः त्रितयं प्रकाश्यते।स्मृतिपुराणादिषु प्रपन्नैकान्तिकाकिञ्चनानन्यगतिशब्दैः प्रपत्तिनिष्ठाः प्रोच्यन्ते, प्रपत्त्या भगवत्प्रसादलाभोऽपि तत्र तत्र वर्ण्यते, भगवांश्च प्रपन्नेऽतिमात्रं प्रीणाति, साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्। मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि" अत्र परमप्रेमास्पदत्वात् हृदयशब्दं प्रयुज्योत्तरार्धेण तेषु प्रपत्तिनिष्ठा सूचिता। प्रपन्नः खल्वकिञ्चनः, स एव प्रेमास्पदतया वित्तं यस्येति भगवान् अकिञ्चनवित्तशब्देनोक्तः नमोऽकिञ्चनवित्तायेत्यादौ। इत्थमेव प्रपन्नं प्रति वदान्यत्वमेवाह भगवतः प्रपन्नपारिजातेत्याख्या। प्रपन्नविषयकप्रसादं विना भगवत इयमुक्तिः कथं सङ्गच्छेत यत्र तद्विषयिणी निरतिशयप्रीतिः प्रकाशिता-

ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम्।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे।।

इत्थं तत्प्रीतिर्नान्तरीयकतया प्रसादं वदत्येव, प्रीत्यतिरेकादेव प्रपन्नं विलोक्य भगवन्नेत्रभ्यामश्रुपातो वर्णितः-

यस्मिन् भगवतो नेत्रान्न्यपतन्नश्रुविन्दवः।
कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम्।।

इत्थं पूर्वोक्तविवेचनेन न्यासस्य भगवत्प्रसादं प्रति हेतुता सुतरां सिद्ध्यति।

**कृतप्रपत्तिस्मरणं प्रायश्चित्तमथोच्यते।**
**परमाप्तैश्च तन्निष्ठैः कोविदैस्तैर्मुमुक्षुभिः॥115॥**

.....................................................पदपरामर्शः.....................................................

*प्रपत्तेर्विरोधिनः स्वरूपं प्रपत्तेर्भगवत्प्रसादजनकत्वञ्च यथावन्निरूप्येदानीं तदुपायापायसम्भवे कृत्यमनुशास्ति–* ***कृतप्रपत्तिस्मरणमिति।*** *अथ न्यास–स्वरूपादिनिरूपणात्परम्, परमाप्तैरनन्यथावादिभिस्तन्निष्ठैः प्रपत्तौ निष्ठावद्भिः कोविदैस्तद्रहस्यज्ञैर्मुमुक्षुभिः संसारसागरमुत्तितीर्षुभिस्तैर्वैष्णवजनमान्यतया प्रसिद्धैः कृतायाः तादृशप्रपन्नविहितायाः प्रपत्तेर्न्यासविद्यायाः स्मरणं पुनरनुसन्धानं प्रायश्चित्त–मपायसम्भववैगुण्यशोधकमुच्यते निर्दिश्यत इति पर्यायगर्भपदान्वयः। अयमाशयः– महापराधवर्गः प्रपत्तिमपि प्रतिबध्नाति, यथार्थज्ञानवैकल्याद्भक्तेरभावाच्च ब्रह्मविद्वेषादयोऽपचारा जायन्ते, प्रपत्तावपि ज्ञानपूर्वककृतापराधस्याचारलङ्घनरूपस्य भगवत्प्रीतिप्रतिबन्धकत्वं स्वीकार्यमेव, यथोक्तं स्वयं भगवता– प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनादिति। निश्चितफलसिद्धावुपायापायसंप्लवराहित्यमपेक्षितं भवति। निषिद्धकाम्यकर्मपरिग्रहे तु निष्ठैव हीयते। तदर्थं प्रायश्चित्तं प्रतिपाद्यते–*

*अपायसम्भवे सद्यः प्रायश्चित्तं समाचरेत्।*
*प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत्॥*
*प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे।*
*मामेकां देवदेवस्य महिषीं शरणं व्रजेत्॥*

*मैथिलीप्रणिपातेन तत्प्रसादात्सकलवैगुण्यवारणं भवति। यथोक्तं– रामायणे प्रणिपातप्रसन्ना वै मैथिली जनकात्मजेति। एवमर्थमनुसन्धाय प्रपन्नस्य प्रायश्चित्तान्तरं निषिध्य कृतप्रपतिस्मरणमेव तथात्वेन विहितं न तु पुनः प्रपदनं तस्य तु सकृद्विधानात्। पापेनैवानादिकालादारब्धेन मानसादिभेदेन त्रिविधेनेष्टं विहन्यते, तच्चाकृत्यकरणकृत्याकरणरूपं सामान्यं भवतु, अर्चावतारादिषु प्राकृतत्वबुद्ध्यादिरूपं*

-----------------------------------संवित्करः-----------------------------------

भगवत्प्रपन्न के जीवन में किसी प्रकार के उपचार या अन्य भावना से जन्य वैगुण्य के आने पर उसके कृतप्रपत्ति का एकाग्रचित्त से स्मरण को ही प्रायश्चित्त बताया गया है। ऐसा तत्त्वज्ञ मुमुक्षु वैष्णवों का कथन है।

......................................................पदपरामर्शः......................................................

भगवदपचाराख्यं भवतु भागवतापचाररूपं भगवद्भागवतद्वेषावज्ञापरिहासाद्यसह्यापचाररूपं वा भवतु तत्तत्त्वतिरोधानं कर्मान्तरेऽनर्हतापादानं पुनःपापारम्भे रुचिजननञ्च करोतीति तत्कार्यनिवृत्तिस्तु भगवतः प्रसादविशेषरूपया क्षमयैव संभवति। अतः प्रपत्तेः स्मरणेन सा साध्यत इति भावः। यथोक्तम्–

प्रपन्नमधिकृत्यैव सदाचारानतिक्रमः।
प्रपत्त्यध्यायपठितः प्रतिसन्धीयताम्।।
अज्ञानादथ वा ज्ञानादपराधेषु सत्स्वपि।
प्रायश्चितं क्षमस्वेति प्रार्थनैकैव केवलम्।।
प्रपत्तिप्रतिसन्धानमाप्तैर्यदुपदिश्यते
तत्स्वाधिकारनियतहानोपादानसिद्धये
प्रतिसन्धानतो हि स्यादधीपूर्वेष्वलेपधीः
बुद्धिपूर्वेष्वपि पुनः प्रपत्तेरेव सङ्ग्रहः।।

**उत्कृष्टवर्णैरपि वैष्णवैर्जनैर्निकृष्टवर्णः स तदीयसेवने।**
**तथानुसर्त्तव्य इतीष्यते बुधैः शास्त्रैर्विधेये विधिगोचरैः परैः।।116।।**

......................................................पदपरामर्शः......................................................

प्रपत्त्यनन्तरं बुद्धिपूर्वककृतापचाराणां कृते विहितं प्रायश्चित्तस्वरूपमुक्त्वा प्रायश्चित्तनिमित्तीभूतेष्वनेकविधापचारेषु जघन्यतया भागवतद्वेषावज्ञापरिहासादिजन्यो भागवतापचारो मा भूदिति ततो वारणाय साधुजनेषु जात्याकारादितारतम्यस्यानादरेण भावसंशुद्ध्या च समुचिताचारं शिक्षयति– **उत्कृष्टवर्णै**रपीति। विधिगोचरैः परैश्शास्त्रैर्विधेये तदीयसेवने उत्कृष्टवर्णैरपि बुधैर्वैष्णवजनैर्निकृष्टवर्णः स तथानुसर्त्तव्य इतीष्यत इति पदान्वयः। उत्कृष्टवर्णैर्ब्राह्मणादिभिर्निकृष्टवर्णः शूद्रादिजातौ लब्धजन्मा

------------------------------संवित्करः------------------------------

जैसे उत्कृष्टवर्ण में समुत्पन्न वैष्णव विरक्तसन्त, इतरजाति में उत्पन्न वैष्णवसन्तों द्वारा समाज में सेवा सत्कार द्वारा समादृत पूजित होते हैं, ठीक उसीप्रकार उत्कृष्टजाति के शरीर वाले वैष्णव विरक्तसन्तों द्वारा भी इतरजातीय वैष्णव विरक्तमहात्माओं का समुचित आदर द्वारा सम्मान किया जाना चाहिये। अर्थात् जिनमें पूर्णवैष्णवता, साधुता प्रकट हो गई हो, ऐसे विरक्त सन्तों में पूर्व जाति का अनुसन्धान कर उनका यथायोग्य आदर न करना अनुचित है। क्योंकि हरि को भजे सो हरि का होई का उद्घोष स्वामीजी का ही है।

.................................................पदपरामर्शः.................................................

वैष्णवो वैष्णवाराधनविधौ नूनं प्रसादादिदानेन सेवनीय इति भावः। अपि तथेति पदाभ्यां यथा निकृष्टवर्णैर्वैष्णवै ब्राह्मणादिवैष्णवाः सादरमनुस्रियन्ते तथा तैरपीति लभ्यते। एतेन परस्परं भावयन्तः श्रेयः परममवाप्स्यथेति श्लोकार्थः स्मारितः। तस्य भगवत इमे तदीया वैष्णवास्तेषां सेवने सपर्याविधावित्यर्थः, तादृशे तदीयसेवने विहितत्वं दर्शयति- **परैर्विधिगोचरैश्शास्त्रैर्विधेय** इति। मुक्तिर्भवति न वेति संशयोऽच्युतसेविनाम्, असंशयन्तु तद्भक्तपरिचर्यारतात्मनाम्, स च पूज्यो यथा ह्यहमित्यादिभिः शास्त्रैर्विहितं सेवनम् विधायकशास्त्रस्य "पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयमित्युक्त्या सर्वेश्वरप्रोक्तत्वाच्छ्रास्त्रान्तरात्प्रामाण्यपारम्यं सूचयितुमेव" परैरित्युक्तम्। पुराणतिलके भागवते चानुष्ठेयभक्तिवर्णने एकादशपूजाधिष्ठानेषु वैष्णवसङ्ग्रहात्तस्य च वैष्णवे बन्धुसत्कृत्येति भगवदुक्तेर्बन्धुवत्सन्मानस्यादेशो दृश्यते। जातिवाचकवर्णशब्दविशेषणाभ्यामुत्कृष्टनिकृष्टशब्दाभ्यां जातिकृतोच्चावचभाव-संभावनाया दुर्वारत्वं संसूच्य वैष्णवत्वव्याप्त्या प्रपत्तेः सर्वाधिकारत्वं द्योतितम्। यावतीर्वै देवता ता वेदविदि ब्राह्मणे वसन्ति, ब्राह्मणो मामकी तनूः, जन्मना ब्राह्मणः श्रेयान्, तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः निकृतिश्चाभिमानश्च जन्मतः शूद्रमाविशदिति श्रुतिस्मृतिसिद्धमुच्चावचमपि वैष्णवजनेषु नानुचिन्त्यम् तत्र हि भगवत्साजात्यप्राप्त्याच्युतत्वं जायते। आराध्यगोत्रेण गोत्रवानसौ जात्याद्यपकर्षानुसन्धानेन न हेयताबुद्धिविषयः। यथोक्तम्-

> हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः।
> पादोदकञ्च निर्माल्यं मस्तके यस्य सोऽच्युतः॥

पापहारिणो हरेर्योगात्पापानि स्वत एव तत्र नोपसर्पन्ति, हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरित्युक्तः। जात्याद्यपकर्षो भवतु वृत्तापकर्षो वा भागवताश्रयणाच्छुद्धो भवति। अत उक्तम्-

> किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः।
> येऽन्ये पापा यदुपाश्रयाश्रयाः शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः॥

न केवलं भक्तिप्रपत्त्योः परमशुद्धिहेतुत्वमपितु भक्त्या भागवतसंश्रयादपि संभाषणादिलक्षणसम्बन्धेन, वैष्णवद्वारा स्वीकारेणापि तत्रादराधिक्यं वक्ति-

> दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोग इति ।

......................................................पदपरामर्शः......................................................

यद्यपि दौष्कुल्यारम्भकं पापं प्रारब्धमेव, तन्नाशमन्तरेण दुष्कुलत्वधूननं न संभवति, प्रारब्धस्य भोगेनैव क्षयात्तथापि भगवदीयगुणसंक्रान्त्या भगवतीव तद्भक्तेष्वपि प्रारब्धं न तिष्ठतीति केचित्। आरब्धभक्तिः प्राकृतोऽपि भक्तो भक्त एव भवति, उदारा सर्व एवैत इति भगवतोक्तेः। तादृशेषु दुःखादिदर्शनात्कथं प्रारब्धनाश इति नाशङ्क्यम् तेषु भगवानेव प्रीत्या हितानुशासकः पितेव नियमयति, तन्नियमने कर्मजन्यत्व-कथनस्यानौचित्यात्। ध्रुवस्य भगवता दत्तराज्यस्य तत्कृतयक्षवधादौ प्रारब्धफलयोगो नेति केचनाशेरते। यथा चार्चाविग्रहेषूपादानचिन्तनं महते पापाय, तथैव वैष्णवेषु जात्यादिवैकल्यनिमित्तोऽनादरो महापराध इति। तद्गतं वैष्णवत्वं सर्वं प्रपुनातीति कुलं पवित्रं जननी कृतार्था वसुन्धरा भाग्यवती च तेनेत्यादिना पुराणादौ स्तूयते। अत एव नारदभक्तिसूत्रेऽपि तादृशभक्तानुद्दिश्य- नास्ति तेषु जातिविद्यारूपकुलधनक्रियादिभेदः, यतस्तदीया इति प्रोक्तम्। अत एव जातिभेदचिन्तकस्य दुर्गतिरुच्यते- यः शूद्रं भगवद्भक्तं निषादं श्वपचं तथा, वीक्षते जातिसामान्यात्स याति नरकं नरः। प्रह्लादस्तु भगवत्पादविमुखाद् ब्राह्मणाद्भक्तं चाण्डालं श्रेष्ठं मनुते-

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-

पादारविन्दविमुखाच्छ्वपचं वरिष्ठम्।

मन्ये तदर्पितमनोवचनेहितार्थ-

प्राणं पुनाति स कुलं न तु भूरिमानः।।

भगवत्पादारविन्दनिविष्टसकलकरणश्श्वपचः सर्वं कुलं पुनाति, विप्रस्तु भूरिमान इति स्वात्मानमपि न पुनाति। तस्य भक्तिहीनस्य सर्वे ज्ञानशमदमशौचादयो गर्वाय जाता न तु शुद्धयै इति तत्रैवाशेरते श्रीधरस्वामिनः। अतो भक्तिरेव तेषां सेव्यत्वे मुख्यप्रयोजिका। नहि कोऽपि भगवद्विभूतेर्बहिर्भूतः, भगवता सह तस्य सांसिद्धिकसम्बन्धमवधार्यावकरे स्थितमपि रत्नमादरणीयमिति धिया निकृष्टवर्णे लब्धजन्मापि वैष्णवः सेवनीय एव, तद्गता गुणाश्चानुसर्तव्याः भगवत इव वैष्णवानामपि सारग्राहित्वमेवोचितमिति भावः। इत्थं रामभावस्यैव वैशद्यायाखिलभुवन-प्रथितस्तदुदारसमुद्घोषः- "जाति पाति पूछे नहि कोई। हरि को भजे सो हरि का होई।।" लोकभाषायामपि समुपक्रान्तः।

**अणुव्याप्तौ च भगवानणुषु त्वणुरुच्यते।**
**पराकाष्ठापरैर्विज्ञैर्मतविद्भिर्महात्मभिः॥117॥**

.............................................पदपरामर्शः.............................................

मद्भक्तियुक्तो भुवनं पुनातीति भगवदुक्त्या भुवनपावनेषु वैष्णवेष्वपि जात्याद्यपकर्षानुचिन्तनेन हीनताप्रयुक्तजुगुप्साप्रत्ययमूलो यो भागवतापराधो भवति, तस्य मूलं सर्वं श्रीरामात्मकमिति यथावस्थिताकारेण प्रतीत्यभावः। तथा च श्रुतिः- यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति, सर्वभूतेषु चात्मानं ततो न विजुगुप्सत इति। सर्वस्य ब्रह्मात्मकत्वेऽपि तेष्वास्ते ह्यघभिद्धरिरित्युक्त्या वैष्णवानां भक्तिनिर्मले स्मृतिविशदीकृते मानसे भगवत्स्वरूपशक्तेर्भक्तेः स्फूर्त्या स्वविभूतिवर्णने प्रह्लादश्चास्मि दैत्यानामिति दैत्यवंशजातस्यापि तस्य स्वसामानाधिकरण्येन निर्देश उपपद्यते। तद्विभूतेर्बहि-र्भूतत्वाभावादेव न केवलं तथाविधस्य महाभागवतस्य, अपितु यस्यात्मा शरीरम्, अन्तःप्रविष्टः शास्ता जनानां सर्वात्मेति श्रुतिदर्शिताध्वना सूक्ष्मतोऽप्यत्यन्तसूक्ष्मेष्वपि जीवात्मसु तद्व्याप्तिमुपपादयति- **अणुव्याप्ताविति।** अणुषु जीवेषु भगवतः स्वरूपतो गुणतो विभूतितश्च व्याप्तिः परिपूर्णता, अणुव्याप्तिस्तस्यामणुव्याप्ताविति। अत्र निमित्तात्कर्मयोगे इति सप्तमी, योगश्चात्रापृथक्सिद्धसम्बन्धः। नियमनफलिका नित्यव्याप्तिरिति फलति। उत्क्रान्त्यादिना एषोऽणुरात्मेति श्रुत्या च सिद्धे जीवात्मनोऽणुत्वे, तेष्वणुष्वपि भगवानणुरणिष्ठ उच्यते, गुणतो निर्धारणे सप्तमी। तदपेक्षयाणुतरत्वाभावे तन्नियमनासंभवात्तद्व्याप्तिर्बोध्यते- अणोरणीयान्महतो महीयानिति श्रुतेः। तद्व्याप्त्यैव सामानाधिकरण्यहेतुकं सर्वशरीरत्वेन सर्वात्मकत्वम् ऐतदात्म्यमिदं सर्वमिति श्रुत्यभिप्रेतम्। एतदनुरोधेनैव जीवब्रह्मणोः सामानाधिकरण्येन कृतो व्यापदेशः सङ्गच्छते, परमात्मैव हि सर्वविशिष्टः प्रतीतः। अनन्तशक्तिसम्पन्नस्य करुणाब्धेर्भगवतः प्राप्यत्वप्रापकत्वादिवत् अणुविभुद्रव्येषु व्यापकत्वं युक्तमिति तत्र बाह्यप्रदेशसद्भावे विभुना तद्वस्तुव्याप्तिः संभवति, आभ्यान्तरप्रदेशसत्त्वेऽणुना तद्वस्त्वन्तर्व्याप्तिः संभवति। प्रवेशो हि स्पर्शवन्मूर्तद्रव्येषु शक्यः परमात्मनि

---------------------------------संवित्करः---------------------------------

तत्त्वविद् वैष्णव महात्माओं ने अत्यन्त सूक्ष्म अणुरूप जीव में भी भगवद्व्याप्ति अर्थात् उसमें प्रविष्ट होकर उसका नियमन करने के कारण भगवान् को अणु से भी अणु बताया है। अर्थात् प्रत्येक जीव भगवद्व्याप्त होने या भगवदात्मक होने से भगवद्रूप है। इसलिये भी वह अनादरयोग्य नहीं है, फिर वैष्णव, उसमें भी विरक्तसन्तों के अनादर का तो प्रश्न ही नहीं उठता है।

......................................................पदपरामर्शः......................................................

*तदभावात्तद्व्याप्तिर्न संभवतीति सम्बन्धमात्रस्य संभवात्तदुभयथा व्याप्तिः फलति। तत्र हि स्वेतरसमस्तवस्त्वपेक्षया अणुत्वं विभुत्वञ्च स्त एवेति भावः। अत्रार्थे श्रुत्यतिरिक्तं वक्तृप्रामाण्यमभिधत्ते-* **पराकाष्टापरै**रित्यादिना। *पुरुषान्न परः कश्चित्सा काष्टा सा परागतिरित्युक्त्या पराकाष्ठाशब्दोऽत्र परमपुरुषपरः। पुंवद्भावश्च परया स्वाभाविक्या शक्त्या आ समन्तात् सर्वत्र काशत इत्यर्थविशेषलाभार्थ नेति। अथवा पुंवद्भावरहितः एव लोके तदर्थप्रतिपत्त्या तत्र रूढः। भक्तेश्चरमावधिं गतैर्विज्ञैमनीषिभिः।* **महात्मभिः** *प्रशस्तशेमुषीकैर्मतविद्भिर्जीवाणुत्ववादस्य वैष्णवमतस्य ज्ञातृभिरुच्यत इति। महात्मभिरित्यनेन बुद्धिवैशद्यम्, पराकाष्टापरैरित्यनेन दृढनिश्चयेन भगवत्पदकमलानुरागः,* **विज्ञै**रित्यनेन बहुश्रुततया विवेचनसामर्थ्यम्, **मतविद्भि**रित्यनेन विशिष्टाद्वैतसिद्धान्तवेत्तृत्वं च प्रकाशितम्।

**आत्मारामैस्तथोपायस्वरूपज्ञानिभिश्च तैः।**
**मतज्ञैर्विरजापारं कैवल्यमिति मन्यते॥118॥**

......................................................पदपरामर्शः......................................................

*भगवद्व्याप्तानामणुरूपजीवानामपि सुकृततारतम्येनोच्चावचविवेचनसम्भवाद्रुचिभेदाच्च केषाञ्चन परिशुद्धात्मस्वरूपे, केषाञ्चिदेव श्रीभगवति समीहा भवति, तत्र शुद्धात्मस्वरूपकामनयाक्षरोपासनामनुतिष्ठतां शरीरत्यागानन्तरं सर्वकर्मविमुक्त्या प्रकृतिमण्डलमतीत्य गतानां भगवत्समानाकारपरिशुद्धात्मस्वरूपाधिगतिर्भवति यदवाप्य पुनरावृतिर्न, तत्तादृशैर्लभ्यमानं मोक्षमाह-* **आत्मारामै**रित्यादिना। कैवल्यमिति मन्यते। *इतिना पूर्वोच्चरितस्य सञ्ज्ञात्वेन परिग्रहं कृत्वा व्यतिरिक्तमिव किमपीति सूच्यते। तत्तु रमणत्यक्तपत्नीवत्स्यादित्यर्थः। यद्यपि मोक्षे तारतम्यं नेति पूर्वं प्रतिज्ञातं तथाप्यत्र*

--------------------------------संवित्करः--------------------------------

सम्प्रदाय के रहस्यवेत्ता तथा मोक्ष के स्वरूप को जाननेवाले आत्माराम श्रीवैष्णव महापुरुष कैवल्य को प्रकृतिमण्डल की सीमा निर्धारित करने वाली विरजा नामक नदी के उस पार बताते है। यह विचारणीय है कि मोक्ष में कोई तारतम्य स्वीकार नहीं किया गया है, और इस कैवल्य नामक मोक्ष की स्थिति विरजापार होने से त्रिपादविभूति में है। क्या यह सम्प्रदायसम्मत श्रीरामभक्तों का अभीष्ट सायुज्य मोक्ष है या कोई और? शुद्धजीवात्मस्वरूप को तत्त्वतः जानने एवं प्राप्ति की कामनावालों को प्राप्त होने वाला कैवल्य, जिसे सम्प्रदायान्तर के वैष्णव विद्वानों ने उपपादन करके खण्डित कर दिया है।

**पदपरामर्शः**

मोक्षापरपर्यायस्य कैवल्यस्य स्वरूपकथनं, तदपि किं मुक्तिसाधनमिति प्रश्नसमाधिक्रमे नूनं विचार्यतामर्हति। कैवल्यं विरजापारमिति विरजायाः प्रकृतिमण्डलावधिसूचिकाया तदाख्यनद्याः समुत्तरणात्परं तदुत्तरतटमतिक्रम्यावाप्तमिति, एतेनार्चिरादिगत्या प्राप्तत्वं सूचितमिति मोक्षो निश्चीयते। किमिदं कैवल्यं सायुज्याख्यो भक्तिप्रपत्तिभ्यां प्राप्यो मोक्ष उत ततो भिन्नः कश्चिदिति विविदिषा जायते। ''मन्ये'' इत्यनुक्त्वा **''मन्यते''** इत्यनेनान्यदीयपक्षोपस्थामिति शक्यते प्रतिपत्तुम्। तत्रापि मन्तॄणां तैरिति सर्वनाम्ना निर्देशाद् बुद्धिस्थपरामर्शकतयाऽस्फुटादनिश्चय एव। आत्मारामैरित्यत्राप्यात्मशब्दस्य जीवात्मपरमात्मनोर्वाचिकतया जीवात्मनि परमात्मनि वा रमणशीलैरित्यनिश्चयः, एवमेवोपायस्वरूपज्ञानस्य विविधमतज्ञानस्य च न निश्चायकत्वम्। केचन तु कैवल्यं सायुज्याख्यं श्रीसीतानाथस्य साकेताख्यं दिव्यं धामेति निश्चिन्वन्ति। तदनुरोधेनात्मारामैः आत्मा परमात्मा श्रीजानकीनाथ एवाराम उपवनं विहारस्थलं येषान्तैः, **उपायस्वरूपज्ञानिभिः** उपायानां कर्मवैराग्यज्ञानभक्तिपरमभक्तिप्रपत्यादीनाम् स्वरूपस्य लक्षणप्रमाणाभ्यामिदमित्थमिति निश्चितस्य स्वरूपस्य ज्ञानिभिरधिकारिभेद तदनुष्ठानविधितदन्तरायतद्वारणोपायरहस्यज्ञैः **मतज्ञैः** विशिष्टाद्वैतादिदर्शनानां मतानां सिद्धान्ततया ज्ञानवद्भिः विरजापारं प्रकृतेः परं कैवल्यमिति मन्यतेऽङ्गीक्रियत इति भावः। दृश्यते च महान् विचारसम्मर्दोऽन्यत्र, मन्ये तदनुवादपरमिति मन्यत इत्युपपद्यते। तत्र हि श्रीरामानुजीयमतानुयायिभिर्वेदान्तदेशिकप्रभृतिभिर्न्यायसिद्धाञ्जनादौ गीतार्थ-सङ्ख्यरामानुजभाष्यादिवचनबलेन कैवल्यमुत्थाप्य प्रबलयुक्तिभिः सुधीरं विमृश्य तस्य सम्प्रदायसिद्धत्वं सुदृढं प्रत्याख्यातम्। भगवदानन्दभाष्यकारमते मन्तृविशेषणैस्तदाग्रह-प्रदर्शनात् कैवल्यमस्तीति गम्यते। अत एव ''अति दुर्लभ कैवल्य पर पद'' इति तदनुयायिश्रीतुलसीदासेनाप्युक्तम्। तत्रेत्थं विमर्शः- कैवल्यं भगवन्तञ्च मन्त्रोऽयं साधयिष्यतीत्यत्र चकारेण कैवल्यस्य पृथक्फलत्वेन निर्देशात्, आत्मार्थी चेत्त्रयोऽप्येते तत्कैवल्यस्य साधका इति गीतार्थसङ्ग्रहवाक्यात्कर्मयोगादिमात्रसाध्यस्य कैवल्यस्य सङ्ग्रहात्, ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च , शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्येति भगवद्वचने चकारत्रयेण कैवल्यैश्वर्यापवर्गरूपस्य फलत्रयस्य सूचनात् त्रयोदशाध्यायारम्भे ''आत्मकैवल्यमात्रापेक्षाणामिति कैवल्यस्य भक्ति-मात्रसाध्यत्वोक्तेश्च आर्तो जिज्ञासुरर्थार्थीत्यत्र जिज्ञातुपदेनात्मावाप्तिरूप कैवल्ये-

.............................................पदपरामर्शः.............................................

च्छुकत्वस्य निश्चयाच्च कैवल्यमात्मानुभूतिरूपं फलं मोक्ष इत्युपपाद्य वस्तुतो न कैवल्यस्य मोक्षत्वम्, भगवत्प्राप्तेरेव मुक्तित्वाभिधानात्। अत एव नार्चिरादिगति-स्तन्निष्ठस्य, कैवल्यं प्राप्तस्य न सर्वकर्मविनिर्मुक्तिः सर्वकर्मविनिर्मुक्तात्म-स्वरूपावाप्तिस्तु भगवत्प्राप्तिगर्भैव भवति, ते प्राप्नुवन्ति मामेवेति तत्रापि ब्रह्मप्राप्तिरेव फलं गीयते, एवकाराच्च। वेदान्तदेशिकैस्तु प्रथमं कैवल्यमात्रानुभवः कञ्चित्कालं ततो ब्रह्मानुभवोऽपीत्यभिप्रेत्य कैवल्यान्तरकालिकफलत्वं साधितमित्यतोऽधिकं विज्ञेयं विद्वद्भ्य इति शम्।

**जितेन्द्रियश्चात्मरतो बुधोऽसत्सुनिश्चितं नाम हरेरनुत्तमम्।**
**अपारसंसारनिवारणक्षमं समुच्चरेद् वैदिकमाचरन् सदा[1]॥119॥**

.............................................पदपरामर्शः.............................................

तुरीयप्रश्नसमाध्यवसाने "नातः परं कर्मनिबन्धकृन्तनमिति सद्यो विमुक्तो भगवान्नाम गृह्णन्नित्यादिभागवतोक्तप्रामाण्येन सर्वसाधनशून्यानामजामिलसदृशपतितानामपि पावनकरस्य "यस्य नाम महद्यश" इत्यादिमन्त्रमहितमहिम्नो भगवन्नाम्नोऽघनाशकतया सत्त्वशुद्धितत्त्वप्रकाशादिक्रमेण भगवत्प्रीत्युदयद्वारेण च देशकालपात्रतादिनियमाद्यभावेन सर्वसुकरतयाऽपामरलोकविदितं मोक्षसाधनत्वं संस्मृत्य तत्र शब्दात्मना भगवानेवेति साध्यतादात्म्यमनुसन्धाय समुच्चारणविधया तत्सेवने प्रवर्तयति- **जितेन्द्रियश्चेति।** हरेर्नाम समुच्चरेदिति श्लोकस्य विधेयांशः। अत्र रामाभिधानो हरिरित्युवाच, रामाख्यमीशं **हरिमित्युद्युक्तरीत्या** सर्वावतारित्वद्योतनाय हरिपदम्, तेन तन्नाम्नोऽपि तद्वत्पापतापहारित्वं सूचितम्। भगवतः सर्वेषां नाम्नामुत्तमत्वेऽपि तद्विशिनष्टि- **अनुत्तममिति।** न विद्यत उत्तमं यस्मात्तत्, तच्च रामनामैव उच्चारणसौकर्येण सुग्राह्यत्वात्सर्वाधिकलोकप्रसिद्धत्वाच्छास्त्रनिर्देशानुगुणत्वात्प्रथमोपस्थितत्वाच्च। सञ्ज्ञा

-----------------------------------संवित्करः-----------------------------------

जितेन्द्रिय, भगवन्निष्ठ एवं सम्प्रदायविद् वैष्णवजन को श्रुतिविहित नित्यनैमित्तिकादि शुभकर्मो का आचरण करते हुए अपार जन्ममरणादि कर्मफल के प्रवाह रूप संसार सागर से पार कराने में सर्वथा समर्थ, शास्त्रसिद्ध, अत्यन्त निरापद एवं मनोज्ञ भगवन्नाम श्रीराम सीताराम का निरन्तर उच्चारण करते रहना चाहिए। यह मुक्ति का सहज एवं सरल साधन है।

---

[1] पा. भे.- मुदा।

.............................................पदपरामर्शः.............................................

नाम यतो न लघीयः, द्व्यक्षरं चतुरक्षरं कृतं कुर्यान्न तद्धितमिति शास्त्रानुरोधात् नारायणादेर्महत्त्वाद्गोविन्दगोपालादेस्त्र्यक्षरत्वाद् विष्णुकृष्णादेर्द्व्यक्षरस्यापि संयोगगर्भ-तयोच्चारणे क्लिष्टत्वात्कृष्णशब्दस्य च मत्वर्थलुका निष्पन्नस्य तद्धितान्तत्वाद्रामनाम्न एव सर्वथानवद्यतयानुत्तमत्वं सिद्ध्यतीति भावः। अत एव सहस्रनामतुल्यतोक्ता,

परमेश्वरनामानि सन्त्यनेकानि पार्वति।

परन्तु रामनामेदं सर्वेषामुत्तमं मतम्।।

नारायणादिनामानि कीर्तितानि सुबहून्यपि आत्मा च तेषां सर्वेषां राम नाम प्रकाशकः। सर्वेषां शब्दानां तद्वाचकत्वे श्रुतिसिद्धमनादिनामेदमेव। अत एव सुनिश्चितमिति पदं सङ्गच्छते। यस्य व्यस्ताक्षरस्यापि समुद्धारकत्वं पुराणसिद्धम्, एकाग्रमनसात्रैव मरेति जप सर्वदेत्युक्तेः। असत्सु पापिष्ठेष्वपि समुद्धारकतया निश्चितं निर्णीतम् योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनमिति भागवतोक्तेः। यद्वा अः, वासुदेवस्तत्र प्राप्यबुद्ध्या सीदन्ति तिष्ठन्तीत्यसतस्तेषु भगवन्निष्ठेषु भक्तेषु निश्चितम् साधनेषु परमवरेण्यतया सुदृढोपायतया निश्चयेन चितमिति असत्सुनिश्चितमिति नाम विशेषणम्। सर्वथा सफलमित्यर्थः। यद्वाऽसत्सु लौकिकेषु पदार्थेषु हरेर्नामैवानुत्तमं सुनिश्चित-मित्यप्यन्वयवैचित्र्याल्लभ्यते। हरेर्यन्नामानुत्तमं सुनिश्चितं तत्समुच्चरेदित्यन्वयः। नाम्नोऽप्रतिमं सामर्थ्यमाह- **अपारसंसारनिवारणक्षममिति**। अगस्त्य इव अविच्छिन्न-कर्मप्रवाहरूपसंसारसिन्धुशोषणसमर्थमिति। संसार इत्यनेनाविच्छिन्नमूलतयानादि-कालात्सम्प्राप्तत्वेनागाधत्वम्, अपार इत्यनेन दुस्तरत्वञ्च लभ्यते, दुर्निवारस्याप्यस्य निवारणे क्षममित्यतिलोकप्रभावो नाम्नो ध्वनितः। अत एवास्य संसारतारकत्वादेव तारकत्वं, रामेति तारकं मन्त्रं तमेव सिद्धि पार्वतीति महादेवोक्तेः। शुचित्वाद्यनपेक्षणात्सार्वकालिकत्वमुच्चारणस्याह- **सदेति**। सदा हरेर्नाम समुच्चरेदिति भावः। नामोच्चारणस्य सर्वजनसाधारण्येन विहितत्वादुत्कृष्टसाधकानां सिद्धानां चात्र प्रवृत्तिर्न स्यादिति तादृशानप्यत्रानुशास्ति- **जितेन्द्रियश्चेति**। जितेन्द्रियो निगृहीतोभयकरणः, आत्मरतो, भगवति निरतो भगवत्यात्मनि रतं रतिर्वाऽस्येति भगवत्प्रीतिमानित्यर्थः, बुधः पण्डितः सदसद्विवेचनदक्षः। नामनिष्ठाविवृद्धयेऽपेक्षणीया गुणा इमे, ते तदाश्रयनिर्देशेन प्रकाश्यन्ते, एतद्गुणसत्त्वे नाम्नः सकलोऽपि प्रभावः स्फुटं लक्ष्यत इति भावः। यो जितेन्द्रियः सन्नामाभ्यसेदचिरेण वासनाक्षये समाधिलाभं

**पदपरामर्शः**

कुर्यात्, यश्चात्मरतो भगवति प्रवृत्तस्तस्योत्तरोत्तरं प्रीतिपरिपाकः स्यात्, यश्च बुधः शास्त्रज्ञस्तस्यापि यथार्थबोधोदयेन मुमुक्षत्वं सिद्ध्येत्। यो वा वैदिकाचारनिष्ठस्तस्यापि कर्मवैगुण्यनाशेन फलसिद्ध्या चं सत्त्वोदयः स्यादिति। अत्र **जितेन्द्रिय** इत्यनेन कर्मयोगी, **बुध** इत्यनेन ज्ञानयोगी, **आत्मरत** इत्यनेन भक्तियोगी निर्दिश्यते, तेन त्रिविधैरपि योगिभिर्भगवन्नामाश्रयणं निष्प्रत्यूहतया लक्ष्यसिद्धये कर्तव्यमिति लब्धं भवति। अपारसंसारनिवारणक्षमं नामाश्रयतां किं सन्ध्यादिना? तत्राह- **वैदिकमाचरन् सदेति।** नामजापकेनापि यथाधिकारं प्राप्तं वैदिकं कर्मानुष्ठेयमेव, वेदविहितं कर्मानुतिष्ठन्नेव नामोच्चरेन्न तु तद्विहाय, कुर्वन्नैवेह कर्माणि जिजीविषेच्छतं समा इति श्रुत्या भक्तिसम्पत्तये विद्याङ्गभूतस्य नित्यनैमित्तिककर्मणो यावज्जीवमनुष्ठेयतायाः प्रतिपादनात्।

**एवं तेऽभिहितं वत्स! प्रकृष्टं मुक्तिसाधनम्।**
**उत्तमं सर्वधर्माणां शृणु धर्मं सनातनम्॥120॥**

**पदपरामर्शः**

प्रश्नान्तरसमाधानं विवक्षुरिदानीं वात्सल्यगर्भप्रीतिमाविष्कुर्वन् पूर्वप्रकरणमुपसंहरति- **एवमिति। वत्स!** एतेन गुरुकृपैकनिर्भरत्वं द्योत्यते। एवं पूर्वोक्तप्रकारेण ते तुभ्यं प्रकृष्टं मुक्तिसाधनम् अभिहितम्प्रोक्तम् स्वरूपप्रकारविकल्पतद्योग्यतापादकसंस्कारतत्सम्बद्ध- विषयतत्प्रतिबन्धकतन्निरासोपायविवेचनसहकृतं सविधि साङ्गमुक्तम्, मुक्तिसाधने प्रोक्ते प्रकृष्टता तु यथा ज्ञानयोगेऽसहायताप्रत्ययः पतनभयं कर्मयोगे च विघ्नभयं प्रत्यवायभयं तथात्र तन्न, प्रत्युत भगवदाश्रयेण सर्वविधचिन्ताराहित्यं सौकर्यञ्चेति विशेषः। इदानीं भागवतधर्मश्रवणयोग्यतां निश्चित्य सानुमोदं श्रवणे प्रवर्तयति- **शृण्विति।** सर्वधर्माणामुत्तमं सनातनं धर्मं शृणु। सनातनं सना सदा भवं देशकालापरिच्छिन्नात्क्वचिदप्यस्य व्याहतिर्नास्तीति भावः, शास्त्रवश्येषु सर्वत्र सामान्येन प्राप्तेः। धर्मे वेद एव परमं प्रमाणं, तस्य च नित्यत्वाद् धर्ममात्रस्यापि सनातनत्वं सुतरां सिद्धम् । तत्रोत्तमानुत्तमविचारो न युक्तः, वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति

**संवित्करः**

इसप्रकार, हे वत्स! मैनें तुमसे श्रेष्ठ मुक्तिसाधन बताया, अब सभी धर्मों में श्रेष्ठ सनातन धर्म का श्रवण करो।

पदपरामर्शः

तल्लक्षणात् तथापि भागवतधर्माभिप्रायेण तस्योत्तमत्वकथनं नायुक्तम्, तथाहि मन्वादिद्वारा वर्णाश्रमधर्मं प्रकाश्य वेदस्यैकायनशाखयोन्नीतस्यातिरहस्यत्वाद् भगवता स्वमुखेनैव प्रोक्तत्वात्स्वलब्ध्युपायकथनपरो वैष्णवजनैः सेव्यमानो वैष्णवधर्मतया प्रसिद्धो धर्म विवक्षितः यश्च भगवत्प्रसादजनकः समर्पणप्रधानो निवृत्तिपरैः समादृत ऋषिभिश्चानुमोदितः सद्यः पावनकरत्वात् परमपुरुषार्थसाधकत्वाच्चोत्तम इति प्रोक्तः, सद्यः पुनाति सद्धर्मो देव विश्वद्रुहोऽपि हीति भागवतोक्तेः।

**दानं तपस्तीर्थनिषेवणं जपो न चास्त्यहिंसा सदृशं सुपुण्यकम्[1]।**
**हिंसामतस्तां परिवर्जयेज्जनः सुधर्मनिष्ठो दृढधर्मवृद्धये[2]॥121॥**

पदपरामर्शः

धर्मसामान्यापेक्षयाऽस्याचारे सर्वस्य भगवदात्मकत्वात्करुणावृत्तेश्च प्राधान्येनाहिंसा विशिष्यते, अतो दानाद्यपेक्षयाहिंसापालने स्वाभिवेशं प्रदर्शयति- **दानमिति।** धर्मबुद्ध्या न्यायार्जितस्य धनस्य स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्त्वोपादनरूपं दानं भवतु, तपसा कल्मषं हन्तीति शास्त्रस्तुतं कृच्छ्रचान्द्रायणादिवैधक्लेशजनकं कर्मेतिलक्षणकं तपो भवतु, तरति पापादिकं यस्मादिति व्युत्पत्यैव प्रकटितवैभवं गङ्गादिपुण्यतीर्थनिषेवनं भवतु विधिना मन्त्रोच्चारणरूपो जपो वा भवतु, एतत्सर्वमप्यहिंसासदृशं पुण्यं नास्तीति सुधर्मनिष्ठो भगवत्प्रीतिजनकधर्मविशेषाभिनिवेशी वैष्णवजनो दृढधर्मवृद्धये भगवत्प्राप्तिविरोधिपापनिरसनाय सत्त्ववृद्धिहेतुकधर्मसम्पत्यै हिसां सर्वथा **परिवर्जयेत्परित्यजेदिति।** सर्वविधहिंसापरित्यागस्यैवाहिंसारूपत्वात्, प्रवर्तयति चात्र श्रुतिः मा हिंस्यात्सर्वा भूतानीति। दानेष्वभयदानस्य श्रेष्टत्वात्सर्वभूदयायास्तीर्थरूपेण स्मरणात् अहिंसायाः शारीरतपसि समावेशात्, भगवद्भावानुसन्धानसिद्ध्या जपरूपाच्चाहिंसायाः सर्वाकारतया प्रकर्ष इति भावः।

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा।
अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः॥

संवित्करः

दान, तपस्या, तीर्थसेवन, जप आदि के पुण्य से भी श्रेष्ठ धर्म अहिंसा है। अतः धर्मात्मा मनुष्य को अपने धर्म की वृद्धि के लिए हिंसा का सर्वथा परित्याग कर देना चाहिये।

---

[1] पा. भे.- सदृशी शुभाकृतिः।
[2] पा. भे.- परधर्मवृद्धये।

**श्रयन्ति धर्मास्तु तया पृथक् स्थितान् सुवक्रगाः सिन्धुमिवापि निम्नगाः।**
**काष्ठस्थवह्नेरिव घातको हरेश्चराचरस्थस्य च जन्तुहिंसकः॥122॥**

.....................................................पदपरामर्शः.....................................................

*उत्कर्षायाहिंसायाः सर्वथानुष्ठेयतामुक्त्वा तत्सेविनामनायासेन सर्वधर्माश्रयणलाभं निदर्शयन् भगवच्छरीरभूतजीवहिंसनेन भगवद्धननतुल्यदोषमाह-* ***श्रयन्तीति।*** *यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वे गुणास्तत्र समासते सुरा इति भागवतोक्तिवत् तस्या हिंसायाः पृथक् स्थितान् धर्मलोपभिया मनसाप्यसम्बद्धान् जनान् धर्मा मैत्रीकरुणामुदितादयो गुणाः समाश्रयन्ति, तेषां धर्मजन्यसत्त्वशुद्धिलाभः सुतरामेव जायत इति भावः। पात्रतां विमृश्यैभिरेव वयं साध्वनुष्ठिताः स्यामेत्याश्रयन्तीति वा। तेषामनिच्छयापि धर्मलाभे दृष्टान्तमाह-* ***सुवक्रगाः सिन्धुमिवापि निम्नगा*** *इति। भूमेरुच्चावचतया कौटिल्यं धारयन्त्योऽपि निम्नगा गङ्गादिनद्यः सिन्धुं सागरं यथा श्रयन्ति प्राप्नुवन्ति तथा, धर्मास्तादृशानहिंसाव्रतिन इति। हिंसकात्तु धर्मादयोऽपि बिभ्यतीति ध्वन्यते। अहिंसका एव प्राप्तान् धर्मान् यथावत् पात्रतोदयात्सेवितुमर्हन्तीति भावः। हिंसनशीलस्य पापिष्ठत्वमाह-* ***अयन्न केवलं प्राणिनो व्यापादयति, अपितु तदन्तर्यामितयावस्थितं हरिमपीति।*** *जन्तुहिंसको जीवघातकः सकलचेतना-चेतनान्तर्यामिनः प्रकृत्यैव जीवपापतापहरणशीलस्य श्रीहरेरपि* ***घातको*** *मारकः। यद्यपि जीवात्मपरमात्मनोर्नित्यत्वान्न तन्नाशस्तथापि शरीरनाशान्मृत इति लोकदृष्टि-मनुसृत्येत्थमुक्तेर्यदनुग्रहेण जगद्रक्ष्यते, तद्रक्षकनाशरूपोपजीव्यविरोधबोध्यः पापातिशयो विवक्ष्यते। अस्मादृशप्रत्यक्षाविषयस्य हरेर्हननकथनं कथं , कथं वा तस्य चराचरयोः स्थितिरिति दृष्टान्तेन बोधयति-* ***काष्टस्थवह्नेरिवेति।*** *काष्ठस्पर्शेन तद्दर्शनेन वा न दाहप्रतीतिस्तथापि तद्घर्षणात्तद्गतो वह्निराविर्भवतीति सर्वानुभवसिद्धम्, तथैवान्तर्यामि अस्मादृशानां नयनागोचरोऽपि हरिश्चराचरान्तरवस्थितः सर्वं नियमयति क्वचित् प्रीत्यतिशयात्प्रत्यक्षमपि भवति। सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु*

------------------------------------संवित्करः------------------------------------

जिस प्रकार कुटिल (टेढी) गमन करनेवाली नदियाँ अन्ततः समुद्र का ही आश्रय ग्रहण करती है, ठीक उसी प्रकार सभी धर्म अहिंसक पुरुष का ही आश्रय ग्रहण करते हैं। जैसे लकड़ी में विद्यमान आग अदृश्यरूप से छिपी रहती है, वैसे चराचर में भगवान्। अतः जीवहिंसा करने वाला इस जीव में विद्यमान प्रभु की हिंसा करने जैसा ही पाप करता है।

.............................................पदपरामर्शः.............................................

विभावसुवद् विभासीति भागवतोक्तेः। काष्टवह्न्योर्दृष्टान्तेनोभयोः सहभावेऽपि सावरणनिरावरणरूपो भेदो द्योत्यते।

**जलस्थलोत्पन्नशरीरिहिंसया विवर्जयेन्मांसमुदारधीः सदा।**
**दयापरोऽधोगतिहेतुरूपयाऽचिराय लभ्यं भवभीनिवृत्तये॥123॥**

.............................................पदपरामर्शः.............................................

हिंसका न केवलं बन्धनताडनवृत्तिनाशत्रासादिनैव जीवान् व्यथयन्त्यपितु केचन पिशिताशना निर्दयं व्यापाद्य तन्मांसमपि भक्षयन्ति, केचन च पापीयांसस्ततोऽपि जघन्या जिह्वालौल्याद् धर्मापदेशेन देवबलिव्याजेन श्राद्धकर्मणि च पशून् विशसन्ति, तेषु परमकारुणिक आचार्यो नरकसाधनाद्धत्योपलब्धमांससाधनकृत्यात्साग्रहं वारयति- **जलस्थलोत्पन्नशरीरिहिंसयेति।** शास्त्रपर्यालोचनया विवेकपूर्वकं विशेषतो वर्जयेत्परित्यजेदिति। सम्प्रत्यपि तादृशपापाचारे प्रवर्तमानश्चेदचिराय विवर्जयेत्, पुनश्च केनापि कल्पितश्लोकसहकारेण प्रेरितोऽपि नैवं कुर्यादिति सदा विवर्जयेदिति। मांसपदं तत्साधनककृत्यपरं तस्यानेकरूपतया न भक्षणादिपदोपादानम् तेषामर्थत एव लाभात्। अचिराय लभ्यस्यापि मांसस्य हिंसापूर्वकत्वमेवेत्याह- **जलस्थलोत्पन्नशरीरिहिंसयेति** जलोत्पन्नमत्स्यादीनां स्थलोत्पन्नाजादीनां शरीरहिंसाऽधोगतिहेतुरूपा नरकादिगमन-कारणभूता भवतीति नरकयातनानन्तरमपि प्राप्ताधोयोनिजन्मजनितभयवारणाय तया लभ्यं मासं सर्वथा त्यजेदेव। दयापरः कारुणिकः उदारधीर्विशदमतिरिति। अग्नीषोमात्मकं जगदिति श्रुत्यनुरोधेन लोके द्विविधा मनुष्या भवन्ति हृदयप्रधाना दयालवो बुद्धिप्रधानाश्च युक्तायुक्तविवेचनचतुराः। तत्र यदि परदुःखासहिष्णुत्वरूपया करुणयैव हिंसामांसभक्षणादिकं त्यजति चेत्साधु यदि प्रकृत्यैव निष्ठरः स्यात्तदा शास्त्रोक्तं विचार्य नरकपातादात्मानं वारयितुमेव किन्न स्यान्मांसं वर्जयेदिति भावः। मांसशब्दस्य निर्वचनलभ्यार्थं विचार्यास्तिकानां भीतिर्भवति- तथाहि-

मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥

------------------------------संवित्करः------------------------------

उदारबुद्धिवाले दयालु मनुष्य को चाहिये कि संसारभय की निवृत्ति के लिए, अधोगति (नरकादि) के कारणभूत, जल एवं स्थल में उत्पन्न सभी जीवों की हिंसा तत्क्षण ही त्याग दे।

.....................................................पदपरामर्शः.....................................................

यद्यपि पशुना यजेतेत्यादिना श्रौते यागे तदालम्भनं श्रूयते, मा हिंस्यात्सर्वा भूतानीत्यस्य समान्यशास्त्रतया अग्नीषोमीयं पशुमालभेतेत्यस्य विशेषतया विशेषक्षेत्रपरित्यागेन सामान्यशास्त्रप्रवृत्त्या श्रौतयागे न निषेध इति तथापि सांख्यतत्त्वकौमुदीकारेण त्वत्र विहितत्वेऽप्यनर्थजनकत्वन्तूक्तमेव, अत एवोक्तम्-

फलकामास्तु वेदोक्तैः पशोरालम्भनं मखे।
पुनस्तत्तत्फलं भुक्त्वा ये कुर्वन्ति पतन्त्यधः।।

श्रीमद्भागवतेऽपि- नारदेन यागे पशुहिंसाफलं साक्षाद्दर्शितमेवम्-

भोः भोः प्रजापते राजन् पशुन् पश्य त्वयाध्वरे।
संज्ञापिताञ्जीवसंघानिर्घृणेन सहस्रशः।।
एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव।
सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः।।

पशुशब्दस्य छागपरत्वात्तस्यापि च बीजपरत्वं महाभारते लभ्यते-

अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान्।
स चच्छागोऽप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः।।

ऋषय ऊचुः

बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः।
अजसञ्ज्ञानि बीजानि छागं नो हन्तुमर्हथ।।
नैष धर्मः सतां देवा यत्र वध्येत वै पशुः।

इत्थं यागादावपि मांसनिषेधः। श्राद्धे तु नारदेन तन्निषेधः कृतो भागवते-

न दद्यादामिषं श्राद्धे न चाद्यादधर्मतत्त्ववित्।
मुन्यन्नैःस्यात्परा प्रीतिर्यथा न पशुहिंसया।।

कलौ तु विशेषेण तन्निषेधो निर्णयसिन्धूक्ताद्गम्यते-

अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्।।

देवीपूजनादावपि स्वयं देव्या महादेवं प्रत्युक्त्या तन्निषेधो बोध्यते-

पशून् हत्वा तथा त्वां मां योऽर्चेन्मांसशोणितैः।
तावत्तन्नरके वासो यावच्चन्द्रदिवाकरौ।।

.....................................................पदपरामर्शः.....................................................

मानवो यः परत्रेह तर्तुमिच्छेच्सदाशिव।
सर्वविष्णुमयत्वेन न कुर्यात्प्राणिनां वधम्॥

श्रीमद्भागवतेऽपि पञ्चमस्कन्धे नरकवर्णन एवमेव लभ्यते–
"ये त्विह वै दाम्भिका दम्भयज्ञेषु पशून् विशसन्ति तानमुष्मिँल्लोके वैशसे नरके पतितान् निरयपतयो यातयित्वा विशन्ति।"
मांसभक्षकस्य नरकवासः शास्त्रे वर्णितः–

लोभात्स्वभक्षणार्थाय जीविनं हन्ति यो नरः।
मज्जाकुण्डे वसेत्सोऽपि तद्भोजी वर्षलक्षकम्॥

**न स्त्रियं परिगृह्णीयाद् विरक्तो वैष्णवः क्वचित्।**
**मन्वादिस्मृतिशास्त्रेषु तन्निषेधस्य शासनात्॥124॥**

.....................................................पदपरामर्शः.....................................................

अहिंसाधर्मं यथावन्निरूप्येदानीं विरक्तपौष्कल्पान्नैष्ठिकवैष्णवस्य परिग्रहनिषेधं सुदृढमनुशास्ति– **न स्त्रियं परिगृह्णीयादिति।** यथा माताग्नेशिशुं वारयति तथा वात्सल्याच्छास्त्रमुखेनात्र विरक्तेभ्यो हितानुशासनं करोतीति बोध्यते। लक्ष्यसिद्धौ विषयवैतृष्ण्यस्यात्यन्तापेक्षणात्। तदिच्छन्तो ब्रह्मचर्यं चरन्तीति श्रुत्या ज्ञानस्य भगवत्कैङ्कर्यस्य चानिवार्यपरिकरभूतं वैराग्यं सकलानार्थभूतरागनिवृत्यैव चारितार्थ्यं बिभर्ति, नान्यथा। परमात्मव्यतिरिक्तेभ्यः सर्वेभ्यो वैराग्यस्यापवर्गं प्रत्यन्वयव्यतिरेकानुविधायित्वेनातितरां भजनोपकारकतया च प्राधान्यम्। कोषात्परिग्रह–शब्दस्यानेकार्थकत्वेऽपि यावदपेक्षितवस्तुनोऽतिरिक्तपरिग्रहस्य निषेधात्तत्रापि स्त्रीपरिग्रहस्यातिमात्रं बन्धकारितया तत्रैव निषेधः पर्यवसन्नः। क्वचित्कदापि। यथोक्तं भागवते–

न तथास्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः॥

-----------------------------------संवित्करः-----------------------------------

**विरक्त वैष्णव को कभी भी दारपरिग्रह (विवाह या स्त्रीसेवन) नहीं करना चाहिए। मनुस्मृति आदि धर्मग्रन्थों में इसका स्पष्ट एवं नितान्त निषेध किया गया है।**

..........पदपरामर्शः..........

सङ्गस्तु इदं मे स्यादित्याकारिका विषयोन्मुखधीः। परिपूर्वकग्रहधातोर्दारक्रियायामपि दर्शनाद्विवहेदित्यर्थस्तथापि न केवलं विवाहनिषेधोऽपितु यथाकथञ्चिदपि तद्ग्रहणे निषेधस्य विवक्षितत्वात्तादृग् धातुग्रहणम् स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् इत्युपक्रम्य स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेदित्यन्तेन याज्ञवल्क्योपरिषदुक्तेन लभ्यार्थो बोधितः, भागवतेऽपि तदपरिग्राह्यत्वमेवं कथितम्–

सङ्गं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः।
मत्सेवया प्रतिलब्धात्मभावो वदन्ति या निरयद्वारमस्य।।
योपयाति शनैर्माया योषिद्देवविनिर्मिता।
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम्।।

तत्परिग्रहस्य सर्वार्थविनाशकत्वं सौभरिवचनात्सिद्धम्–

अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य।
अन्तर्जले वारिचरप्रसङ्गात्प्रच्यावितं ब्रह्म चिरं धृतं यत्।।

अतो विरक्तानां श्रीवैष्णवसंन्यासिनां न स्पृशेद्दारवीमपीति स्त्रीपरिग्रहस्यात्यन्तिको निषेधः, तादृशपरिग्रहस्य निषेधकं धर्मशास्त्रं हेतुत्वेनोपन्यस्यति– **मन्वादिस्मृतिशास्त्रेषु तन्निषेधस्य शासनात्** इति। यद्वै किञ्च मनुरवदत्तद्भेषजमिति श्रवणात्, मन्वर्थविपरीता तु या स्मृतिः सा न शस्यत इत्युक्तेश्च प्राधान्यान्मनुस्मृतेः प्रथमं स्मरणमादिशब्दादत्रिदक्षस्मृत्यादीनां सङ्ग्रहः। यद्यपि मुख्यशास्त्रत्वं तु वेदस्यैव तथापि वेदाविरोधेन विधिनिषेधशासकत्वादेवैषां शास्त्रत्वम्। अत आचार्योऽपि शास्त्रसुलभाकारेणैव निषेधति– **न परिगृह्णीयादिति।**

**विवाहे तु कृते स स्यादारूढपतितो ध्रुवम्।**
**आरूढपतितस्यार्थे प्रायश्चित्तं न विद्यते।।125।।**

..........पदपरामर्शः..........

यदि कश्चिद्विरक्तो वैष्णवो धृत्यभावान्निवृत्तिधर्मं परित्यज्य विवाहं कुर्यात्तथापि तस्य कृतविवाहस्य कलङ्कयोगो दुर्निवार्योऽप्रायश्चित्तीयतया दुर्गतिश्च नूनमिति तस्य

----------संवित्करः----------

यदि विरक्तवैष्णव विवाह करता है तो वह आरूढपतित माना जाता है, उस पाप की निवृत्ति के लिए शास्त्रों में कोई प्रायश्चित्त नहीं है।

..........................................................पदपरामर्शः..........................................................

लोकवेदोभयभ्रष्टतामाह- **विवाहे तु कृत** इति। प्रथमं मुमुक्षुतया निवृत्तिपथमारुह्य ततः परिभ्रश्य प्रवृत्तौ पतित इत्यारूढपतितो नियमतो मन्यते, तादृशानामाश्रमादाश्रमं गच्छेदिति स्मृत्या पूर्वं गृहस्थाश्रमे मनोनिग्रहमभ्यस्य तदनु यथाक्रममारोहस्यौचित्यात्, यदहरेव विरजेत्तदहरेव प्रव्रजेदित्यस्यानुसारमुत्कटवैराग्यं विनैव स्वीकृतनिवृत्तितो भ्रंशस्यातितरामयुक्तत्वात्। अत एव शास्त्रेऽपि वान्ताशी निरपत्रप इत्यादिना तन्निन्दा लभ्यते। स्वसामर्थ्यमविगणय्य लोकपूज्यताकामनया श्मशानवैराग्येन वा यथाकथञ्चिदारूढोऽनिर्वाहाद् वृक्षात्पतितः कपिरिव मृत्युभिया युद्धाद्देहरक्षायै पलायित सैनिक इव वा लोक उपहासपात्रं भवति। वैराग्याभावे पूर्वमेव विवाहः कथन्न कृत इत्येवमुपहासास्पदस्यापि न केवलं पातित्यमपितु न पुनस्तस्य तावतापि समुद्धारसंभवः, अप्रायश्चित्तीयत्वात्। श्रूयते हि ब्रह्महत्यादीनामुत्कटपापानामपि प्रायश्चित्तं किन्तु तत्राप्येवंविधस्य न प्रायश्चित्तमित्याह- **प्रायश्चित्तं न विद्यत** इति। यदीयप्रगाढप्रश्लिष्टपापशोधने, तत्परिच्छेदने वा नियामकमपि शास्त्रमसमर्थम्, यश्च जघन्य इति मत्वा शास्त्रेणापि स्वानुशासनाद्दूरं प्रक्षिप्तस्तं रौरवादिनरकनिमज्जनात्को वारयेदिति भावः। अयमेवाघपापयोरर्थकृतो विशेषः, जनाः पान्त्यस्मादात्मानमिति पापं किन्तु इदमेवाघस्याघत्वं यद्भोगं विना प्रायश्चित्तेनापि न हन्यत इति।

**प्रच्युतो नैष्ठिकाद् धर्मादात्महापि प्रकीर्तितः।**
**मठाध्यक्षत्वदीक्षादौ बहिष्कार्यः स यत्नतः॥126॥**

..........................................................पदपरामर्शः..........................................................

प्रायश्चित्ताविषयत्वेन पातित्यं निरूप्य तादृशस्य सर्वथा स्वरूपात्प्रच्युतस्य लोकप्राप्ताधिकाराद् बहिष्कृतिमाह- **प्रच्युत** इति। आत्मशब्दस्य धृतिबुद्धिस्वभाव-ब्रह्माद्यर्थे प्रयोगदर्शनादनेन धृतेः बुद्धेः स्वभावस्य च नाशः कृत इत्यात्महा, ब्रह्मशब्दस्य तेजःपरत्वाद् ब्रह्मणो नाशोऽपि कृतः यथोक्तं सौभरिणा- ''प्रच्यावितं ब्रह्म चिरं धृतं यत्'' इति। यथा दाहकत्वाभावेऽग्नेः स्वरूपनिरूपकधर्मो नष्टः, वृत्तिमत्त्वस्य धर्मत्वोक्तेः, तथायमपि नैष्ठिकाद् धर्मात्प्रच्युत इत्यात्महेत्युच्यते, अतः स्वरूपमाश्रितो-

---------------------------------संवित्करः---------------------------------

इसप्रकार जो विरक्त वैष्णवधर्म से पतित (च्युत) हो गया, वह आत्मघाती कहलाता है। क्योंकि उसने आत्मकल्याण के लिये स्वीकृत विरक्त धर्म का त्याग किया अतः ऐसे व्यक्ति को मठाध्यक्ष, महान्त आदि पद से एवं दीक्षादि कार्य से सद्यः बाहर कर देना चाहिए।

........................................पदपरामर्शः........................................

*ऽधिकारः सुतरामेव नष्ट इत्यत आह-* ***मठाध्यक्षत्वेति****, मठाध्यक्षत्वे दीक्षादौ च न विनियोक्तव्यः, यदि पुनर्दीक्षां गृहीत्वा विरक्तजनसमवाये, प्रविविक्षेत्, नामरूपादिकं परिवर्त्य छद्मना प्रवेष्टुमिच्छेत्तदा विज्ञातः सन् बहिष्कार्यः बलप्रयोगेणापीति यत्नत इत्यनेन लभ्यते।* ***अपिशब्देन*** *साम्प्रदायिकवैष्णवाराधनादिकृत्येषु स कीदृशमपि कैङ्कर्यं नार्हति, संलापादिसामान्यव्यवहारयोग्योऽपि नास्तीति धिया न ग्राह्यः किमुत पङ्क्तिप्रवेशादाविति भावः। तादृशपतितेन सह सहासनोपवेशसम्भाषणकर्तुरपि प्रायश्चित्तं कार्यं स्यात्।*

**व्यासेन ब्रह्मविद्यातो बहिष्कारोऽस्य सूचितः।**
**शिष्टा यज्ञादिकार्य्येषु वर्जयन्ति तथाविधम्।।127।।**

........................................पदपरामर्शः........................................

*तादृशस्य साम्प्रदायिकबहिष्कारमुक्त्वेदानीं शास्त्रे शास्त्रीये यागादौ चानधिकृततया ततो बहिष्कृतिमभिधत्ते-* ***व्यासेनेति।*** *आरूढपतितत्वादेवास्यार्थित्व-सत्त्वेऽपि ब्रह्मविद्यायामधिकाराभावं संसूच्य शास्त्रपर्युदस्तत्वात् ततो बहिष्कारो निर्दिष्टः, यश्च ब्रह्मसूत्रस्यापशूद्राधिकरणे महता विस्तरेण विवेचितः। व्यासेन, येन वेदार्थबुबोधयिषया कारुण्यान्महाभारतादि रचितम्, तेनापि, व्यासो कृपणवत्सल इत्युक्तेः। मास्तु ब्रह्मविद्याधिकारो यथाधिकारं यज्ञादौ दूरसेवां कोऽपनेष्यति, तत्राह-तथाविधा जना यज्ञादिकार्येष्वपि दूरत एव वर्जनीयाः वैगुण्यभीत्या न क्वचिदपि कर्मणि विनियोज्याः।* ***शिष्टाः*** *वेदप्रामाण्याभ्युपगन्तारः, प्रमाणभूता आचारनिष्ठाश्च ब्राह्मणा विवक्षिताः। यथोक्तं महाभाष्ये- एतस्मिन्नार्यावर्त्ते निवासिनो ये ब्राह्मणा कुम्भीधान्या अलोलुपा अगृह्यमाणकरणा किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्र भवन्तः शिष्टा इति। न तादृशस्य ज्ञानाधिकारो न वा कर्माधिकारः, येन ज्ञानपूर्वककर्मानुष्ठानजन्यपुण्यद्वारा पापं नाशयेदिति भावः।*

------------------------------संवित्करः------------------------------

**भगवान् वेदव्यास ने भी उस (आरूढपतित) व्यक्ति को ब्रह्मविद्या प्राप्ति के अधिकार से बहिष्कृत किया है, तथा शिष्टजन भी यज्ञादिकार्यों में उसे स्थान नहीं देते।**

**विरक्तैः वैष्णवैस्तस्मादारूढपतितो न हि।**
**व्यवहारेषु योक्तव्यः तत्संसर्गोऽपि पापकृत्॥128॥**

.......................................................पदपरामर्शः.......................................................

*इत्थं लोकवेदबहिष्कारेण गर्हितस्य कारुणिकैर्वैष्णवैरप्यस्वीकारमाह– तादृशः सर्वबहिष्कृतो वैष्णवैर्बाह्यव्यवहारेऽपि न नीयते, किमुतान्तरङ्गसेवायाम्, तेन सह भोजनसम्भाषणादिव्यवहारे का हानिरित्यत्राह–* ***तत्संसर्गोऽपि पापकृदिति।*** *संसर्गजानि पापानि तेन सह व्यवहर्तुरपि स्युरिति भिया कथमपि सम्बन्धो न स्थाप्य इति भावः। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमित्युक्तेः। एवमारूढपतितस्य सर्वविधबहिष्कार्यतां दुर्गतिञ्च निरूप्याच्युतगोत्रीयो वैष्णवो विवाहं कृत्वा कथमप्यात्मपातं न कुर्यादिति कठोरादेश आचार्यस्य।*

-------------------------------------संवित्करः-------------------------------------

इसीलिए विरक्तवैष्णवों को चाहिये कि उस आरूढपतित व्यक्ति के साथ सहभोजन संभाषणादि जैसा कोई व्यवहार नहीं रक्खे, क्योंकि पतित के साथ संसर्ग भी पापका जनक ही होता है।

**समर्प्य कर्माणि शुभानि वैष्णवो[1] रामाय भक्ष्यं च निवेद्य भक्षयेत्।**
**अहर्दिवं वीतभयं समुत्तमं विमुक्तधीः स्वाघनिवृत्तिकामनः॥129॥**

.......................................................पदपरामर्शः.......................................................

*अहं राज्यञ्च रामस्येति श्रीभरतोक्त्यात्मा भवत्वात्मीयं वा सर्वमपि भगवते समर्पणीयमिति समर्पणप्रधानेऽस्मिन् वैष्णवधर्मे तदर्पणबुद्ध्या क्रियमाणकर्मणामपि न बन्धनकारित्वं तत्कुरुष्व मदर्पणमित्युक्रम्य मोक्ष्यसे कर्मबन्धनैरिति भगवदुक्तेः, अत इत्थमर्पणमेव भक्तानां तत्प्रसादाद्भीतिनिवर्तकं सिद्ध्यतीति तच्छिक्षयति–* ***समर्प्येति।*** *कर्मफलाद्विमुक्ताय विमुक्तये धीर्यस्य, यद्वा विमुक्ता असङ्कुचिता धीर्यस्योदारमनाः, स्वस्याघानां निवृत्तौ कामना समीहा यस्य, निजपापविनाशनेच्छुर्वैष्णवो विष्णुर्देवताको भक्तः शुभानि कर्माणि रामाय भगवते समर्प्य समुत्तममुत्तमोत्तमं भक्ष्यं भोज्यं तस्मै*

-------------------------------------संवित्करः-------------------------------------

पूर्णतः पापनिवृत्ति एवं मोक्ष की कामना रखने वाले वैष्णवों को चाहिये कि अपने सभी शुभ कर्मों को प्रभु श्रीरामजी के श्रीचरणों में समर्पित करता जाय, तथा भगवान् श्रीराम को नैवेद्य अर्पित करके भगवत्प्रसाद ही ग्रहण करे।

---

[1] पा. भे.– शुभानि कर्माणि समर्पयेत्सदा।

.....................................................पदपरामर्शः.....................................................

भगवते अहर्दिवं प्रत्यहं निवेद्य समर्प्य वीतभयं निश्चिन्तं भक्षयेद् भुञ्जीत। वीतभयमिति क्रियाविशेषणम्। अहनि च दिवा चेति द्वन्द्वेऽचतुरेति निपातनादहर्दिवम् प्रत्यहमित्यर्थः। शुभकर्मसमर्पणं नाम भगवत एव कर्माराध्यत्वं कर्तृत्वं भोक्तृत्वञ्चेति बुद्ध्यार्पणम्, एतेन स्वकर्तृत्वसमर्पणादात्मसमर्पणमुक्तम्, उत्तमवस्तुसमर्पणेन ममतात्याग आत्मीयसमर्पणञ्चोक्तं भवति। भगवत्प्रसादग्रहणात्सत्त्वशुद्धिः कर्मसमर्पणाच्च तत्फलभीतिनिवृतिर्भवतीति भावः। उक्तञ्चाहारशुद्धौ सत्त्वशुद्धिरिति। भगवत्प्रसादसेविनां मायाविजयोऽञ्जसा भागवते वर्ण्यते-

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि।।

**अर्चावतारोऽपि च देशकालप्रकर्षहीनः श्रितसम्मतश्च।**
**सहिष्णुरप्राकृतदेहयुक्तः पूर्णोऽर्चकाधीनसमात्मकृत्यः।।130।।**

.....................................................पदपरामर्शः.....................................................

तादृशचित्तशोधकप्रसादलाभोऽर्चनस्य दृष्टफलं तच्चार्चनमर्चाविग्रहायत्तमिति पञ्चविधेष्वपि परव्यूहविभवार्चान्तर्यामिषु भगवदर्चाविग्रहस्य सौलभ्यातिशयत्वेन तद्वैशिष्ट्यमाह- **अर्चावतारोऽपीति**। अर्चाया अवतारोर्चावतारः अर्च्यते इत्यर्चा भगवद्विग्रहः, सैवावतार इत्यर्चावतारः। मन्त्रमन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रह इत्युक्तेः। यथा सर्वावतारिणो भगवतो रामस्य कृष्णाद्यवतारास्तदानीन्तानां परमसौलभ्येन नयनविषयताङ्गतास्तथैव भक्तैः क्रियमाणसपर्याविधिसम्पूर्त्या आराध्याकारेण करुणया सर्वलोकनयनगोचरतयाविर्भूत इति। यथाऽन्ये भगवदवताराः पूर्णा अनन्तकल्याण-गुणनिलयतया प्रसिद्धास्तथैवायमपीत्यपिना समुच्चिनोति। सर्वैश्वर्यसम्पन्नस्याप्यस्य केचन गुणविशेषाः समधिकवात्सल्यमाहुः। नास्य प्रकर्षो देशकालनिबन्धन इति सर्वेषु देशेषु सर्वकाले चैश्वर्यं समानमेवेति। तीर्थविशेषे पूजितो भवतु साधारणगृहे वा सेवितो भवतु, प्राचीनविग्रहो भवत्वर्वाचीनो वा सर्वत्रैश्वर्यं सममेवेति भावः।

-------------------------------------संवित्करः-------------------------------------

श्रीभगवान् का जो अर्चावतार स्वरूप होता है, वह देश तथा काल के प्रकर्ष से हीन, (अर्थात् सर्वत्र एवं सर्वदा समान रूप से शुभ फलप्रद होता है) स्वाश्रितभक्तों के मनोरथपूरक, उनके समस्त अपराधों को सहन करनेवाला, अप्राकृतविग्रह धारण करने वाला पूर्णतम होता है तथा उनके समस्त धूप नैवेद्य आदि उपचार भक्त के अधीन होते हैं।

.....................................................पदपरामर्शः.....................................................

*सामान्यचक्षुषां भौतिकवत्प्रतीतमपि तत्स्वरूपमप्राकृतमेव, भगवन्मूर्तिः सर्वदा चिन्मय्येव भवति, पाषाणविग्रहो धातुविग्रहो इत्यादिव्यवहारस्तु स्वरूपाज्ञानप्रयुक्तः। यथा भगवदवताराः पूर्णं पारमेश्वरं स्वभावमजहतोऽवतरन्ति तथाऽयमपि विभुत्वादिना परिपूर्ण एव। त्रिभिर्विशेषणैस्तदैश्वर्यस्य स्वरूपस्य च परिपूर्णत्वं नित्यत्वञ्चोक्त्वा त्रिभिरर्चकेषु कारुण्यातिरेकाद् भक्तपारवश्यसूचका गुणविशेषा उच्यन्ते- श्रितानां स्वाश्रितां भक्तानां सर्वथाभिमतस्तदानुकूल्येन वर्तते। पूजकस्य सेवापराधानपि कारुण्यात्सहते। अथवा को वेह सामान्यो यथाशास्त्रं तत्पूजनं सविध्यनुष्ठातुं प्रभवेत्तथापि समक्षं तदपचारान् सहत इति भावः। अपूर्णमपि पूर्णं मत्वा प्रसीदति, यथोक्तं-*

तुलसीदलमात्रेण जलस्य चुलुकेन वा।
विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः॥

***अर्चकाधीनसमात्मकृत्य*** *इति यदीयं सर्वमपि जागरणस्नानभोजनादिकृत्यं पूजकाधीनम्। इदमेव भक्तभावपारतन्त्र्यं सर्वेश्वरस्य स्वतन्त्रस्यापि भगवतः। यत्प्रीत्या भगवान् तदिच्छानुविधायी भवति। तद्यथा यदा तुलसीदलं निक्षिप्य नाभ्येति मन्त्रमुच्चार्य घण्टानादेन नैवेद्यं पुरतो निधाय च भोजयति तदानीमेव भगवान् तद्रुचिमनुवर्तमानो भुङ्क्ते। अयमेव चार्चावतारस्य सौलभ्यातिरेकः। न तस्य प्रतिमास्तीति मन्त्रानुरोधेन केचनेत्थमर्चाविग्रहार्चनमवैदिकमिति प्रलपन्ति, तत्र प्रतिमाशब्दः सदृशपरस्तेन न तत्सदृशोऽस्तीत्याशयः, दृश्यते च लोकेऽप्रतिमो विद्वानित्यादौ प्रतिमाशब्दस्य सादृश्यार्थवाचकत्वम्, अत आह श्रुतिः न तत्समश्चाभ्यधिकश्च दृश्यत इति।*

**स्वयं व्यक्तश्च दैवश्च सैद्धो मानुष एव च।**
**देशादौ हि प्रशस्ते स वर्तमानश्चतुर्विधः॥131॥**

.....................................................पदपरामर्शः.....................................................

*अभिमतशास्त्रविहितमनोवाक्कायसाध्यसपर्याविधिसम्पूर्त्या सौशील्यात्सान्निध्यदित्सया स्वस्वरूपमुपलम्भयतो नयनानन्दाम्बुधिं वर्धयतः स्नानतिलकालङ्करणादिव्याजेन*

------------------------------संवित्करः------------------------------

दिव्यदेशादि प्रशस्तस्थान पर विद्यमान यह अर्चावतार व्यक्त, दैव, सैद्ध, एवं मानुष भेद से चार प्रकार का माना जाता है।

........................................................पदपरामर्शः........................................................

*दिव्यस्पर्शसुखं वितरतो भक्तानुकम्पिनो भगवतः सेवेच्छापूर्णान्तराविर्भावकभेदनिबन्धनं चातुर्विध्यमाह-* **स्वयमिति।** *अर्चावतारतया स एव सौलभ्यादिपरिपूर्णो भगवान् श्रीरामः क्वचित् स्वयं व्यक्तः स्वेच्छयाविर्भूत क्वचन दैवो देवप्रार्थनयाविर्भूतः सैद्धः सिद्धैः प्रकटितः क्वचिच्च मानुषो भक्तिपुष्ट्यै मनुष्यप्रार्थनां व्याजीकृत्य लब्धाविर्भाव इति चतुर्विधोऽर्चावतारोऽयोध्यामिथिलाचित्रकूटवाराणसीप्रयागवृन्दावनतिरुपत्यादौ पुण्यदेशे वर्तमानो विद्यमानो वैष्णवजनैः पाञ्चरात्राद्यागमविधिना सेव्यमानस्तन्मनोरथं दुहानो विलसतीत्यर्थः।*

**आवाहनासनाभ्यां च पादाद्याऽऽचमनैस्तथा।**
**स्नानवस्त्रोपवीतैश्च गन्धपुष्पसुधूपकैः॥132॥**
**दीपनैवेद्यताम्बूलप्रदक्षिणविसर्जनैः।**
**षोडशाऽर्चाप्रकारैस्तमेतैरर्चेत्सदा सुधीः॥133॥**

........................................................पदपरामर्शः........................................................

*सभेदं पूजाधिष्ठानमुक्त्वा तत्पूजनक्रमज्ञानाय षोडशोपचारान् परिगणयति-* **आवाहनासनाभ्यामिति।** *क्रमस्यापेक्षितत्वादेव पूर्वनिपातविध्युपेक्षा। षोडशत्वायादि-पदनोर्घ्यसङ्ग्रहः। आचार्यानुगृहीतरामार्चनपद्धत्युक्तविधिना पुरुषसूक्तगतमन्त्रै-स्तज्ज्ञानाभावे षडक्षरब्रह्मविद्ययैव वा सर्वोपचारान्कुर्यात्, वैष्णवो मूलमन्त्रेण सर्वत्रार्चनकर्मणि, उपचारानिमान् कुर्वन् भक्तियुक्तेन चेतसेत्युक्तेः। आवाहनविसर्जने विधिसाङ्गत्वसिद्ध्यर्थे नित्यसन्निहितत्वाद्भगवतः।* **अर्चेत्सदेत्यनेन** *भगवदर्चनस्य नित्यविधित्वं दर्शितम्, तेन नित्यकर्मणि निष्कामस्य यथाशक्त्युपचारेणापि न दोषः, यथोक्तं मनुना-*

*वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः*
*तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्।*

--------------------------------संवित्करः--------------------------------

**वैष्णवजन, इनका आवाहन, आसन, पाद्य, अर्घ्य, आचमन, स्नान, वस्त्र, उपवीत, गन्ध पुष्प, धूप, दीप, नैवेद्य, ताम्बूल, प्रदक्षिणा तथा विसर्जन, इन षोडशोपचारों से समन्त्रक (पुरुषसूक्त आदि के मन्त्रों से) यथावत् पूजन करें।**

......................................................पदपरामर्शः......................................................

इत्थं यथाकालं न्यूनाधिकोपचारादिकमुपपद्यते, अतश्चाण्वप्युपहृतं भक्तैर्मम तोषाय कल्पत इति भगवदुक्तिः। सुधीर्वैष्णवागमोक्तपूजनविधिं सम्यग् जानन् शोभनभावनो वा। एतेनार्चनस्य समन्त्रकत्वमुक्तम्, उक्तञ्च–

सर्पं दृष्ट्वा यथा कायं कम्पते च मुहुर्मुहुः।
अमन्त्रमर्चकं दृष्ट्वा तथा भीतो जनार्दनः।।

जगज्जननप्रवेशनियमनप्रकटितैश्वर्यो भगवानेव सर्वथानर्हेऽपि मयि करुणया स्वोपलब्धिपूर्वकपूजनावसरदानेन स्वीकृत्य मां कृतार्थयतीत्यहो तस्य दीनानुकम्पित्वमित्येवं सम्यग् ध्यायन्नर्चेदिति द्योतयितुं **सुधीरित्युक्तम्।** प्रीतिपूर्वकत्वसमाहितत्वादिकन्त्वर्थतः सिद्धम्। अत्र **षोडशार्चाप्रकारैरिति** राजोपचारस्याप्युपलक्षणम्, तत्स्वरूपञ्च–

ततः पञ्चामृताभ्यङ्गस्योद्वर्तनं तथा।
मधुपर्कपरिमलद्रव्यानि विविधानि च।।
पादुकान्दोलनादर्श व्यजनं छत्रचामरे।
वाद्यार्तिक्यं नृत्यगीतं शय्या राजोपचारकाः।।

**जगत्पते श्रीश जगन्निवास प्रभो जगत्कारण रामचन्द्र।**
**नमो नमः कारुणिकाय तुभ्यं पादाब्जयुग्मे तव भक्तिरस्तु।।134।।**

......................................................पदपरामर्शः......................................................

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदेति।।

भीष्मोक्त्या पूजनविधिं प्रदर्श्य पूजावसाने भगवन्तं स्तुयादित्यनुरोधेनार्चनस्य सर्ववैगुण्यापहारकं स्वाभिमुखीकरणानुगुणपदावलिनिवेशललितमभीष्टप्रार्थनागर्भं स्तवं सप्रकारं शिक्षयितुं स्वयं स्तवीति– **जगत्पत** इति। जगत्पते चराचरस्वामिन्! **श्रीश** श्रीसीतानाथ! **जगन्निवास** सर्वान्तर्यामिन्! **प्रभो** सर्वसमर्थ! **जगत्कारण** संसारोत्पादक! **रामचन्द्र!** दाशरथे इत्येवं षड्भिः पदैः षड्विधमैश्वर्यं प्रकाशितम्– तथाहि

------------------------------संवित्करः------------------------------

हे जगत् के पालक! जगन्निवास, जगत्कारण, करुणावरुणालय श्रीसीतानाथ श्रीरामचन्द्र! आपको बार बार प्रणाम है तथा आपके युगल श्रीचरणकमलों में मेरी भक्ति दृढ हो। वैष्णवजन इन शब्दों से परमप्रभु का वारम्वार संस्तवन करें।

....................पदपरामर्शः....................

जगद्रक्षणपालनजनितं यशो जगत्पत इत्यनेन, धर्मविग्रहत्वाद् धर्म रामचन्द्र इत्यनेन श्रीश इत्यनेन श्रियं, सर्वविधैश्वर्य प्रभो इत्यनेन, सर्वान्तर्यामित्वेऽपि निर्लिप्ततालक्षणं वैराग्यं जगन्निवास इत्यनेन, जगच्चिकीर्षया ज्ञानपूर्वकत्वाज्ज्ञानं जगत्कारण इत्यनेन च समसूचयत्। उत्पत्तिपालननियमनानि जगदादिपदत्रयेण संसूच्य तस्य निर्विशेष-ब्रह्मवद्गुणदारिद्र्यं निराकर्तुं नित्यसौभाग्यसम्पदमाह- **श्रीशेति**। सकलमङ्गलमूलनित्य-श्रीनित्यपरिचरितचरणयुगल इत्यर्थस्तेन न केवलं जगन्निवासः, श्रीनिवासोऽपीति लभ्यते। भगवति भक्तिप्रार्थनायां क्रियमाणायां तत्रावश्यकपुरुषकारसम्पत्तिः सन्दर्शिता। प्रभो इत्यनेन न केवलं सर्वसामर्थ्यमपितु विभुत्वमपि, तेन सर्वत्र परिपूर्ण इत्यर्थः। तस्य चाश्रितरक्षणविलक्षणत्वेन सौम्यत्वसौलभ्यादिस्पृहणीयगुणाकरत्वमाह- **रामचन्द्रेति**। शरणागतरक्षणादिधर्मप्रवर्तक! जातिगुणवृत्तादिवैषम्यानादरेण प्रार्थनामात्रेणा-भयदानप्रथितौदार्य! अत्र जगत्पतित्वादिपञ्चकमीश्वरलक्षणमनूद्य तद्रामचन्द्रेऽभिधातुमन्ते तदुपन्यासो विशेषणानां विशेष्यान्वयित्वौचित्यात्। तस्यैव सर्वेश्वरत्वेन भरार्पणयोग्यत्वं द्योतितम्। स्वनमस्कारोद्देश्यतया साधनहीनेष्वपि करुणाकरत्वमेव चतुर्थ्यन्तेनाह- **कारुणिकाय** निसर्गकृपाब्धये परदुःखेक्षणाव्यवहितोत्तरद्रवणशीलाय नमो नमः। नमो नम इति वीप्सा विभूतिगुणानन्त्यानुभूतिजनितं भक्तिप्रकर्षं द्योतयति। फलरूपतया स्वाभीष्टं प्रार्थयते- **पादाब्जयुग्मे तव भक्तिरस्तु**। पादाब्जयुग्म इति परमप्रेमास्पदत्वेन भोग्यत्वं सूचितम्। भक्तिरत्र प्रीतिः, अस्त्विति प्रार्थनायां लोट्।

**मनोमिलिन्दस्तव पादपङ्कजे रमार्चिते संरमतां भवे भवे।**
**यशःश्रुतौ ते मम कर्णयुग्मकं त्वद्भक्तसङ्गोऽस्तु सदा मम प्रभो॥135॥**

....................पदपरामर्शः....................

यथा घृतबिन्दुपातेन नाग्निज्वाला शाम्यति, सैव महता घृतधारासम्पातेनाचिरं शाम्यति, तथैव दुष्टं दुर्धरं मनो भ्रमर इव स्वल्पविषयसौरभेषु क्षणसुभगेषु पद्मेषु भ्रमन्न शान्तिमेति, अभिमतामोदनिर्भरं भगवत्पादपङ्कजं प्राप्यावश्यं निश्चलं स्यादिति

--------------------संवित्करः--------------------

हे स्वामिन्! हे भगवन् श्रीराघवेन्द्र रामचन्द्र! मैं जब जब संसार में देह धारण करूँ, तब तब निरन्तर जगज्जननी श्रीसीताजी द्वारा पूजित एवं सेवित आपके युगल श्रीचरणकमलों में मेरा चित्तरूपी भ्रमर रमण करता रहे, मेरे कर्णयुगल आपके पावन गुणमय चरितों के श्रवण में सदा संलग्न रहे तथा आपके प्रिय भक्तों का सत्संग सदैव मुझे प्राप्त होता रहे।

.......................................................पदपरामर्शः.......................................................

मनसे श्रवणेन्द्रियाय च दिव्याभिमतभोगप्रदानेन तदसद्विषयप्रावण्यप्रयुक्तचापल्यादि-निरसनपूर्वकं भागवतप्रसङ्गं प्रार्थयते- **मनोमिलिन्द** इति। मन एव मिलिन्दो भ्रमरो मनोमिलिन्दः, विषयाभिनिविष्टतया यत्नशतेनाप्यनिवार्य इति गम्यते। तव पादपङ्कजे चरणारविन्दे सम्यग् रमतां तदानन्दसम्भृतो भवतु। मिलिन्दो यथा कण्टकैराविध्यमानोऽपि तत्रैव रमते तथैव मे मनो विघ्नानुपक्ष्य रमतामिति भावः। पादपङ्कज इत्यनेनानुगुणामोदाकरत्वं सूच्यते। पुनस्तद्विशिनष्टि- **रमार्चित** इति। रमया श्रियार्चिते पूजिते, विभवकामनया देवैरप्यर्चितया रमयार्चित इति पूज्यतमत्वात्पारम्यं द्योतितम्। यद्वा निरतिशयपेशला हि रमा, ततोऽप्यधिककोमलाभ्यां तत्करकञ्जाभ्यामप्यर्चित इत्याशयेन भगवत्पादपङ्कजयोर्निरतिशयसौकुमार्यं प्रकाशितम्। यद्वा सकलरमणीयगुणाकरस्यापि रामस्य मनोरमा या रमा श्रीसीता प्रीतिपात्रम्, तयापि प्रेमास्पदतयार्चिते सेविते, तेन पादपङ्कजस्य तत्परमेप्सितत्वं सूचितम्। यथोक्तं भागवते- ऊर्वोर्निधाय करपल्लवरोचिषा यत्संलालितमिति। कर्मफलस्य दुर्निवार्यतया तत् कर्मपारवश्यादनेकजन्मलाभेऽप्यभिमतामोदास्वादे गाढाभिसन्धिं द्योतयन् नैरन्तर्यं वाञ्छति- **भवे भवे जन्मनि जन्मनीति।** निरतिशयानन्दनिमग्नस्य तस्यासकृद्दुःखालयस्य भवस्य प्राप्तिरपि न दुःखावहा स्यादिति भावः। भद्रं कर्णेभिः शृणुयाम देवा इत्याम्नायापेक्षामनुरुध्याभिमतविषयलाभं प्रार्थयते- **यशश्श्रुतौ।** श्रवणं श्रुतिर्भावे क्तिन्। त्वदीययशःश्रवणे मम कर्णयुग्मकं श्रवणयुगलं संरमतामिति पूर्वक्रियान्वयः। यदि भवप्राप्तिस्तत्संसर्गो वानुरागं प्रतिबन्धीयात्तदा यशःश्रवणमेवोत्तेजकसामग्रीवत्तत्राधिकरतिजनने प्रभवेदिति गुणगणैः कर्णरन्ध्रपूर्त्त्यर्थं तत्सामग्रीसंसर्गः प्रार्थ्यते इति भावः। कर्णरन्ध्रस्याकाशत्वाद्गुणगणानां चामूर्तत्वान्न कदाचिदपि पूरणमतो नित्यमेव श्रवणं फलिष्यतीति स्वाभिचरणाः। एकस्यापि कर्णस्य पूरणमशक्यं किमुत द्वयोरिति द्योतयितुं युग्मशब्दः। यशःश्रवणस्य वक्त्रधीनत्वाद्भक्तसङ्गं प्रार्थयते तत्र तस्य नित्योपलब्धेः, अत आह- **त्वद्भक्तसङ्गोऽस्तु,** यस्मात्कस्मादपि श्रुतौ भगवद्गुणोऽपि न तथा रोचको भवति यथा भक्तमुखाच्छ्रवणे, ततस्तु सविशेषं माधुर्यमुदयत इति भावः। यत्सङ्गो भगवत्प्रीतिमवश्यं फलति, यत्प्रसङ्गोऽयत्नत एव सकलानर्थपरम्परां समूलं छिनत्ति,

.....................................................पदपरामर्शः.....................................................

तादृशस्य त्वदीयभक्तस्य भक्तिसुधानिमग्नस्य सदाऽविच्छेदेन सङ्गोऽस्तु। भागवतप्रसङ्गः सुतरामेव भक्तिफलावसायी भवति। यथोक्तं भागवते-

सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति।।

अतः श्रीप्रह्लादेनापि नय मां निजभृत्यपार्श्वमिति भगवान् प्रार्थितः। सर्वसमर्थस्योभयविभूतिनायकस्य तेऽभिमतदाने कियानायास इत्याह- **प्रभो** इति। "मम प्रभो" इत्यनेन स्वाराध्ये ममत्वातिशयं बोधयति। "सदा मम प्रभो" इत्यनेन च प्रतिजन्म श्रीसाकेतनाथ एव मम प्रभुर्भवेदित्याग्रहः सूचितः।

**उरःशिरोदृष्टिमनोवचःपदद्वयप्राजत्करयुग्मजानुभिः।**
**अङ्गैः क्षितौ तं प्रणमेदथाष्टाभिर्दीर्घं तथैतैः कृतधीश्च दण्डवत्।।136।।**

.....................................................पदपरामर्शः.....................................................

अर्चने सञ्जातापराधक्षमापणाय प्रणिपातमतिरिच्य नान्यन्निदानं भवतीति तस्मात्प्रणम्य प्रणिधाय कायमिति गीतोक्तमनुसन्धाय स्तवप्रकारमुक्त्वा वैष्णवागमोक्तं प्रणतिविधिं शिक्षयति- **उर इत्यादिना।** उरसा शिरसा दृष्ट्या मनसा वचसा पादाभ्यां कराभ्यां जानुभ्याञ्चेति वाङ्मनसयोरप्यङ्गत्वं प्रणिपातोपकारकत्वात्। मनोबुद्ध्यभिमानेन सह न्यस्य कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चममिति। पूर्वार्धेनाष्टानामङ्गानां परिगणनं विधायोत्तरार्धेनाष्टाभिरङ्गैः क्षितौ भुवि दण्डवद्दीर्घं तमर्चितं स्तुतं श्रीभगवन्तं "समस्तपरिकरविशिष्टाय सर्वमङ्गलविग्रहाय भगवते श्रीरामचन्द्राय नम इत्युक्त्वा प्रणमेदिति विधिमाह। तत्र विशेषणद्वारा प्रणिपततो बुद्धिदशां निर्दिशति- **कृतधीरिति।** कृता नियता भगवान् राम एव मे परमाश्रय इति निश्चयात्मिका धीर्बुद्धिर्यस्य, तथाभूतोऽनन्यमतिः सन्प्रणमेदिति सम्प्रदायसरणिः। **प्रणमेदिति** पतनं विशिनष्टि- दण्ड इव पततीति तेन तुल्यं क्रिया चेद्वतिरिति वतिः **दण्डवत्।** छिन्नमूलो निराश्रय एव दण्डः पततीत्यहमपि निराश्रयो भवत्पादमूलमाश्रयमवलम्ब इति। हे राघवेन्द्र मम देहि कराबलम्बमिति भावनावत्। स्वस्य निराश्रयत्वं भगवतश्चाश्रयदातृत्वमनुसन्धाय

------------------------------संवित्करः------------------------------

स्तुति के अनन्तर श्रीभगवान् के श्रीचरणों में साष्टाङ्ग दण्डवत् प्रणाम करे। हृदय, शिर, नेत्र, मन, वाणी, दोनों पैर, दोनों जानु, तथा दोनों भुजा, इन आठ अंगों से किया गया वन्दन साष्टाङ्ग दण्डवत् प्रणाम माना जाता है।

पदपरामर्शः

दण्डवदिति निर्दशनम्। तेनान्याश्रयपरित्यागो व्यञ्जितः। भगवांस्तु नित्यज्ञानवत्त्वेनेदं मे स्वमिति धियाऽङ्गीकुर्यान्न खलु दण्डो, जडत्वात्कथं स्वस्वामिभावं जानीयात्। दण्डस्तु ज्ञानेच्छाप्रयत्नादिमन्तं चेतनं विना स्पन्दितुमपि नार्हति, तमोभूतपापप्रगाढ-सम्पर्काद्युक्तायुक्तज्ञानशून्योऽहं भगवदधीनप्रवृत्तिक इति स्वाभिमते कर्मणि विनियोज्यः। दण्डपुरुषयोः सम्बन्धस्योभयनिष्ठत्वेऽपि तं प्रति दण्डः सर्वथा प्रकार एवेति लोके दण्डी पुरुष इतिवत्पुरुषी दण्ड इति न प्रयुज्यते। नियामकस्य विलक्षण-सम्बन्धस्याभावात्। संयुक्तदण्ड एव पुरुषो दण्डी मन्यते न तु गृहावस्थितदण्डोऽपीति स्वस्य परित्यागानर्हत्वं सूचितम्। एतेन तवास्मीत्याश्रययाच्ञानुसन्धीयते। वक्रोऽपि कोदण्डो यथा त्वया न केवलं हस्तेनावलम्बितोऽपितु वक्षसाऽङ्गीकृतस्तथा-हमप्यात्मसात्करणीयः। प्रहरणादिसाधनतया लोकस्यापि भयावहस्य सौम्यत्वादि-रहितस्याभिमानरुक्षस्य मम पुष्पादिभिरर्चनीयं भगवत्पादपङ्कजमुद्दिश्य दण्डपात इव परिप्रमाणोऽप्यमर्षणीय इति दैन्याभिप्रायेण प्रणिपातेऽप्यविनयत्वं ध्वनयितुमाह-**दण्डवदिति।** **दीर्घमिति** क्रियाविशेषणेन निराश्रयं मत्वा करुणया भगवतैवोत्थापितः स्यामित्याशया यावदुत्थापनं लम्बायमानमिति लभ्यते। उत्थायोत्थाय त्रिः प्रणमेत्सकृदेव वा प्रणमेदित्युभयथाचारो दृश्यते, भावभेदात्सर्वमनवद्यम्। अयमेव विधिराचार्यसम्मुखं गुरुजनसमक्षं वा प्रणिपातस्येति सङ्क्षेपः। **प्रणमेदिति** भगवत्प्राप्ति-प्रत्यूहनिकरनिर्वापणाय। प्रपूर्वकनम्धातोः स्वावधिकोत्कर्षबोधानुकूलो व्यापारोऽर्थः, सिद्धान्ते भगवदाज्ञैव लिङर्थः, स च मां नमस्कुर्वित्यनेनाप्युपबृंहित एव।

**बाहू च पादौ च प्रसार्य[1] साञ्जलिः स्तवैः स्तुवन् यश्च नमेद्रघूत्तमम्।**
**शतैः क्रतूनां तु सुदुर्लभां गतिं स चाप्नुयाद् रामपरायणो जनः॥137॥**

पदपरामर्शः

अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनीति स्तुतिकालिकीमवस्थामवबोधयति-

संवित्करः

श्रीरामचन्द्रजी के अनन्य भक्तों को, दोनों हाथों, तथा पैरों को फैलाकर सविधि बद्धाञ्जलिपूर्वक स्तोत्रों का पाठ करते हुए श्रीरामजी को साष्टाङ्ग प्रणाम करना चाहिये, जिससे वे सौ अश्वमेध यज्ञों से भी बढ़कर पुण्यप्रद तथा सुदुर्लभ गति (मोक्ष) को प्राप्त करते हैं।

[1] पा. भे.- प्रसार्य वाहूचरणौ च।

..............................................पदपरामर्शः..............................................

स्तवनकाले बाहू पादौ च नाकुञ्चेत्, यः साञ्जलिः स्तवैः स्तुतिभिः स्तुवन् प्रार्थयमानो रघूत्तमं श्रीरामं नमेद्वन्देत, स रामपरायणो जनः क्रतूनां यज्ञानां शतैरपि सुदुर्लभां लब्धुमशक्यां गतिं प्राप्नोत्यधिगच्छति। प्रसार्येत्यनेन शाण्डिल्यस्मृत्युक्तं दण्डप्रणामलक्षणमनुसंहितम्-

निधाय दण्डवद्देहं प्रसार्य चरणौ करौ।
बद्ध्वा मुकुलवत्पाणी प्रणामो दण्डसंज्ञितः।।

यद्यपि विंशत्याद्याः सदेकत्व इत्यमरकोशाद् शतेनेत्येव भाव्यम् तथाप्यनेकशताभिप्रायके शतञ्च शतञ्च शतञ्चेत्येकशेषेण तृतीयाबहुवचने **शतैरिति** बहुवचनं संभवति। पद्यमिदं सविधि स्तुतिपूर्वकभगवन्नमनफलं वक्ति। राम एव परम् अयनमाधारो यस्य, तथाभूतः सन् नित्यमक्षय्यफलं मोक्षमश्नुते, यज्ञादेः फलस्य स्वल्पत्वं विनाशित्वञ्चोच्यते, स्तुवन्निति नमस्कारकालिकस्तवनं बोधयति, स्तुतिश्चोत्कृष्ट-गुणवत्त्वप्रकारकबोधानुकूलो व्यापारः, बोधरूपधात्वर्थफलाश्रयत्वाद्रघूत्तमस्य कर्मता। **स्तवैः स्तुवन्निति** विधिना विधत्त इतिवत्प्रयोगः। मान्तु वेद न कश्चनेत्युक्त्या कथं स्तवनं तत्राह- **स्तवैरिति।** अल्पज्ञत्वादिभिरशक्तोऽपि यथाज्ञातं नित्यानवद्याम्नायै-र्नियताकारैर्वाचार्यरचितैरनन्तस्यापि भगवतोऽसाधारणमहिम्नः प्रकर्षकथनपरैः स्तवैः स्तुवन् नमेदित्यर्थः। इत्थं सर्वेषां धर्माणां श्रेष्ठस्य भागवतधर्मस्यात्मसमर्पणप्रधानस्य यज्ञफलाद्यपेक्षया मोक्षाख्यं फलमुक्तम्। यथोक्तम्-

एकोऽपि कृष्णस्य कृतप्रणामो दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय।।

**अथोच्यते वैष्णवभेद ईप्सितो ज्ञातुं च ते विष्णुपरायणैर्जनैः।**
**सुवेदनीयो बहुधा महामते[1] सुनिश्चितो विज्ञवरैर्महर्षिभिः।।138।।**

..............................................पदपरामर्शः..............................................

भावसंशुद्धिकैङ्कर्योद्देश्यशोधनतत्समर्पणतदर्चनप्रकारादिविवृत्या निवृत्तिपर-

------------------------------संवित्करः------------------------------

हे विलक्षण प्रतिभासम्पन्न! अब श्रेष्ठ महर्षियों के द्वारा सुनिश्चित, अवश्य जानने योग्य, वैष्णवभेद का श्रवण करो।

---

[1] पा. भे.- प्रियोत्तम।।

..........पदपरामर्शः..........

वैष्णवधर्मस्य मुख्यत्वमुपपाद्येदानीं यथाक्रमं वैष्णवभेदविषयकजिज्ञासामुपशमयितु- मात्मानं विनियुङ्क्ते- **अथोच्यत** इति। **अथे**त्यनेन विषयान्तरोपन्यासारम्भं सूचयति। स्वशिष्यस्य सूक्ष्मेक्षिकया तत्त्वावधारणसामर्थ्यं सम्बुध्या प्रकाश्य प्रोत्साहयति- **महामते।** यस्तव वैष्णवा कतिधा? इति वैष्णवभेदो ज्ञातुमीप्सितः स वैष्णवत्वादन्यैरपि वैष्णवैरपि सुवेदनीयः यश्च वैष्णवभेदो विज्ञवरैर्विद्वत्तल्लजैर्महर्षिभिः क्रान्तदर्शिभिः साक्षात्कृतधर्मभिराप्तैश्च बहुधा विमृश्य सुनिश्चित इत्थमेवेति लक्षणप्रमाणाभ्यां परीक्ष्य निर्णीतः स मयोच्यते। वक्ष्यत इत्यर्थे वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यत्यपि वर्तमानवद्भावः। एतेन वक्ष्यमाणभेदस्य प्रामाणिकजनैः सुनिश्चिततया विप्रतिपत्त्यादि- रहितस्य पूर्णप्रतीत्या सावधानं वेदनीयता सूचिता भवति। त्वज्जिज्ञास्यस्यान्यविद्व- ज्जनैरपि विचारपूर्वकनिश्चितपूर्वत्वं संसूच्य विषयप्राशस्त्यमुक्तम्। विज्ञवरैर्महर्षिभिरि- त्युभयोपादानेन न केवलं बुद्ध्याधारेणापितु तत्त्वसाक्षात्काराधारेण, परोक्षेणापरोक्षेणापीत्युक्तं भवति, तेनाप्रामाण्यशङ्कां वैष्णवविभाजने दूरतोऽपि निरस्यते। यद्यपि प्रथममुद्देशस्तदनूद्दिष्टस्यैव विभाग इति नियमाद् वैष्णवसामान्यलक्षण- कथनान्तरमेव वैष्णवभेदस्य वक्तव्यत्वात्पूर्वं विभाजनमयुक्तं, विभागं प्रत्युद्देश्यज्ञानस्य हेतुत्वात्, विष्णुरेव देवतास्येति व्युत्पत्त्यैव विष्णुमात्रदेवताकत्वं वैष्णवम्, विष्णुभक्तो हि वैष्णव इति लोकत एव वैष्णवत्वावच्छिन्ने शक्तिप्रतिपादनाद्वा वैष्णव- सामान्यस्योपस्थित्योक्तदोषाप्रसक्तेः। अतः समाख्यानिर्वचनाभ्यां वस्तुवाचकपदेनैव लक्ष्यलक्षणयोर्ग्रहणसम्भवान्न नियमभङ्गः। यथोक्तं सव्यभिचारप्रकरणेनायं ग्रन्थो विभागपरः किन्त्वसाधारणादिसाधारणस्य लक्ष्यताप्रदर्शनपर इति बोधयितुं प्रथमं विभागकरणेऽपि न दोषः।

**प्राप्तुं परां सिद्धिमकिञ्चनो जनो द्विजातिरिच्छञ्छरणं हरिं व्रजेत्।**
**परं दयालुं स्वगुणानपेक्षितक्रियाकलापादिकजातिबन्धनम्॥139॥**

..........पदपरामर्शः..........

द्विजातीनां ब्राह्मणादीनां स्वस्ववर्णाश्रमाचारनियतं कर्म तु शास्त्रसिद्धमनुष्ठेयमेव किन्तु

----------संवित्करः----------

मोक्ष की मामना वाले द्विजाति को चाहिये कि वह अकिञ्चन, अहङ्कार से रहित होकर परमदयालु भगवान् श्रीराम की शरण ग्रहण करे क्योंकि वे अपने आश्रित भक्त पर जाति गुण क्रिया आदि की अपेक्षा किये विना अनुग्रह करते हैं।

..........................................पदपरामर्शः..........................................

तेषामप्युत्कटपापयोगान्नष्टसदाचाराणां वैष्णवत्वाश्रयेण वैकल्यनिवृत्त्या भगवत्प्राप्तौ सौकर्यम्। न भक्तियोगव्रताद्यसमर्थानामेव शरणागतिरपितु द्विजातेरप्याश्रयणीयेति अत्र प्रपत्तावन्यनिरपेक्षको भगवान् स्वयं साधयतीति तच्छरणवरणस्य निरपवादसाधनत्वादित्याह– **प्राप्तुमिति**। अकिञ्चनोऽपि द्विजातिर्जनः परां सिद्धिमिच्छन् परं दयालुं हरिं शरणं व्रजेदित्यर्थयोजना। **व्रजेदिति** मामेकं शरणं व्रजेति भगवदुक्तधातुविशेषानुकृत्यभिप्रायेण शरणग्रहणस्य तदभिमतत्वं प्रकाश्यते। द्विजातिरित्यनेन जात्या संस्कारेण च व्रतवैराग्यसंन्यासवेदाभ्यासकर्मदाक्ष्यदान-तपश्शौचादावधिकृतत्वं सूचयति, तथापि यस्तद्रहित इत्यकिञ्चनः, न किञ्चनास्येति साधनदारिद्र्यं तदीप्सितायाः सिद्धेः पुष्कलपुण्यलभ्यत्वञ्च प्रकाश्य महदन्तरं सूचयितुमेव **परामिति** सिद्धिं विशिनष्टि। शरणागतस्य द्विजातेरकिञ्चनत्वादिकं भगवत्प्राप्तौ न प्रतिबन्धकम्, हरिरधनात्मधनप्रियो रसज्ञ इत्युक्तेस्तस्याकिञ्चनप्रियत्वात्। सर्वफलप्रदस्य चातुर्वण्यं मया सृष्टं गुणकर्मविभागश इत्युक्तवतो भगवतः करुणोदये जात्याचारादिरपरिगणनीयतयाऽकिञ्चित्करो भवति। स्वस्य दयादिगुणैः क्रियाकलाप आचारवृत्तशुचितादिकं तन्मूलं जातिबन्धनं नापेक्ष्यते, न गणयतीति भावः। निर्बन्धनं निर्बन्ध आग्रहः, विधिनिषेधमूलकशास्त्रप्रवृत्तौ जात्याचारतपोविद्यादीनामाग्रहो बद्धानामेव। न तु बन्धप्रसङ्गरहितस्य बन्धच्छेदहेतोरपीश्वरस्येति भावः। परं श्रेष्ठमुत्तरावधिरहितं दयालुमिति, सामान्योऽपि दयालुः प्रयोजननिरपेक्षतयोपकरोत्ययन्तु परो दयालुरिति कथं तदपेक्षेतेति परपदेन ध्वन्यते। दयालुर्हि स्वप्रयोजनान्तरमनपेक्ष्यैव परदुःखनिराकरणेच्छावान् भवति, असमर्थस्य कालसर्पेण ग्रस्यमानस्य जीवस्य दयालुत्वेऽपि को लाभ इति तादृशासमर्थदयालुव्यावृत्त्यर्थ **परपदम्**। स च सर्वेश्वर एव तत्रैव नित्यदयालुत्वेनापकारिष्वपि तत्कृपादर्शनात्। यथोक्तं भागवते– कं वा दयालुं शरणं व्रजेमेति। **हरिशब्दोऽत्र** कारुण्यादिमहागुणैः सर्वमनोहरतापरः। यद्वा परपदमिह हरावन्वेति तेन परं हरिं श्रीराममित्यर्थः। यथोक्तम्–

नामसङ्कीर्तनं यस्य सर्वपापप्रणाशनम्।
प्रमाणो दुःखशमनस्तं नमामि हरिं परम्॥

किञ्च **परां सिद्धिमिच्छेत्तदा** तदनुगुणं परं दयालुं हरिं व्रजेदित्युपायोपेययोः परत्वसाम्यात्, तेन काम्यवस्त्वनुरूपसाधनाश्रयरूपमौचित्यं लब्धं भवति। परसिद्धे–

..........................................................पदपरामर्शः..........................................................

मोक्षत्वात्तस्य च भगवत्प्राप्तिरूपत्वादुभयोः परत्वकथनमैक्याभिप्रायेण, तेन स्वप्राप्तौ भगवान् स्वयं मुख्यो हेतुरिति लभ्यते यमेवैष वृणुते तेन लभ्य इति श्रुतेः।

**जीवो द्विधाऽमन्यत बद्धमुक्तभेदेन पूर्वैस्तु महर्षिवर्यैः।**
**बद्धोऽपि तत्र द्विविधो मुमुक्षुबुभुक्षुभेदाद् गदितो मतज्ञैः॥140॥**

..........................................................पदपरामर्शः..........................................................

विशिष्टज्ञानं प्रति सामान्यज्ञानस्य हेतुत्वेन वैष्णवभेदनिरूपणात्प्राग् जीवभेदोपस्थापनस्य युक्ततया तं विभजते- **जीवो द्विधेति।** यद्यपि सर्वाणि शरीराणि मयैवात्मवन्ति शरीरत्वात् एतच्छरीरवदित्यनुमानेन ऐकात्म्यं साधयन्ति केचित्तथापि चैत्रात्मा मैत्रात्मतादात्म्यरहितस्तदीयज्ञानसुखाद्यप्रतिसन्धातृत्वादिति प्रत्यनुमानान्न सर्वजीवस्वरूपैक्यं साधयितुं शक्यते। यद्यपि वैष्णवभेद उच्यत इति प्रतिज्ञाय जीवभेदनिरूपणमुपयुक्तार्थकथनाभावात्प्रतिज्ञापरित्यागाच्चार्थान्तरं प्रतिज्ञासंन्यासञ्चो-पसङ्क्रान्तमिति प्रतिभाति तथापि व्यापकमुखेन व्याप्यनिरूपणस्य ग्रन्थकारशैलीसिद्धत्वान्न दोषः। अयं भावः विषयोपस्थापनस्य ग्रन्थे द्विधा क्रमो दृश्यत आरोहणक्रमोऽवरोहणक्रमश्च। अत्र वैष्णवत्वव्याप्यजिज्ञासायामपि वैष्णवत्वं पुनः किंव्याप्यमित्युत्थितजिज्ञायाया आमूलादुपशमनाय व्यापकस्य तद्व्याप्यतद्-व्याप्यादिरीत्याऽवरोहणक्रमस्य विवक्षणान्न दोषः। **पूर्वैर्महर्षिवर्यैः** प्राक्तनैस्तत्त्वार्थ-दर्शिभिर्मतज्ञैर्विशिष्टाद्वैतसिद्धान्तविद्भिश्च बद्धमुक्तभेदेन जीवो द्विधाऽमन्यतामानि, तत्र बद्धोऽपि मुमुक्षुबुभुक्षुभेदाद् द्विविधो गदितः प्रोक्त इति सुगमोऽन्वयः। इत्थं विभाजने प्रमाणन्तु- अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति श्रुतिः। उपबृंहितश्चायमर्थो गीतायां स्वयं भगवता द्वाविमौ पुरुषौ लोक इत्यादिना। तत्र हि क्षराक्षरभेदेन जीवात्मनः अवस्थाप्रयुक्तं द्वैविध्यमुक्तम्- क्षरणस्वभावाचित्संसृष्टो ब्रह्मादिस्तम्बपर्यन्तो जीवः क्षरपदेन, अचित्संसर्गवियुक्तश्च पुनः स्वेन रूपेण विद्यमानो मुक्तात्माऽक्षरपदेनोक्तः। भगवांस्तूभाभ्यां विलक्षणः, उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इत्युक्तेः। क्षरस्य कर्मयोगाद्देहादिसम्बन्धस्तत एव सर्वदुःखसुख-

------------------------------संवित्करः------------------------------

पूर्वमहर्षियों ने बद्ध और मुक्त के भेद से जीव दो प्रकार के बताये हैं। इसमें बद्धजीव, मुमुक्षु एवं बुभुक्षु भेद से दो प्रकार के होते हैं।

.........................................................पदपरामर्शः.........................................................

*प्रतिसन्धानमित्येव तस्य बद्धतेति। मुक्तस्य चासङ्कुचितज्ञानैकाकारतेति विशेषः। पूर्वैर्महर्षिवर्यैरिति अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुतेति ऋङ्मन्त्रं स्मारयति। एतेन शास्त्रप्रमाणकत्वाद्बन्धमोक्षव्यवस्थायाः पारमार्थिकत्वं सिद्ध्यति। अत्रेदमाकूतम्– जीवसामान्यस्य संसरणे स्वरूपयोग्यता विद्यते सा च स्वरूपयोग्यता संसारजनकतावच्छेदकधर्मसम्बन्धरूपा, परतन्त्रचेतनत्वमत्र धर्मः, तच्च यद्यपि नित्यमुक्तयोरपि सम्भवति तथापि सापराधचेतनत्वरूपां सहकारियोग्यतां विना परतन्त्रचेतनत्वरूपधर्ममात्रस्य फलोपधायकत्वं न भवति, नित्यप्रत्यक्षितभगवदभिप्रायेषु नित्यमुक्तेषु सापराधचेतनत्वरूपा संसृतिसहकारियोग्यता न संभवति, अतस्ततो भिन्नाः स्वरूपयोग्यतासहकारियोग्यतोभयविधयोग्यतावत्त्वाद् बद्धाः संसारेऽनुवर्तन्ते, संसारेऽनुवृत्तिश्च संसृत्यवच्छिन्नध्वंसानुदयो न तु संसृतेरुत्तरोत्तरक्षणसम्बन्धः। ध्वंसानुदयो नाम ध्वंसप्रागभावः। इत्थं* ***संसारत्वावच्छिन्नध्वंसप्रागभावाधिकरणत्वं बद्धत्वम्, संसारत्वावच्छिन्नध्वंसाधिकरणत्वं मुक्तत्वमिति*** *पर्यवसितम्।*

**अनादिकर्मोत्करजातनानादेहाभिमानी सुमतोऽथ बद्धः।**
**स चाऽच्युताहेतुकृपाबलेनाविद्याक्रियावासरुचिप्रवृत्तेः॥141॥**
**विमोक्तुमिच्छुस्तु मुमुक्षुरुक्तः सम्बन्धतः प्राज्ञसुसंमतोऽयम्।**
**तथैव सांसारिकभोगमिच्छुर्बुभुक्षुरन्यः कथितो बुधेन्द्रैः॥142॥**

.........................................................पदपरामर्शः.........................................................

*इत्थं संसारध्वंसप्रागभाववान् बद्धः, संसारध्वंसवान् मुक्त इति सामान्यतो दशाभेदसद्भावाद् जीवद्वैविध्यं व्यवस्थाप्येदानीं तस्य मुमुक्षुबुभुक्षुभेदं विवक्ष्यन् बद्धजीवं लक्षयति–* ***अनादीति।*** *अथ बद्धमुक्तनाम्ना जीवभेदप्रदर्शनानन्तरम्, अनादिकर्मण उत्करात् सञ्चयाज्जातेषु नानादेहेषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधेषु ममाहमिदमित्याकारेण योऽभिमन्यते भ्रान्त्या मोमुह्यते स जीवो बद्धः सुमतस्तथात्वेन निश्चित इति श्लोकाशयः। अस्थाने रागादिना स्वस्य बन्धकं कर्म जीवः स्वयं*

--------------------------------संवित्करः--------------------------------

**अनादिकाल के शुभाशुभ कर्म के फलस्वरूप प्राप्त विभिन्न देह में जो आसक्ति एवं अहंबुद्धि रखता है, वह बद्धजीव है। तथा जो भगवान् श्रीहरि की अहैतुकी कृपा से कर्मजन्य संसाररूप बन्धन से मुक्त होना चाहता है, वह मुमुक्षु जीव है। इस प्रकार, सांसारिक भोग की कामनावाले जीव को बुभुक्षु, तथा मुक्ति की इच्छावाले को मुमुक्षु जीव कहा जाता है।**

.....................................................पदपरामर्शः.....................................................

करोति, तत्र प्रथमं साधनं सकलानर्थपरम्परानिदानभूतानाद्यविद्यैव, तयानात्मन्यात्म-बुद्धिरस्वे स्वमिति च भ्रान्त्याः सन्ततिर्जायते तद्यथा- ईश्वरो नास्ति, स च श्रीरामादन्य इति भ्रान्त्येश्वरापहारः, जीवो नास्ति, स श्रीरामादन्यस्य शेषः स्वतन्त्रो वेति भ्रान्त्या जीवापहारः, इत्थं शब्दादिविषयेषु रागं परदेहादिषु द्वेषं जनयति, सर्वो रागाद्यागादि, शत्रौ द्वेषादभिचारादि कुर्वतो देहे बद्धस्य तस्य तापत्रयाभिघातस्तु नियतस्तथापि तच्छरीरेऽभिमन्यमानो भवतीति भावः। एकैकप्रतिनियतत्वाद् दुःखसम्बन्धो बद्धानामसाधारणधर्मः। ब्रह्मगरुडादीनामपि दैत्यपीडाकृतं दुःखमस्त्येवेति। बद्धजीवेषु यदि घटपटादीनामिव स्वरूपवैलक्षण्यं स्फुटं स्यात्तदा तत्पुरस्कारेणैव तेषां विभाजनं युक्तं स्यात्, अतः तत्तत्कर्मानुगुणज्ञानसुखदुःखादिरतारतम्यसत्त्वेन तेषां भेदस्तु युक्त इतीत्थं बद्धस्येच्छाकृतं भेदमाह- **स चेति।** पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः, नष्टप्रज्ञः पापमेव पुनरारभतेऽर्जुनेत्युक्तरीत्या बीजाङ्कुरन्यायेन प्रवृत्तानां जीवानां बन्धनहेतुप्रतिरोधनं कदापि न स्यादित्यत्राह- **अच्युतस्य** कदाचिदप्यसम्भावित-प्रच्युतेर्भगवतोऽहेतुकृपाया यादृच्छिककरुणाया बलेन तस्य मुमुक्षा जायते। कुतो मुमुक्षेत्यत उच्यते- **अविद्याक्रियावासरुचिप्रवृत्तेरिति।** अनाद्यविद्यया प्रवर्तमानक्रियाया कर्मणो या वासना तज्जन्येदं मे स्यादिति रुचिस्तदनुकूला प्रकृतिसम्बन्धानुगुणप्रवृत्तिः चेष्टेत्थं चक्रवद्भ्रान्तस्य ततो विमोक्तुमिच्छुरात्मानं मोचयितुकाम एवायम् अविद्यामूलसंसारसम्बन्धान्मुमुक्षुः प्राज्ञसुसंमत इति। **प्राज्ञसुसंमत** इत्यत्र **प्राज्ञानां सुसम्मत** इति मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तान्तेन क्तस्य च वर्तमाने इति विहितषठ्यन्तस्य प्रतिपदविधानाषष्ठी न समस्यत इति वार्तिकेन समासनिषेधः स्यात्तथापि कृद्योगा षष्ठी समस्यत इति प्रतिप्रसवात्समासः।। मत्तः स्मृतिर्ज्ञानमपोहनं चेति वक्तुः कृपाबलं विना मुमुक्षाया अनुदयात्तत्र कृपासामर्थ्यमाह- **अच्युत** इति। यः कदापि स्वरूपान्न च्यवते स एव बद्धानुन्नेतुमर्हतीति भावः। तादृशमुमुक्षाजनने जीवकृपाया असामर्थ्यात् उक्तादन्यस्य हीनतां विवक्षन् तस्य प्रतियोगिसापेक्षत्वात्प्रकृतमुमुक्षोरेव प्रतियोगित्वमाह- **बुभुक्षुरन्य** इति। यश्चाविद्याजन्य-कर्मफलवासनया तत्र मोमुह्यमानस्तादृशभोगमिच्छुः कामयमानः स बुभुक्षुरिति बुधेन्द्रैः पण्डितराजैः, कथितः प्रोक्त इति। सांसारिकभोगमिच्छुरित्यत्र न लोकाव्ययेति षष्ठीनिषेधात्कर्मणि द्वितीया। तथैवेतीच्छानिबन्धनमेव लक्षणभेदमुभयत्रापीति बोधयितुम्।

.....................................................पदपरामर्शः.....................................................

युक्तायुक्तपरिशीलनदारिद्र्यादस्य दौर्भाग्यमाह- **सांसारिकभोगमिच्छुरिति।** सांसारिक-भोगमित्यनेनाल्पत्वानित्यत्वसूचनेनात्यन्तक्षुद्रत्वमुक्तं भवति। एवमीहासमायुक्तं कृतान्तः कुरुते वश इत्युक्तेः कामभोगसक्तत्वादज्ञानविमोहितस्यातिमूढत्वं सूचितं भवति। स्वल्पसत्त्वस्यापि तस्येष्टप्राप्त्यनिष्टपरिहारयोः स्वसामर्थ्याधीनत्वभ्रमो भवति। यथोक्तं बुभुक्षोर्दुर्मतित्वं भागवते-

> नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः।
> अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम्।।

> यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः।
> ध्रुवाणि मन्यते मोहाद् गृहक्षेत्रवसूनि च।।
> जन्तुर्वै भव एतस्मिन् यां यां योनिमनुव्रजेत्।
> तस्यां तस्यां स लभते निर्वृत्तिं न विरज्यते।।

बुभुक्षोर्मुमुक्ष्वपेक्षया हीनत्वं द्योतयितुमेव मुमुक्षुः प्राज्ञसुसंमत इति विशिष्यते, बुभुक्षुरन्य इत्युच्यते, अन्यो नामासदृशः, अन्योऽसदृशेतरयोरिति हैमः। अत्रेदं विचार्यम्- यद्यच्युतकृपा तद्दया वाऽहेतुरस्ति तर्हि सर्वभूतहितैषित्वात्सर्वमुक्तिप्रसङ्गः स्यात्। स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छैव दया भवति। परहितप्रापणप्रधानफलतया तद्दुःखनिवृत्त्यध्यवसायस्यावश्यंभावात् तद्धितेच्छा स्वव्यापकतद्दुःखनिराकरणेच्छायामेव पर्यवस्यति- यथा यागेच्छा स्वर्गेच्छायाम्। अत्र स्वार्थनिरपेक्षत्वविशेषणं क्रोडीकरणीयमेवं, अन्यथा स्वार्थमन्यान् रक्षति कारुणिकत्वव्यवहारः स्यात्। स्वदुःखनिराकरणेच्छाया निर्दयेऽपि सत्त्वादतः परेति तत्रोपादीयते। वस्तुतो दयालक्षणघटकपरशब्देन स्वव्यतिरिक्तः सर्वोऽपि विवक्षितो, नत्वनुकूलमात्रम्, तथा सति भगवत्कारुण्यस्य जीवानुकूल्याचरणापेक्षत्वेन निर्हैतुकत्वं नोपपद्येत, ईश्वरस्य हि निरुपाधिकसर्वसुहृत्त्वस्य सर्वैरप्यङ्गीकारात्। लोकयात्रां निर्वोढुम् एतत्कृतरक्षणप्रार्थनादिव्याजविशेषस्यावसरप्रतीक्षो भवति भगवान्, पापानुरूपं तं दण्डयितुं प्रवृत्तोऽपि तद्विलोकने स्वान्तर्दयोदयमाशङ्कमानः स्वमुखं परावृत्यैव काठिन्यमारोप्य दण्डयति, अतस्तादृशेऽपि पुरुषे दया निराबाधा। इत्थं सामान्यतो दयायाः कृपाया वा स्वरूपस्य सर्वविषयत्वं निर्हेतुकत्वमेव तस्मात्प्रतिकूलेऽपि सा प्रवहत्येवेति भावः। केचन तु परदुःखदुःखित्वं दया व्यसनेषु मनुष्याणां भृशं भवति

पदपरामर्शः

दुःखितः इति रामायणोक्तेदित्याहुस्तन्न शक्तस्य परेषां दुःखं पश्यतस्तदपनोदनेच्छैव जायते शोभते च, न तु स्वयं दुःखित्वम्, पुरुषान्तरे परदुःखदुःखित्वदर्शनस्याप्य-शक्त्युपाधिकत्वमेव, सर्वशक्तेर्भगवति भृशं भवति दुःखित इत्यादिकमुच्यमानम-भिनयार्थमेव, स्वयं दुःखादिदोषदूरोऽपि स्वाश्रितानां दुःखं स्वदुःखमभिमन्यते अत एवार्द्रीभवति सन्तप्यते च। इत्थं स्वसौलभ्यप्रकाशनायोपयुक्ताभिनयविषयत्वमेव तस्य। तथा च सद्य एव तद्दुःखापाकरणेच्छा भवति, तथास्य बभूव लुलितं मन इति तदसहिष्णुतायामेव तात्पर्यम्।

**मुमुक्षवोऽपि द्विविधा महर्षिभिः प्रोक्ता अकामाः स्मृतिभक्तिशालिनः।**
**वेदोक्तवर्णाश्रमकर्मकारिणस्तूपासकादिप्रतिभेदभेदिताः[1] ॥143॥**

पदपरामर्शः

भगवत्कृपयानादिकर्मप्रवाहरूपसंसाराज्जातमोक्षाभिलाषान्मुमुक्षूनपि विभजते- **मुमुक्षवोऽपीति**। महर्षिभिस्तत्त्वापरोक्षानुभूतिं लब्धवद्भि अकामाः स्मृतिभक्तिशालिन इति मुमुक्षवोऽपि द्विविधा प्रोक्ता इति पदान्वयः। **महर्षिभिरि**त्यनेनाप्तत्वेन श्रीबोधायनाचार्यप्रभृतीनां विभाजनेऽभिमतिं द्योतयित्वाऽर्वाचीनकल्पितत्वं निरस्यते। तत्र प्रथमे वक्ष्यमाणलक्षणा अकामा भगवन्तं विना साधनान्तराश्रयणे नास्ति कामोऽभिरुचिर्येषान्तादृशा भवन्ति, अपरे चाविच्छिन्नभगवत्स्मृतिरूपां भक्तिमुपायत्वेनाश्रितवन्त उच्यन्ते। ये चोपासकशुद्धभक्तभेदेनापि द्वैविध्यं भजन्ते। तदाह- **उपासकादिप्रतिभेदभेदिता** इति। तथाविधानामपि तेषां वेदोक्तत्वाद् वर्णाश्रमकर्मणां परिपालनेऽप्रमत्ततां सूचयति- **वेदोक्तेत्यादिना**। केचन मुमुक्षूणामपि देवतान्तरनिष्ठा भगवन्निष्ठा इति विभज्य पुनरुपायभक्तिनिष्ठा भगवदेकनिष्ठा इति द्विधा विभजनमाहुः।

संवित्करः

मुमुक्षु भी ज्ञानाद्यसाधन तथा चेतनान्तरसाधन के भेद से दो प्रकार के होते हैं प्रथम कोटि में वे मुमुक्षु आते हैं जो मुक्ति के लिये ज्ञानादि साधनों के प्रति कामनारहित होकर निरन्तर भगवत्स्मृति में तन्मय रहते हैं, भगवदाज्ञा समझ कर वेदविहित वर्णाश्रमकर्म का अनुष्ठान करते हैं। ऐसे मुमुक्षु भी उपासक और शुद्ध भक्त के भेद से दो प्रकार के होते हैं।

[1] पा. भे.- भेदितः।

**स्वकर्मविज्ञानसभक्ति[1]साधनं तथोररीकृत्य सुविज्ञ! कञ्चन।**
**सम्प्राप्य सम्बन्धविशेषमुत्तमं सदा भवन्त्येव च मोक्षनिश्चयाः॥144॥**

..............................................पदपरामर्शः..............................................

पूर्वसमुद्दिष्टस्य स्मृतिभक्तिशालिमुमुक्षोः साधनास्वरूपमाह- **स्वेति।** सूक्ष्मार्थावधारण- समर्थबुद्धिप्रशस्त्या भक्तिप्रपत्तिसूक्ष्मभेदाधिगतये स्वाभिमुखीकरोति- **सुविज्ञेति।** एतावत्पर्यन्ततत्प्रोक्तार्थानुसन्धानविशदीकृतप्रज्ञ! स्वकर्मेति स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नर इति गीतानिर्दिष्टं स्ववर्णाश्रमनियतं कर्म बोध्यते। विज्ञानमिति यथावस्थितात्मविषयकं विशिष्टं सत्त्वोपचयजनितम् अहं भगवच्छेष इत्यकारकं ज्ञानं सूच्यते। सभक्तिसाधनमिति भक्त्या सहेति समासेन परमात्मव्यतिरिक्तेषु सर्वेषु विरक्तिः मुमुक्षुजनस्वभावसिद्धा मध्ये प्रश्लिष्टा, तस्याश्च ज्ञानपूर्वकत्वाद् भक्त्युपकारकत्वाच्च भक्तेरव्यवहितपूर्वसमावेशस्तदनु भक्तियोगाधिकारसिद्धेः। एवं यथाक्रम- सञ्जातभक्तियोगं साधनत्वेनोररीकृत्य स्वीकृत्य तथा कञ्चनोत्तमं सम्बन्धविशेषं सम्प्राप्य, मन्त्रार्थनिरूपणे प्रोक्तेषु पितापुत्रत्वरक्ष्यरक्षकत्व-शेषशेषित्व-भार्याभर्तृत्व-स्वस्वामित्वाधाराधेयत्व-सेव्यसेवकत्वा त्मात्मीयत्वभोग्यभोक्तृ-त्वभावरूपनवसम्बन्धेषु कञ्चनान्यतमं स्वप्रकृत्यनुगणं सम्बन्धं सानुरागं परिगृह्य मोक्षनिश्चया मोक्षो मे स्यादेवेति सुदृढप्रत्ययवन्तो भवन्ति, सहकारिकारणतया सम्बन्धभावनयानुरागप्रकर्षसिद्धेः। यद्वा भक्तिरससमुल्लासे शान्तवात्सल्य- सख्यशृङ्गारदास्यरसेषु पञ्चविधेषु कमप्येकं भावमुपादाय प्रीतिप्रकर्षमाधाय मोक्षनिश्चया भवन्ति। भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तपेति स्वयं भक्तियोगलभ्यत्वोक्तेः। भक्तिसम्बन्धानां सर्वेषामुत्तमत्वेऽप्युत्तमपदं परिगृहीतसम्बन्धेऽत्युत्तमत्वावधारणाय एकान्तभक्तिसिद्धये तीव्रध्यानसम्पत्तये च प्रतिलब्धस्य भावमार्गं निर्दिशति- **सम्बन्धविशेषं सम्प्राप्येति।**

----------------------------संवित्करः----------------------------

चेतनान्तरसाधन मुमुक्षु कर्म ज्ञान भक्ति को भगवत्प्राप्ति में साधन के रूप में स्वीकार कर आचार्यद्वारा किसी एक भगवत्सम्बन्ध को प्राप्त कर अपने आत्मकल्याण के विषय में पूर्णतः निश्चिन्त हो जाते है।

---

[1] पा. भे.- चयार्धि।

**पदपरामर्शः**

सम्बन्धग्रहणं रागस्यैव विशेषज्ञापनार्थम्, पुत्रादिसम्बन्धस्य स्नेहदार्ढ्यार्थत्वात्। मारीचरावणादिवद्वैरद्वेषजनितध्यानावेशस्य निन्दितत्वात्तद्वारणायाह- **उत्तममिति।** यथोक्तम्-

पतिपुत्रसुहृद्भ्रातृपितृवन्मातृवद्धरिम्।
ये ध्यायन्ति सदोद्युक्तास्तेभ्योऽपीह नमो नमः।।

नवसु पञ्चसु वा कस्यचिदेकस्यापि सुदृढपरिग्रहः कल्याणकरो भवतीत्याह- **कञ्चनेति।** महासारत्वाद्भक्तेः उक्तसम्बद्धस्य च सांसिद्धिकत्वात्।

**विहाय चान्यत्परमं दयानिधिं प्राप्यं समर्थं निरपायमीश्वरम्।**
**उपायमेतेऽध्यवसीय सुस्थिता ज्ञेयाः प्रपन्नाः सततं हरिप्रियाः।।145।।**

**पदपरामर्शः**

साधनभक्तिनिष्ठं मुमुक्षुं तत्कृत्याध्यवसायकथनपूर्वकं निरूप्येदानीं प्रपन्नं तदध्यवसायमुखेनाचष्टे- **विहायेति।** एतेऽन्यद् भक्तियोगादिकं साधनं विहायेश्वरमुपायमध्यवसीय सुस्थिता इति वाक्यस्य मुख्यांशः। एते बुद्धेः सन्निकृष्टतराः प्रपन्नाः ज्ञेया इति प्रपन्नलक्षणविवक्षाचार्यचरणस्य, सामान्योऽपि जनः तदाश्रितमतितरां प्रीणाति किम्पुनर्भगवानित्याह- **सततं हरिप्रिया** इति। एषां हरावेव साध्यत्वसाधनत्वोभयनिबन्धना प्रीतिरिति विशेषः। विहाय चान्यदिति तथा महामहिमशालिनीं भक्तिमपि साधनधिया परित्यज्य किमुत लौकिकं वस्तु, तत्तु रत्नेच्छवो लोष्ठमिंव प्राप्यभगवदपेक्षयाऽतितरां तुच्छतया सुतरामेव हेयं भवति। ईश्वरमुपायमध्यवसीयेत्यत्रेश्वरपदेनाव्ययत्वव्यापनभरणस्वाम्यादितल्लक्षणमुच्यते, तेन सर्वशेषित्वं प्रकाश्य देवतान्तरव्यावृत्तिः कृता। तस्य नित्यपूर्णानन्दरूपतयेतरेच्छानधीनेच्छाविषयत्वात्प्राप्यत्वमाह। तादृशानन्दरूपस्य फलरूपतया तदिच्छा एवोपायेच्छां प्रति कारणमिति। प्रपत्तावुपेयस्यैवोपायत्वमित्याह- **उपायमिति।** यथा सेतुः स्वस्मिन्नेव धृत्वोत्तरतटप्रापको भवति तथेति भावः, अमृतस्य सेतुरिति श्रुतेः। तेषामहं

**संवित्करः**

कुछ मुमुक्षु ऐसे होते हैं, जो ज्ञान भक्ति आदि सभी साधनों का छोड़कर अनाथनाथ करुणामय भगवान् जानकीनाथ को ही अपना उपाय मानकर उन्हीं की कृपा पर महाविश्वास रखकर मोक्ष के विषय में आश्वस्त रहते हैं। इस प्रकार के मुमुक्षु प्रपन्न कहलाते हैं, जो भगवान् के अतिशय प्रिय होते हैं।

पदपरामर्शः

*समुद्धर्त्तेति स्मृतेश्च। नासमर्थस्य महाकार्यसिद्धिरितीश्वरं विशिनष्टि-* ***समर्थं*** *सर्वनिर्वहणसक्षममिति भावः। न समर्थोऽपि निष्ठुरः करुणां विधत्त इति महाकारुणिकत्वं तस्याह-* ***परमं दयानिधिम्*** *इति। समर्थोऽपि सन् परमकारुणिकोऽपि सन् यदि विप्रकृष्टान्तरः स्यात्तदा तन्निष्फलतेत्याह-* ***निरपायमिति।*** *अपायो विश्लेषो निर्गतोऽपायो यस्मादिति तादृशम्। सर्वदेशे सर्वकाले नित्योपलब्धम्, तेन नित्यसन्निहितत्वं संसूच्य तदाश्रयसौकर्यं द्योतितम्। प्रपन्नाः सुस्थिता इत्यनेन मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति भगवद्वचनमनुसन्धाय स्वोद्धारे वीतचिन्ता भवन्तीति भावः। यथोक्तम्-*

*समस्तपुरुषार्थानां साधकस्य दयानिधेः।*
*श्रीमतः पूर्वसिद्धत्वात्सिद्धोपायमिमं विदुः।।*
*प्रपत्तेर्लक्षणे मन्त्रे विधौ वाक्यान्तरेषु च।*
*भाष्यादौ सम्प्रदाये चोपायत्वं ब्रह्मणि स्थितम्।।*

**पुरुषकारैकनिष्ठास्तु हरिस्वातन्त्र्यमैक्ष्य च।**
**कृपाप्रचुरमाचार्यं मत्त्वोपायमवस्थिताः।।146।।**
**द्विविधास्ते निजाचार्यकृपामात्रप्रपन्नकाः[1]।**
**तथा सेवातिरेकप्रपन्नाश्चेति सदा सताम्।।147।।**

पदपरामर्शः

*साधनभक्तिनिष्ठं प्रपन्नञ्चेति द्विविधमपि मुमुक्षुमभिधायेदानीं पुरुषकारनिष्ठान्*

संवित्करः

कुछ मुमुक्षु पुरुषकार (किसी समर्थ मध्यस्थ) में विश्वास करते है। वे सोचते हैं कि भगवान् को किसी साधन से वश में कर मुक्ति प्राप्त नहीं की जा सकती है क्योंकि वे परम स्वतन्त्र हैं, साधनसाध्य नहीं है। उन्हें किसी मध्यस्थ के माध्यम से प्राप्त करना चाहिये, ऐसा विचारकर वे परम कृपामय अपने आचार्य को उपाय मानकर आचार्यकृपा के बल पर भगवत्प्राप्ति के विषय में निश्चिन्त हो जाते हैं। पुरुषकार में निष्ठा वाले मुमुक्षु भी दो प्रकार के होते हैं, प्रथम जो अपने आचार्यकृपामात्रप्रपन्न होते हैं तथा दूसरे भागवतसेवातिरेकप्रपन्न होते हैं। किसी सद्वैष्णव महात्मा की निरन्तर सेवा करते हुए अनन्यभक्तसेवा के बल पर अपने आत्मकल्याण के प्रति इसलिये आश्वस्त रहते है कि भगवान् को अपनी सेवा की अपेक्षा भक्त की सेवा से अधिक प्रसन्नता होती है।

---

[1] पा. भे.- तेऽथाचार्यकृपामात्रप्रपन्ना द्विविधा मता।

..........................................................पदपरामर्शः..........................................................

विवृणोति- **पुरुषकारैकनिष्ठास्त्विति।** केचन पुरुषकारे निष्ठां दधाना भवन्ति, तेऽप्याचार्यनिष्ठा भागवतकैङ्कर्यनिष्ठाश्चेति द्विविधा भवन्तीति श्लोकद्वयाशयः। पुरुषकारे घटक एव निष्ठा येषान्तथाभूताः हरेः स्वातन्त्र्यमनन्याधीनत्वमैक्ष्य विचार्य कृपाप्रचुरं पुष्कलानुकम्पमाचार्य गुरुमेवोपायं भगवत्प्राप्तिसाधनं मत्वा निश्चित्य, गुरुकृपैव मे सर्वेष्टं साधयिष्यतीति मन्वाना अवस्थिता वीतचिन्ता भवन्तीति भावः। वस्तुतस्तु भगवानेवाचार्यः-

> यस्माद्देवो जगन्नाथः कृत्वा मर्त्यमयीं तनुम्।
> तस्माद् भक्तिर्गुरौ कार्या संसारभयभीरुणेत्युक्तेः।।

गुरवो दीनवत्सला इत्युक्तिमनुचिन्त्य **कृपाप्रचुरमि**त्याचार्य विशिनष्टि। इत्थं केचन स्वगुर्वनुग्रहमात्रपरास्तथा च केचन सतां भक्तिमतां महापुरुषाणां सेवातिरेके निष्ठां दधानास्तत्रैवाभिनिविशन्ते। अत्रायमभिसन्धिः- हन्त्येव नियमाद् वध्यानिति रामायणोक्त्या क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिष्विति गीतोक्त्या च पापाचारपरायणेषु जीवेषु भगवतो निग्रहसङ्कल्पं निश्चित्य अविरतापराधानां निग्रहार्थमुद्यतस्य सत्यसङ्कल्पस्य सर्वेश्वरस्य नियमनात्को रक्षितुं प्रभवेत्तस्यानन्याधीनत्वाद- कुण्ठस्वातन्त्र्यात्, अतस्तादृशस्य भगवच्छरणवरणेऽपि भीत्यतिरेकात्कश्चित्पुरुषकारो मध्यस्थो घटको वापेक्ष्यते, येन स साक्षात्तदभिमुखमगत्वा स्वरक्षाप्रार्थनं दैन्यप्रकाशनं वा कर्तुं शक्नुयात्तदर्थं स परमकृपालुमाचार्यमेवोपायतयाश्रित्य निश्चिन्तो भवति, भगवांश्च यथाशास्त्रमाचार्यकृपाविशिष्टं तत्पुरस्कृतं जीवमाचार्यप्रार्थनया सकरुणः सन्नङ्गीकरोति, इत्थमाचार्यो- भगवन्निग्रहसङ्कल्पमपि तत्र शमयितुं प्रभवतीति तद्विशेषः वर्णितं च रामायणे- नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरमित्युक्त्वा निग्रहोन्मुखस्य भगवतो भक्त्याचार्यश्रीलक्ष्मणद्वारेत्थं प्रसादनम्-

> सदा त्वं सर्वभूतानां शरण्यः परमा गतिः।
> पुरा भूत्वा मृदुर्दान्तः सर्वभूतहितेरतः।।
> न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि।
> ततः सौमित्रिराश्वास्य मुहूर्त्तादिव लक्ष्मणः।।
> रामं सम्बोधयामास चरणौ चाभिपीडयन्।।

किञ्च समुद्रं शोषयितुमुद्यतमपि भगवन्तं स एव तद्धनुरालम्ब्य रोद्धुं प्राभवत्-

....................................................पदपरामर्शः....................................................

सौमित्रिरुत्प्लुत्य विनिःश्वसन्तम्।
मामेति चोक्त्वा धनुराललम्बे।।

आचार्यस्य भगवतः सौमित्रेरेवं प्रभावं विज्ञायैवेदं सुग्रीवं प्रतीदं हनुमद्वचनं सङ्गच्छते–

कृतापराधस्य हि ते न हि पश्याम्यहं क्षमम्।
अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात्।।

आचार्यप्रसादो भगवत्प्रसादहेतुर्भवति, अतो मुक्तये तद्वत्तापेक्षा स्मर्यते–

पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत्।
आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत्।।

मोक्षमूलं गुरोः कृपेत्युक्तभावाभिनिवेषेन सदाचार्याभिमानोऽपि योगत्वेनोपायत्वेन तत्र तत्र दर्शितः। तद्यथा–

आचार्यस्य प्रसादेन मम सर्वमभीप्सितम्।
प्राप्नुयामिति यस्यास्ति विश्वासः स सुखी भवेत्।।

स्वाचार्यानुग्रहं शरणीकृत्य तन्नियोगात्सधैर्यमवस्थायान्ते भगवत्प्राप्तिकर्त्री शबरी रामायणे वर्णिता **अतः** "कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि" इति भगवता पृष्टा सा स्वयं भगवद्दर्शनमाचार्यकृपयावाप्तमिति भगवत्समक्षमेव ब्रवीति–

अद्य मे सफलं जन्म गुरवश्च सुपूजिताः।

साक्षाद्भगवद्भक्तिप्रपत्तिरहितानान्त्वाचार्यनिष्ठैव पुरुषकारो, येषामाचार्यकृपाबलमपि न तेषां भागवतशेषतैव पुरुषकार इति साक्षात्प्रपदनाभावेऽपि तस्मिंस्तज्जने भेदाभावादित्युक्तवासनया परम्परयापीष्टसाधकत्वमाह– **तथेति।** श्रीशत्रुघ्नचरितमत्र शिक्षकम्। मत्स्मृतिः साधुसेवया, यथोपाश्रयमाणस्य भगवन्तं विभावसुम्– शीतं भयं तमोऽप्येति साधून् संसेवतस्तथेत्युक्तमनुचिन्त्य भागवतकैङ्कर्यमात्रं मे पुरुषार्थ इति मन्यमाना अपि पुरुषकारैकनिष्ठा एव। यथा राजा स्वसेवकानुबन्धिनामपि रक्षणं करोति तथैव भागवताश्रयस्य भगवान्–

पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्।
दुर्लभा भगवद्योगभाविनो भुवि मानवाः।
तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदमित्याद्युक्तेः।

पदपरामर्शः

*दृश्यते च भगवतोऽपि तत्प्रीतिपरवशता।*
*नारायणस्तमन्वास्ते वत्सं गौरिव वत्सला।।*

*अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिरित्याद्युक्तेः। वर्ण्यते च भगवत्सेवापेक्षयापि तद्भक्तसेवामहत्त्वातिशयः- सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्। न संशयोऽस्ति तद्भक्तपरिचर्यारतात्मनाम्।। आराधनानां सर्वेषां विष्णोराराधनं परम्, तस्मात्परतरं प्रोक्तं तदीयाराधनं परमित्यादिना। विधीयते च भगवत्प्रसादजनकतया भागवतकैङ्कर्यम्, तस्माद्विष्णुप्रसादाय वैष्णवान् परितोषयेत्, मम भक्तभक्तेषु प्रीतिरभ्यधिका भवेदित्यादिना। आस्थीयते शुकेनापि भागवते जात्या कर्मणा वा पापिनां तपश्चर्यादिकं विनैव भागवताश्रयेण परिशुद्धिः-* **येऽन्ये च पापा** *यदुपाश्रयाश्रयाः शुद्ध्यन्ति तस्मै प्रभविष्णवे नम इति। अतो युज्यत एवोपायभावस्तत्र सदा सतां सेवातिरेकं प्रपन्नानामिति सङ्क्षेपः।*

**प्रपन्नश्चापि दृप्तः स तथा चार्त इति द्विधा।**
**शरीरस्थितिपर्य्यन्तमाद्योऽत्रैव यथोचितम्।।148।।**
**प्राप्तदुःखादि भुञ्जानः शरीरान्तेऽवसीय च।**
**महाबोधोऽतिविश्वासो मोक्षसिद्धिमवस्थितः।।149।।**
**अथाऽन्त्योऽसहमानस्तत्क्षणमेव तु संसृतिम्।**
**तथैव भगवत्प्राप्तौ सत्वरस्वान्त उच्यते।।150।।**

पदपरामर्शः

*आश्रयनिबन्धनभेदपुरस्कारेण प्रपन्नमुमुक्षुस्वरूपं यथावन्निरूप्येदानीमार्तो वा यदि वा दृप्त इति रामायणोक्त्यनुसारेण तन्नाम्नैव व्यवसायप्रयुक्तं तदवान्तरमपि भेदं स्वरूपकथनेन विविनक्ति त्रिभिः-* **प्रपन्नश्चापीति।** *स च प्रपन्नोऽपि दृप्त आर्तश्चेति*

संवित्करः

प्रपन्न भी दृप्त एवं आर्त के भेद से दो प्रकार के होते हैं। दृप्त प्रपन्न वह होता है जो शरीरस्थिति पर्यन्त प्रारब्धानुसार प्राप्त कर्म फल को भोग कर भगवत्कृपा से महाबोधोदय होने पर शरीर के अवसान में प्रभु मुझे सायुज्य अवश्य प्रदान करेंगे इस महाविश्वास पर अवस्थित रहता है। भगवद्विरह के उदित होने से जिसे दुःखमय सांसारिकबन्धन को क्षण भर के लिये सहन करना कठिन हो जाता हैं, वे सद्यः भगवान् को प्राप्त करना चाहते हैं। ऐसे भगवद्विरह के असहिष्णु प्रपन्न को आर्त प्रपन्न कहते हैं।

................................................पदपरामर्शः................................................

*द्विधा, आद्योऽत्रैव शरीरस्थितिपर्यन्तं यथोचितं प्राप्तदुःखादि भुञ्जानश्शरीरान्ते मोक्षसिद्धिमवसीय च महाबोधोऽतिविश्वासश्चावस्थितः, अथान्त्यस्तु संसृतिमसहमान-स्तत्क्षणमेव भगवत्प्राप्तौ सत्वरस्वान्त उच्यत इति विवक्षानुगुणपदयोजना। पूर्वार्धे* ***तथेत्यनेन*** *यथा पुरुषकारैकनिष्ठा द्विधा तथा प्रपन्ना अपीति पूर्वोक्तार्थेन भेदसाम्यं वदति। शरीरस्थितिपर्यन्तमादेहपातमत्रैव मर्त्यलोक एव।* ***यथोचितमित्युक्तिस्तु*** *सर्वज्ञस्य समर्थस्य न्यायप्रियस्य भगवतः कर्मफलप्रदाने वैषम्यादिदोषगन्ध-लेशाभावाद्दुःखावाप्तावपि तत्र गुणाकारेण युक्तत्वधियैव। प्राप्तदुःखादीत्यत्रादिपदेन सुखसङ्ग्रहस्तस्यापि पुण्यफलतया भोगेनैव नाशात्। प्राप्तं स्वार्जितत्वादनिवार्यतयोपेतम्, भुञ्जान इत्यत्र भुजोऽनवने इति विधेर्जागरूकत्वेऽपि कर्मफलस्य तत्कर्तृगामित्वेन तदैकभोग्यत्वरूपमौचित्यं प्रकाश्य भोगेऽनासक्तिर्द्योत्यते। परमहितैषी भगवान् अनेनैव देहेन कर्मफलं भोजयित्वा शरीरान्ते निर्मलं मां स्वस्वरूपं प्रापयिष्यतीत्यवसीय मोक्षसिद्धिं निश्चित्यावस्थित इति। गुरुणोपदिष्टस्य भगवदादितत्त्वस्यापरोक्षानुभूतिर्यस्य स महाबोधः, अभयं ददाम्येतद्व्रतं ममेति वक्ता नूनं मां रक्षिष्यतीत्यतिशयेन विश्वासोऽकम्पप्रत्ययो यस्य तथाभूतः, स दृप्तप्रपन्नः। यथा पुत्रस्य जीवनमेव दायप्राप्तौ कारणन्तथैव प्रपन्नस्य भगवत्प्राप्तौ शङ्कैव नेति न तदर्थं प्रयासान्तरापेक्षा। यथोक्तं भागवते–*

*तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्।*
*हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्।।*

*यश्चान्त्यः प्रपन्नः प्रातिकूल्यपौष्कल्याद् भीषणत्वेन संसृतिं संसारं कर्मारब्धं च शरीरमपि वोढुमसमर्थस्तत्क्षणमेव सद्यो भगवत्प्राप्तौ त्वरमाणमानस एवार्त्तप्रपन्न उच्यते। चिरक्षुधितस्यामृतपानमिव भगवन्तं प्रति तस्य विरहासहिष्णुतया त्वरातिशयो लभ्यते। तादृशविरहाग्नौ प्रारब्धकर्मनाशात्पुनः संसारावाप्तिर्नेति, पापस्य भगवद्विरहमयप्रेमस्फोरकत्वाभावात्। वस्तुतस्तादृशामपि प्रारब्धकृतजन्म न भवति, न कर्मबन्धनं जन्म वैष्णवानाञ्च विद्यत इति पाद्मपुराणोक्तकार्तिकमाहात्म्ये प्रोक्तत्वात्। सत्वरं त्वरासहितं स्वान्तं मनो यस्येति सत्वरस्वात इति।* ***तथैवेति*** *एकवृन्तफलद्वयवदुभयस्यापि प्रपन्नव्याप्यत्वं द्योतयित्वा पूर्ववदत्रापि महाबोधाति-विश्वासोदयादिकृतं साम्यं वक्ति। स्वाभिमतसम्भवे विलम्बाक्षमस्तीव्रसंवेगवान् आर्त्तः, दृप्तश्च विलम्बाविलम्बावनादृत्य फलसिद्धिमात्रसक्तः। आर्तप्रपन्नः संसारजुगुप्सा-नुसन्धानेन सद्य एव देहनिवृत्तिकामो भवति दृप्तश्च शरीरावसाने मुक्तिकाम*

.....................................................पदपरामर्शः.....................................................

इत्युभयोर्विशेष इति भूषणाशयः। अत्र भावपरिपाकतारतम्याद् दृप्तापेक्षयार्तस्योत्कृष्टत्वादेव वाल्मीक्युक्ताभ्यर्हितपूर्वक्रम- परित्यागः।

**श्रवणादिमात्रनिष्ठाः शुद्धभक्ताः प्रकीर्तिताः।**
**अन्तर्भाव्यास्तत्र तत्र तथानुक्ता मुमुक्षवः।।151।।**

.....................................................पदपरामर्शः.....................................................

श्रवणकीर्तनादिषु नवसु भक्तिभेदेष्वन्यतमे निष्ठावतां का समाख्या, कुत्र च मुमुक्षुभेदे तदन्तर्भाव इत्याकाङ्क्षायामाह- **श्रवणादिमात्रेति**। ये च श्रवणादिसाधनभक्तेरेकैकभेदे निष्ठावन्तस्ते शुद्धभक्ताः प्रकीर्तिताः यथा वा केचन ''हरेर्नाम हरेर्नामे'' त्यनुसन्धाय नाम्न्येव महतीं निष्ठां धारयन्तो नाम्न्येव भगवदभेदाध्यावसायेन वा प्रीतिजुषो भवन्ति तादृशां नामरूपलीलाधामनिष्ठानामङ्गोपासकानां तत्र तत्रान्तर्भावो विधेयः। इत्थमनुक्तानामेषां यथायोग्यं मुमुक्षुभक्तेष्वन्तर्भावः करणीय, एषामपि मुमुक्षुत्वात्। अत एवैषां भागवतेऽपुनर्भवः फलमुक्तम्-

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते।।

-----------------------------------संवित्करः-----------------------------------

जो केवल श्रीरामजी के गुणों के श्रवणकीर्तन आदि नवधा भक्ति में लगे रहते हैं, उन्हें शुद्धभक्त कहा गया है। इसके अतिरिक्त जिन मुमुक्षुओं का किसी वैष्णव भेद में परिगणन न हुआ हो, ऐसे मुमुक्षुओं कां अन्तर्भाव भी इसी शुद्धभक्त की कोटि में करना चाहिये।

**नित्यकादाचित्कभेदान्मुक्तद्वैविध्यमुच्यते।**
**नित्याः कदाचित्तत्रापि सिद्धाः सुपुरुषा वराः।।152।।**
**गर्भजन्मादिदुःखं येऽननुभूय स्थिताः सदा।**
**सीतारामप्रियाः शश्वदाञ्जनेयादयो मताः[1]।।153।।**

.....................................................पदपरामर्शः.....................................................

त्रिविधेष्वपि जीवेषु बद्धजीवं सभेदमुक्त्वा सम्प्रति मुक्तस्य द्वैविध्यं विवक्षति।

-----------------------------------संवित्करः-----------------------------------

मुक्त जीव दो प्रकार के होते हैं- नित्यमुक्त एवं कादाचित्कमुक्त। जिन्होंने कभी जन्म गर्भवासादि का दुःखानुभव किया ही नहीं हो, भगवान् श्रीरामजी के दिव्यधाम साकेत में रहकर नित्यभगवत्परिचर्यारूप परमानन्द को प्राप्त करते रहते हैं, वैसे श्रीसीतारामप्रिय श्रीहनुमान् आदि भगवत्पार्षद नित्यमुक्त जीव कहलाते हैं।

---

[1] पा. भे.- शश्वत्ते हनुमन्मुखा मताः।

पदपरामर्शः

यद्यपि मुक्तशब्दस्य स्वावधिं प्रति नित्यसाकाङ्क्षतया बन्धनपूर्वकत्वमेवावसीयते तथाप्यत्र येषां कदाचिदपि कर्मबन्धनरूपसंसारयोगो नास्ति, तथाविधानां नित्यानामपि मुक्तौ समावेशान्मुक्तद्वैविध्यमाह- **नित्यकादाचित्कभेदान्मुक्तद्वैविध्यमुच्यत** इति। संसारत्वावच्छिन्नध्वंसाधिकरणत्वं कादाचित्कत्वम्, ते स्वबद्धतादशायामनुष्ठितै-र्मोक्षोपायैरुदितेन भगवत्सङ्कल्पेन निवृत्तबन्धा उच्यन्ते किन्तु संसारात्यन्ताभाववन्तः श्रीहनुमदादयो नित्या उच्यन्ते, ध्वंसाभावाधिकरणेऽत्यन्ताभावस्यानङ्गीकारात् संसारध्वंसप्रागभावति बद्धे, संसारध्वंसवति कादाचित्के न संसारात्यन्ताभावसंभव इति नित्यास्ताभ्यां भिद्यन्ते। यद्यपि नित्यानां कादाचित्कानां च कर्मकृतज्ञानसङ्कोचाद्यभावात् एकरूपसुखानुभवाच्च स्वरूपभेदकथनं नोपपद्यते तथापि कामान्नी कामरूपीत्याद्या-गमात् कर्माभावेऽपि भगवदिच्छाधीनेच्छाप्रयत्नादिभेदेन नित्यकादाचित्कयोः परस्परं भेदः स्वीकार्य एव। यद्यपि सर्वेषां परतन्त्रचेतनत्वात् संसरणयोग्यता मुक्तियोग्यता च विद्यते तथापि सापराधत्वस्य संसरणं प्रति भक्तिप्रपत्त्यन्यतरस्य अनुष्ठितोपायस्य च मुक्तिं प्रति सहकारियोग्यता। अतो नित्यप्रत्यक्षितभगवदभिप्रायेषु नित्यकादाचित्कमुक्तेषु सापराधचेतनत्वरूपसंहकारिकारणाभावात् संसारानुवृत्तिर्नास्ति। समोऽहं सर्वभूतेषु'' इत्युदारघोषणावतो भगवतः प्रसादस्यैव मुक्तिहेतोः प्राप्तौ पौर्वापर्यनियामकाभावात् सर्वेऽप्येकदैव मुच्येरन्, तथाप्यविद्याचक्रे प्रतिपुरुषं कर्मणां तत्तत्काले विपक्तिर्भवति, अतः प्रसादहेतुसामग्र्याः विपाकसमयभेदात्तत्तत्पुरुषभेदेन मुक्तिलाभस्य पौर्वापर्यं युज्यते। प्रथमं नित्यानाह- **नित्या** इति। ये कदाचिदपि गर्भजन्मादिदुःखम् अननुभूय सदा तत्र स्थितास्ते नित्या इत्यन्वययोजना। नित्यानां नित्यभगवत्प्रीतिलाभसौभाग्यमाह- शश्वत्सीतारामप्रिया इति। एतेन श्रीसीतारामयोरेव परत्वं संसूच्यावताररूपतया विभवत्वमात्रमङ्गीकुर्वतां मतं निरस्तम्। प्राप्यस्वरूपस्य युगलरूपताद्योतनायैव सीतारामेत्युभयोर्निर्देशः। तान् नित्यान् नामग्राहमाह- **आञ्जनेयादय** इति, तत्राप्याञ्जनेयस्य प्रामुख्याल्लोकप्रसिद्ध्या च प्रथमगणनीयत्वेन तन्नामग्रहणम्। यद्यप्यञ्जनाया अपत्यं पुमानित्यपत्यप्रत्ययान्ततया गर्भजन्मादियोगः प्रतीयते तथापि रूपान्तरेण भगवल्लीलासिद्धौ भगवत्सङ्कल्पाद्दिव्याविर्भावस्वीकारेण न नित्यताहानिः। नित्यसूरित्वन्तु सदा पश्यन्ति सूरय इति श्रुत्यानेकद्रष्टृकृतसदादर्शनोक्त्या सिद्ध्यति।

.........................................................पदपरामर्शः.........................................................

*अत्रायमाशयः– अनादिस्वतन्त्रसर्वज्ञत्वं भगवत एव अनादिपरतन्त्रसर्वज्ञत्वं नित्यानाम्, आदिमदकर्मकृतपरतन्त्रसर्वज्ञत्वं कादाचित्कमुक्तानाम्, मुक्ते दुःखायोगेऽपि, तस्यैव पूर्वं बद्धावस्थायां तद्योगेन तदत्यन्तायोगाभावाद् बद्धकादाचित्कमुक्तयोः– स्वप्रतियोग्य-समानाधिकरणदुःखाभावाभावः साधर्म्यमिति। बद्धानामपि महर्ष्यादीनां तपःफलतया सार्वज्ञ्योदयादादिमत्कर्मकृतपरतन्त्रसर्वज्ञत्वं तेषाम् तदितरबद्धानां कर्मयोगात्सङ्कुचित-ज्ञानतया दुःखसम्बन्धस्यासाधारणधर्मतया च सर्वज्ञत्वरहितत्वे सति परतन्त्रचेतनत्वमिति भावः।*

**नित्यमुक्ता अपि द्वेधा परिजनाः परिच्छदाः[1]।**
**मारुत्याद्याः किरीटाद्याः क्रमात् ते च प्रकीर्त्तिताः॥154॥**

.........................................................पदपरामर्शः.........................................................

*नित्यानां ज्ञानभोगयोरत्यन्तसाम्येऽपि स्वरूपाधिकारवैषम्यकृतं पारम्यं भगवत्येवेति परिचारककिरीटादिवर्णनेन सर्वेश्वरानुरूपवैभवं श्रीसाकते भगवन्नित्यधाम्नि नित्यमुक्तानां स्वामिगुणप्रेरितकैङ्कर्यविधिं तदास्वादनगर्भं च विवक्षन् तदनुगुणं द्वैविध्यमाह–* ***नित्यमुक्ता अपि द्वेधेति।*** *मारुताद्या श्रीहनुमदाद्याः परिजनभावेन छत्रचामरव्यजनादिधारकतया यथायोग्यं सेवन्ते, अपरे नित्यमुक्ता परिच्छदभावेन किरीटमुकुटकुण्डलहारकेयूरकटककाञ्चीगुणनूपुरादिभगवदनुरूपवेषेण श्रीरामचन्द्रं परिचरन्तीति भावः। परिच्छाद्यतेऽनेनेति परिच्छद उपकरणम्, पुंसि सञ्ज्ञायां घः प्रायेणेति घः। न केवलं परिचारकरूपेणापितु नित्यमुक्ता एव सेवोपकरणरूपेणापि भगवन्तं परिचरन्ति। एतेन किरीटादीनामपि चेतनत्वं तत्रेति लभ्यते। परिजनक्रिया खलु सेवा। अतः परिजनपरिच्छेदयोः परिचरणैकोद्देश्यसाम्यं द्योतयन्नुपसर्गैक्याद-नुभूयमानानन्देऽप्युच्चावचराहित्यं ध्वनयति। परमयोगिभिर्ध्यातुमपि दूरस्य भगवत एभिर्न*

-------------------------------संवित्करः-------------------------------

**नित्यमुक्त भी परिजन एवं परिच्छद भेद से दो प्रकार के होते हैं। जो समीपस्थ हो, परिजन भाव से सर्वविध कैङ्कर्य करते हैं, वे श्रीहनुमान् प्रभृति परिजनरूप नित्यमुक्त जीव हैं तथा जो किरीट मुकुट आदि रूप से भगवत्सेवा करते हैं, वे नित्यधाम में विराजमान परिच्छदभेद वाले नित्यमुक्त कहलाते हैं।**

---

[1] पा. भे.– परिजनाः परिच्छदाः नित्यमुक्ता अपि द्विधा।

पदपरामर्शः

*केवलं सान्निध्यं प्राप्यतेऽपितु यथायोग्याकारेण परिजनादिभावेन नित्यं निरपेक्षं स परिचर्यते इत्यहो स्वरूपानन्दापेक्षयाप्यपरिच्छेद्यब्रह्मस्पर्शाद्यानन्दास्वादधन्यतातिरेकस्तेषाम्।*

**भागवताः केवलाश्च कादाचित्का अपि द्विधा।**
**तत्र[1] भागवता बोध्या ये तेषु भगवत्पराः॥155॥**
**भगवद्भोग्यभूत्यादिसाक्षात्कारसुखाश्रयाः।**
**श्रीराममानसा नित्यं तदनुध्यानतत्पराः॥156॥**
**केचिद् गुणानुसन्धानपराः कैङ्कर्यतत्पराः।**
**इत्थं महर्षिभिः प्रोक्ता द्विविधा भगवत्पराः॥157॥**
**द्विविधा केवला बोध्या दुःखभावैकतत्पराः।**
**आत्मानुभूतिपरमा इति चोक्ता महर्षिभिः॥158॥**

पदपरामर्शः

*मुक्तेषु स्वरूपनिर्देशपूर्वकं सविभागं नित्यमुक्तं समुन्नीय कादाचित्कमुक्तं तत्स्वरूपभेदाविष्कारेणावगमयति-* **भागवता इति।** *करुणासिन्धोर्भगवतः सञ्जातेन केनाप्यनुग्रहेण कदाचिज्जातमुक्तेरेव कादाचित्कत्वमर्थतः सिद्धम्। एतेनाकस्मिकत्वाद् दुर्लभत्वं सूच्यते। ते कादाचित्का मुक्ता अपि भागवतकेवलभेदाद् द्विधा, तेषु भगवत्परा, श्रीसीतारामानुरक्ता भागवता बोध्याः। तेषामपि तदनुध्यानानन्दपरा, कैङ्कर्यपरा इतिभेदद्वयम्। प्रथमे भगवद्भोग्यभूतेर्नित्यानवद्यैश्वर्यमय्याः शुद्धसत्त्वमयत्वात्स्वरूप-*

संवित्करः

कादाचित्कमुक्त भी भागवत तथा केवल भेद से दो प्रकार के होते हैं। इनमें जो अनन्यभाव से श्रीसीतारामपरायण होते हैं, वे भागवत कहलाते हैं। वैसे भागवत भी दो प्रकार के होते हैं, जिनमें कुछ (भक्त) ऐसे होते हैं, जो भगवान् श्रीराम के ऐश्वर्य आदि अनन्तदिव्यविभूतियों के साक्षात्कारजन्य सुख के हेतुभूत भगवद्ध्यान में ही संलग्न रहते हैं, दूसरे वे है। जो भगवान् के दिव्यगुणों का निरन्तर चिन्तन करते हुए भगवत्कैङ्कर्य में सदा संलग्न रहते हैं। महर्षियों ने इस प्रकार से भेद का परिगणन किया है। केवल मुक्त भी दो प्रकार के होते हैं, प्रथम वे हैं जो 'सर्व दुःखं विवेकिनः' की भावना से संसार को दुःखरूप ही समझते हैं अर्थात् आत्मव्यतिरिक्त सभी संसार के पदार्थ दुःखरूप हैं ऐसा सदा अनुभव करते हैं। दूसरे वे हैं, जो सर्वदा आत्मानुसन्धान करते हैं, आत्मव्यतिरिक्त पदार्थ का चिन्तन ही नहीं करते।

[1] पा. भे.- ते तु।

.....................................................पदपरामर्शः.....................................................

गुणसंस्थानादिवैचित्र्यातिशयेन नित्यमपूर्ववत् अनुभाव्यमानाया साक्षात्कारेणानुभूत्या प्राप्तसुखस्याचिन्त्यानन्दस्याश्रयभूता भवन्ति। श्रीरामे मुक्तोपसृप्ये भगवति मानसं येषान्तादृशा अतस्तद्दिव्यसौन्दर्यादिलुब्धमानसतया नित्यं तस्यैवानुध्याने चिन्तने तत्पराः संलग्ना ये भवन्ति ते विभवाऽनुचिन्तनरसिकाः। केचिच्च भगवतः कारुण्यमाधुर्य-मार्दवसौशील्यादिदिव्यगुणानुसन्धानपराः, अतो गुणैर्दास्यमुपागत इत्युक्त्या गुणगृहीतचेतसस्तत्कैङ्कर्यैकरसिका भवन्ति। इत्थं केचित्साक्षात्कारद्वारा तदनुचिन्तनमग्नाः अपरे पुनस्तद् गुणाकृष्टमनस्काः कैङ्कर्यरसमग्ना इति भावः। इत्येवं क्रान्तदर्शिभिः भगवत्परकादाचित्कमुक्तानां भेदद्वयमभाणि। आश्चर्यमयविभूतिसाक्षात्कारेण चमत्कृत-चेतसस्तदानन्दसिन्धौ निमग्नाः, अपरे च दिव्यगुणलुब्धाः तत्सेवासुखरसमप्यास्वादयन्तो भवन्तीति मिथो भेदः। एकत्र मनोनयनानन्दरूपायाः स्वात्मनिर्वृत्तेः प्राधान्यमपरत्र भगवदेकसुखपर्यवसायिसेवानन्दरुचिवैचित्र्यकृतो भेदः। तेन मुक्तानां भगवत्परिचर्या-द्यर्थन्तदनुगुणविग्रहावाप्तिरर्थतः सिद्धा। एतेन प्रत्यगानन्दापेक्षया परमात्मानन्दस्य पारम्यं द्योतितम्। येन हि स्वात्मानन्दमप्यविगणय्य भगवदानन्दे ते निमज्जन्ति। कादाचित्कमुक्तेषु ये केवलमुक्तास्तेऽपि दुःखभावैकतत्परा आत्मानुभूतिपरमा इति नाम्ना महर्षिभिर्द्विधा प्रोक्ताः। स्वात्मानन्दापेक्षया तद्व्यतिरिक्ते सर्वत्र दुःखभावमेवानुसन्दधते यद्वा दुःखपङ्कमग्नानां सांसारिकजनानां दुःखानुचिन्तया करुणार्द्रचेतसो भवन्ति, सर्वज्ञत्वलाभाद्दुःखं सर्व विवेकिन इत्युक्तेः। दुःखभावैकतत्परत्वे तेषामपि दुःखितत्वं स्यादिति चेन्न तेषामविद्या-नावृतत्वादुःखमूलकर्मणोऽप्रसक्ते श्च। अपरे चात्मानुभूतिः स्वात्मानन्दानुसन्धानं परमा अत्यर्थप्रिया येषान्त आत्मानुभूतिपरमाः। परिशुद्धस्वात्मस्वरूपानन्दानुभवे निमग्ना इत्यर्थः। एतेन भगवद्रामानन्दाचार्यमते कैवल्यमोक्षस्य स्वीकारो बोध्यते, यद्यप्ययं कैवल्याख्यो मोक्षो वेदान्तदेशिकप्रभृतिभिः- न्यायसिद्धाञ्जनादौ श्रीयामुनादि-मतोपान्यासपूर्वकमनूद्य युक्त्या प्रत्याख्यातः। किन्तु सर्वकर्मक्षयेण भगवदनुभव-रहितस्यास्य स्वीकारेऽपि न क्षतिः। केचन त्वस्य मुक्तिविशेषत्व आनन्दतारतम्य-मवर्जनीयं स्यादित्याशङ्क्य प्रत्याचक्षते। अतो भगवदनुभवरहितात्मानुभवमात्र-तृप्तस्यास्य केवलमुक्तस्य विरजापरमव्योम्नोरन्तरा केवलः स्मृत इति स्थानविशेषं निश्चित्य मुक्तत्वव्यपदेशस्यापि विगतेच्छाभयक्रोधो यः सदा मुक्त एव स इत्यत्रेव मुक्त्यदूरविप्रकर्षेण गौणत्वान्न मुख्यमुक्तिरिति कथयन्ति किन्त्वस्मदाचार्यैस्तु तत्स्वीकारो व्यधायीति विशेषः।

**समुच्यते सम्प्रति लक्षणं सन्महात्मनां सद्‌गुणवैष्णवानाम्।**
**विरिञ्चिशम्भुश्रितरामचन्द्रपदारविन्दस्थितचेतसां हि।।159।।**

..............................................पदपरामर्शः..............................................

*श्रीवैष्णवत्वस्य जीवत्वव्याप्यतया जीवभेदनिरूपणात्तद्भेदनिरूपणसिद्धेरिदानीं पृष्टक्रमानुगुणं श्रीवैष्णवलक्षणं वक्तुं प्रवर्तते-* **समुच्यत इति।** *सम्प्रति हि महात्मनां विरिञ्चिशम्भुश्रितरामचन्द्रपदारविन्दस्थितचेतसां सद्‌गुणवैष्णवानां सल्लक्षणं समुच्यत इति विवक्षितार्थानुसारेण पदनिवेशः। जीवस्य लक्षणमितिवल्लक्षणीये प्राय एकवचनस्य दर्शनेऽप्यत्र तेषां वैष्णवानां लक्षणं किमित्याकारकप्रश्नवाक्ये लक्ष्यवाचके बहुवचनदर्शनात्तदनुरूपस्योत्तरवाक्ये बहुवचनप्रयोगस्य युक्तता। वैष्णवानां लक्षणे पृष्टेऽत्रत्यं सद्‌गुणवैष्णवलक्षणमुच्यमानमयुक्तमिति चेन्न उत्तमानुत्तमयोर्युगपत्प्राप्तावुत्तमपरित्यागस्यायुक्तत्वात्। न हि रत्नलक्षणे जिज्ञासिते प्रथमं दुष्टलक्षणं परीक्षणायोपादीयतेऽङ्गवैकल्यात्, तस्य लक्ष्यत्वेऽपि निर्दुष्टं रत्नं निदर्श्यत इति विशिष्टोपादाने नायुक्तता। हरावभक्तस्य कुतो महद्‌गुणा इत्युक्तिमनुसन्धायाह-* **सद्‌गुणवैष्णवाणामिति।** *सतां सज्जनानां गुणा येषु ते सद्‌गुणाः, सद्‌गुणाश्च ते वैष्णवास्तेषाम्, यद्वा सद्‌गुणैरेव वैष्णवा न तु नाम्नैव, लोके पञ्चसंस्कारदीक्षितमात्रेऽपि वैष्णवपदव्यवहारदर्शनात्तादृशनामवैष्णवव्यावृत्तये सद्‌गुणेति। यद्वा भगवद्‌गुणाकृष्टतया वैष्णवाः, गुणैर्दास्यमुपागत इति श्रीलक्ष्मणोक्तेः। वैष्णवैर्यथा भूयेत तथा स्वरूपानुगुणाचारनिष्ठा इत्यर्थः। तेनाचारशुचितोक्ता। विहितानुष्ठानेन बुद्धिर्विकासमेतीति सदाचारफलत्वेन तद्बुद्धिशुद्धिमाह-* **महात्मनामिति।** *महान् विशदः समुदार आत्मा बुद्धिर्येषां, विशदज्ञानानामित्यर्थः। महति भगवत्यात्मा बुद्धिर्येषामिति विग्रहे सामानाधिकरण्याभावाच्छ्रूयमाणात्वानापत्तिः स्यात्। अवदातप्रज्ञानां चित्तमनायासेन भगवत्पादारविन्दयोरनुरक्तं भवतीति बुद्धिवैशद्यफलमाह-* **विरिञ्चिशम्भ्वादिना।** *विरिञ्चिशम्भुभ्यां हिरण्यगर्भशङ्कराभ्यां श्रितयोः सेवितयो रामचन्द्रपदारविन्दयोः श्रीराघवेन्द्रचरणकमलयोः स्थितानि संलग्नानि चेतांसि मनांसि येषामिति। विरिञ्चिश्च शम्भुश्चेति द्वन्द्वे उभयोर्घित्वेऽप्यल्पाच्त्वाच्छम्भुपदस्य पूर्वप्रयोगे प्राप्ते भागवतोक्त-*

------------------------------संवित्करः------------------------------

**जिनका चित्त निरन्तर शिव ब्रह्मादिकों द्वारा सेवित व समाश्रित श्रीरामचन्द्र के चरणारविन्द में भ्रमरवत् संलग्न रहता है, ऐसे सद्‌गुणसम्पन्न वैष्णव महात्माओं का लक्षण कहा जा रहा है।**

**पदपरामर्शः**

सृष्टिक्रममाश्रित्यानुज्येष्ठं पदाधानम्। विधातृत्वेन महादेवत्वेन च लोक आराध्यतया प्रथितप्रभावयोरपि रामचन्द्रपदारविन्दाश्रितत्वे भगवतो रामस्य स्वेतरसर्वाराध्यत्वं संसूच्य सर्वेश्वरत्वं प्रकाशितम्। भगवत्पदारविन्दाश्रयणोक्तेस्तन्मकरन्दलुब्धभ्रमरवदेकान्तरसिकत्वं व्यज्यते। श्रितशब्दो यदि रामचन्द्रेऽन्वीयते तदा तयोश्चकोरव्रतं, पदान्तेऽन्वीयते तदा तद्दास्यन्तयोर्गम्यते। एतेनोभयोरेश्वर्यं श्रीरामपादारविन्दाश्रयस्यैव फलमित्युक्तं भवति। यथा ऋग्वेदे–

अस्य देवस्य मीढुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः।
विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्।।

महादेवः सर्वमेधे महात्मा हुत्वात्मानं देवदेवो बभूवेति महाभारतोक्तेः, प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितमिति रामायणे श्रीराममुद्दिश्य ब्रह्मणोक्तेश्च। स्थाधातुर्गतिनिवृत्यर्थस्तेन प्रकृत्या चपलचेतसोऽपि यदासाद्य गतिनिवृत्तिरिति मकरन्दपौष्कल्यद्योतनेन तदास्वादनमुग्धमधुकरवृत्तिर्ध्वन्यते। इत्थं सद्गुणपदेन कर्मणः महात्मपदेन बुद्धेः पदारविन्दस्थितचेतस्त्वेन मनसश्च प्राशस्त्यमुक्त्वा वैष्णवे साधनवैकल्यं निरस्य सर्वसाधनसमन्वयः प्रदर्शितस्तत्रापि चरमविशेषणे भगवत्पदारविन्दप्रीतावितरयोः पर्यवसानं सिद्धान्तितम्। यद्यपि दूषणत्रयरहितधर्मो लक्षणं भवति तथापि अस्फुटत्वादिराहित्यद्योतनाय सदिति तद्विशेषणम्। अज्ञानसंशयविपर्ययप्रतिक्षेपेण उच्यत इति समुच्यते।

**धृतोद्र्ध्वपुण्ड्रस्तुलसीसमुद्भवां दधच्च कण्ठे शुभमालिकां जनः[1]।**
**तज्जन्मकर्माणि हरेरुदाहरेद् गृहणंश्च[2] नामानि शुभप्रदानि सः।।160।।**

**पदपरामर्शः**

भगवद्व्यतिरिक्तस्य सर्वस्यापि तच्छरीरतया वैष्णवत्वे, देवताप्रत्ययान्तस्य च विष्णुदेवताके हविराद्यचेतनेष्वपि च तत्त्वे प्राप्ते सामान्यतः पञ्चसंस्कारपूर्वक–

**संवित्करः**

जो द्वादश स्थानों पर ऊर्ध्वपुण्ड्रतिलक, तथा कण्ठ में परमपावन तुलसीनिर्मित माला धारण करे, भगवान् हरि के अवतारचरितों एवं शुभप्रद नामों का गायन, उच्चारण करे। (वह वैष्णव है)

---

[1] पा. भे.– मालाममलो हि कण्ठतः।
[2] पा. भे.– गुणांश्च।

.....................................................पदपरामर्शः.....................................................

भगवत्तदीयैकपरत्वमिह सद्वैष्णवलक्षणम्, तत्र तत्तदीयपरत्वस्य मुख्यत्वेऽपि तद्योग्यतासिद्धये संस्कारपूर्वकत्वमनिवार्यम्। तत्तदीयपरत्वाभावे देवतोद्देश्यकस्य संस्कृतपुरोडाशस्य प्रदीप्त आवहनीयाग्नावनिर्वपणवदत्यन्तायुक्तता, तस्य तादर्थ्यात्। इदं विरक्तगृहस्थोभयसाधारणम्। यथोक्तम्–

गृहीतविष्णुदीक्षाको विष्णुसेवापरो नरः।
वैष्णवश्चात्र सङ्ग्राह्यः स्कान्दाद्युक्तानुसारतः।।

पञ्चसंस्कारेषु मन्त्रनामतापानामस्फुटतयोर्ध्वपुण्ड्रतुलसीमालयोश्चातितरां स्फुटत्वात्तत्राप्यूर्ध्वपुण्ड्रस्य विप्रकृष्टान्तरतोऽपि लक्ष्यमाणत्वेन सर्वादौ तत एवाचारमूलं लक्षणं वक्तुमुपक्रमते– **धृतोर्ध्वपुण्ड्र** इति। यत्तदोर्नित्यसम्बन्धात्स इत्यनेन यच्छब्दपरामर्शाद् यो धृतोर्ध्वपुण्ड्रस्तुलसीसमुद्भवां शुभमालिकां च कण्ठे दधद् हरेः शुभप्रदानि नामानि गृहणंश्च तज्जन्मकर्माण्युदाहरेत्स जनः (वैष्णवः) इति विवक्षानुगुणपदव्यवस्थितिः। ऊर्ध्वपुण्ड्रादेः प्राथम्येनोक्तेः वैष्णवत्वस्य पञ्चसंस्कारमूलकत्वं दर्शितम्। पुण्ड्रं रेखा, ऊर्ध्वगामिरेखाकारतया नासिकामूलाल्ललाटे चर्चितं तिलकमूर्ध्वपुण्ड्रम्। विहितमृदा समन्त्रकं यथाविहितं द्वादशसु स्थानेषु धृतमूर्ध्वपुण्ड्रं येन सः। यथा भगवाञ्शिवो भगवत्पादतीर्थबुद्ध्यात्यादरेण गङ्गां शिरसा दधार तथैवाहल्योद्धारादौ दृष्टप्रभावैर्भगवत्पादरजोभिर्हरिपादाकृत्योर्ध्वपुण्ड्रं धरते वैष्णवजनः। यज्ञोपवीतधारणादिवद् धृधातोरत्र प्रयोगादादरातिशयः प्रकाशित इति न विलेपनादिशब्दप्रयोगः। ऊर्ध्वपुण्ड्रमात्रोक्त्या तद्व्याप्यानां हरिद्राश्रीशुक्लश्रीलुप्तश्रीबिन्दुश्रीप्रभृतीनां सङ्ग्रहः। यथा हि पतिव्रताया माल्यं सौभाग्यश्रियं पतिपारार्थ्यं च सूचयति तथैव वैष्णवानां भगवते निवेदितत्वं तत्पारार्थ्यं महाभागवतसंश्रयञ्च ख्यापयति तुलसीमालेत्याह– **कण्ठे शुभमालिकां तुलसीसमुद्भवां दधदिति।** कमलाक्षादीनामपि शुभमाल्यत्वेन परिगणितत्वेऽपि विशेषणविधया सर्वव्यतिरेकान्नियमयति– **तुलसीसमुद्भवामिति।** संस्कारसम्पादने तस्या एव सर्वातिशायित्वात्, तुलसीसम्भवं सर्वं पावनं मृत्तिकादिकमिति पद्मपुराणोक्तेश्च। न च तुलसीमालाधारणस्य संध्यादौ कुशादिधारणवत् अनुष्ठानकालव्यापित्वमस्त्विति वाच्यम्, उपनयनादनन्तरं यज्ञोपवीतधारणस्य यथा न यज्ञाद्यावधिकत्वं तथैव तस्या यावज्जीवं धार्यताया विहितत्वात्।

.......................................................पदपरामर्शः.......................................................

यथावस्थितसेवाधिकारसिद्धये तदविच्छिन्नयोगस्य युक्तत्वात्तदभावे योग्यतावैकल्यात्स्वरूपानुगुणसेवाया अलाभेन स्वरूपप्रच्युतिः स्यात्। यथा त्वं भगवत्पादयोर्नित्यसङ्गता तथा मामपि कुर्विति भावनया श्रीरामचरणारविन्दप्रीतिमिच्छद्भिर्वैष्णवजनैः समाराध्येति महतादरेण ध्रियत इत्याह- **दधदिति।** अत्रत्यं दधत्पदे उत्तरार्धे गृह्णन्निति पदे च लक्षणहेत्वोः क्रियाया इति लक्षणे शता। वैष्णवलक्षणप्रस्तावे पञ्चसंस्कारेषु च तुलसीमालायाः प्रामुख्येन समावेशात्तद्रहितस्यावैष्णवत्वं सूचितम्। ''जन'' इत्युक्त्वा मनुष्यमात्रस्याधिकारः सूचितः। चिह्नरूपं लक्षणमुक्त्वेदानीं तन्निसर्गसिद्धव्यापारं प्रदर्श्य लक्षयति- **हरेः शुभप्रदानि नामानि गृह्णन्निति।** तन्नामग्रहणादिभिरिति वैकुण्ठनामग्रहणमित्यादौ प्रयुक्तधातुमेवोपादत्ते गृह्णन्निति, यथाकथञ्चिद् ग्रहणेऽपि कल्याणकरत्वमेवेति सूचितम्। हरेराश्रितविपद्धरणशीलस्य भगवतो रामस्य, तेन बन्धहारित्वमुक्तम् यद्वा सर्वावतारसाधारणाद् हरेरिति सामान्यनिर्देशान्मीरादिवन्नारायणकृष्णगोविन्दादिनामग्रहणमप्यभिमतमेव, तेन सम्प्रदायान्तरे दृश्यमानं दुरवग्रहं निरस्य श्रीसम्प्रदायस्यास्य भावशुद्धिरौदार्यञ्च प्रकाशितम्। नामानीति बहुवचनं यथारुच्युपादानसौलभ्यद्योतनाय। किञ्चैतेन चान्द्रायणादिवत्कृच्छ्रसाध्यं न, अपित्विदन्तु वाङ्मात्रसाध्यमिति लभ्यते। रक्ष पाहीत्यादिक्रियापदाभावेऽपि नाम्ना सम्बुद्ध्या अलमिति। व्याकरणसंस्काराभावेऽपि तेषां बोधकताशक्त्या नित्यया न क्वचिदपि साद्गुण्यहानिः। अत एव पदानीति नोक्तम्। नाम्नां मोक्षसाधनतामाह- **शुभप्रदानीति।** अमङ्गलविधूननेन निरतिशयानन्दं भगवन्तमपि प्रयच्छन्तीत्यर्थः, तस्यैव सर्वशुभाश्रयत्वात्। नाम स्वस्त्ययनं हरेरिति भागवतोक्तेः। उक्तञ्च सकृदुच्चारितं येन हरिरित्यक्षरद्वयम्, बद्धः परिकरस्तेन मोक्षाय गमनं प्रतीति। अनुपलब्धे श्रोतरि नामजपं कुर्यात्, उपलब्धे च तस्मिंस्तज्जन्मकर्माण्युदाहरेदिति। हरेर्जन्मकर्मणो रहस्यतयान्यथाप्रतिपत्तिवारणाय विविधोपपादकवचनोपादनं द्योतयितुं धात्वन्तरेणाह- **उदाहरदिति।** अत एव भगवताऽधिगीतमेवमगायि-

> जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
> त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन।।

जन्म च कर्म चेति समस्यमानपदयोर्द्वित्वेऽपि जन्मकर्मणामिति बहुवचनं लीलावताराणामार्विभावेहितयोः प्रतिकल्पं वैचित्र्यं प्रकाशयितुं तदपरिच्छेद्यतामभिधत्ते।

पदपरामर्शः

तेन जन्मानि च कर्माणि चेति विग्रहो युक्तः। शुभप्रदानीत्यस्यात्राप्यन्वयः फलनिर्देशकविशेषणैक्यान्नामग्रहणस्य गुणकीर्तनस्य च समानफलकत्वं सूचितम्।

**सीतापतेः संशृणुया[1]न्निरन्तरं कथां च गायेत्सुयशोऽङ्कितां मुहुः।**
**रूपं तदीयं च चराचरात्मकं पश्यन् सतां सङ्गमुदारधीश्चरेत्॥161॥**

पदपरामर्शः

सत्सङ्गं विना भगवत्कथाश्रवणस्य न कदाप्यवसरो लभ्यते, तद्गुणचरितश्रवणकथनाभ्यामृते न बुद्धिवैशद्यं तद्विना च न जगतो भगवदात्मकतया दर्शनमिति वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति भगवदुक्तं माहात्म्यं वैष्णवस्तदनुगुणसाधनपरतया लभत इत्याह- **सीतापतेरिति।** सर्वादौ भगवदात्मकताया अपरोक्षानुभूतेः क्रमं विवक्षन् तादृशदृष्टिप्रकर्षस्य भगवद्गुणश्रवणकीर्तनैकमूलत्वं दर्शयितुं वैष्णवस्य कल्याणगुणाकरभगवल्लीलागुणाब्धिमज्जनप्रावण्यमाह- **कथां निरन्तरं स शृणुयादिति।** कथाश्रवणं विना तद्विषयतदुपस्थापनादिज्ञानाभावेन कथागाने तद्धेतुतया श्रवणं पूर्वमुक्तम्, आदौ कथां संशृणुयात्ततोऽवाप्तबोधो भगवद्रसिकेषु गायेदिति भावः। वैष्णवस्य सारग्राहित्वाद् भक्तेश्च महासारत्वात्तदवाप्तयेऽन्तरङ्गसाधनं कथाश्रवणमेव, यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे, भक्तिरुत्पद्यते पुंसः शोकमोहभयापहेति भागवतोक्तेः। सत्कारासेवितेऽपि तत्र साद्गुण्याया- पेक्षितमविच्छेदमाह- **निरन्तरमिति।** कथामिति देहलीदीपन्यायेन पूर्वपादगते संशृणुयादित्यत्रोत्तरपादगते गायेदित्यत्र चान्वेति। विषयस्यैकस्य निरन्तरासेवनाज्जातं वैरस्यमपनेतुं तदनुरागविवृद्धये यशःख्यापकानेकरोचकप्रसङ्गसम्पत्तिमाह- **सुयशोऽङ्कितामिति।** यद्वा सुयशोऽङ्कितामित्यस्य गायेदित्यत्रैवान्वयः, संशृणुयादित्यत्र तु यथापठितं निर्विशेषेण कथामात्रमन्वेति, तेन भगवत्कथां सरसां सामान्यं वा यथाकथञ्चित्कुतश्चिद्वा लब्धां संशृणुयात् तस्या वक्त्रधीनत्वात् किन्तु गाने स्वयं

संवित्करः

जो निरन्तर धनुर्धारी श्रीजानकीनाथ भगवान् की कथा का श्रवण करे तथा उनके ललित सुयशों से युक्त चरित का सदा गान करे। जो चराचर विश्व को भगवदात्मक बुद्धि से रामरूप में देखता हुआ सत्सङ्गपूर्वक उदारभाव से जगद् में विचरण करे। (वह वैष्णव है।)

---

[1] पा. भे.- धनुर्धरस्य शृणुयात्।

.........................................................पदपरामर्शः.........................................................

प्रवृत्तो वैष्णवो बहुधा विमृश्य भक्तिवृद्धये सुयशोऽङ्कितामेव कथां गायेद् गाने तस्य स्वातन्त्र्यादिति भावः। आविर्भावप्रसङ्गेन भक्तवाञ्छापूरकत्वं विश्वामित्रमनुगच्छतो गुरुजनपारतन्त्र्यं, यज्ञरक्षया धार्मिकजनानिष्टनिवर्तकत्वम्, अहल्योद्धारणप्रसङ्गेन पतितपावनत्वं, वनगमनप्रसङ्गेन मातापित्रोर्भक्तिः, सौभ्रात्रञ्च, निषादाद्याश्लेषेण सौशील्यं खरदूषणाद्युद्धारेणाश्रितजनसंरक्षकत्वं, जटायुषः गतिदानेन कृतज्ञत्वं, विषण्णसुग्रीवकष्टनिवारणेन दीनबन्धुत्वं विभीषणाभयदानेन शरणागतवत्सलत्वं प्रत्यावृत्तस्यायोध्याधिपतेस्त्यागसमुज्ज्वलं प्रजारञ्जनमित्येवंविधानन्तयशोगुम्फितां भगवत्कथां गायेत्स वैष्णव इति। सतीष्वप्यनेकविधावतारकथास्वाचारशिक्षणेन धर्मप्रवृत्तौ रामकथाया यथा सामर्थ्यं न तथा तदितरावतारकथानाम्। अत एव श्रीकृष्णलीलाप्रधाने भागवतेऽपि भगवद्रामचन्द्रस्यानितरसाधारणं सार्वभौममृषिजन-गीयमानं यशोजातमनवद्यतया स्तौति शुकाचार्यः- यस्यामलं नृपसदस्सु यशोऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टमिति। नास्ति रामायणात्परमित्युक्तेः। स्वाभीष्टविषय-निर्धारणेन कथां नियमयति- **सीतापतेरिति।** यद्विषयकरतावतिशयाधानमपेक्षितं तदनुरूपानुध्यानोत्तेजकसामग्र्युपादानस्यौचित्यात्। सीतायाः पतिस्तस्य सीतापतेः, सर्वथानुरूपपत्नीयोगोत्तम्भितचरितप्रकर्षस्य श्रीजानकीवल्लभस्येत्यर्थः। अयमाशयः- स्त्रीपुंसात्मकस्य मानवसमाजस्य कर्त्तव्यशिक्षार्थं प्रवृत्तं रामायणं न केवलं रामचरितेन पूर्तिमित्यपितु श्रीसीतारामयोश्चरितेन। भगवता नित्ययुक्तापि जगन्माता लीला-प्रयुक्तैस्त्रिभिरपि स्ववियोगैरनन्यशेषत्वमनन्यार्हत्वमनन्यभोग्यत्वञ्च प्रकाश्य स्वस्याः पतिपारार्थ्यं प्रबोध्य न केवलं नारीधर्ममपितु जीवस्वरूपमपि ज्ञपयति। अतो गाङ्गयामुनतरङ्गसङ्गसुभगेव रामायणकथा काञ्चिन्मनोज्ञतां बिभ्राणा सहृदयवैष्णवानां समधिकस्वादुतमा भवतीति ललितयुगलमाधुर्याभिधायिना नाम्ना कथान्तराद् व्यतिरेचयतीति भावः। तादृशकथाया नित्योपलब्ध्यैकभूमयस्तद्रसैकजीवनाः सन्त एवेति वैष्णवस्य तत्प्रसक्तिमाह- **सतां सङ्गञ्चरेदिति।** सत्सु सज्जेत बुद्धिमानित्युक्ते-स्तत्त्वज्ञमहात्मनामुपदेशेन रागोच्छेदवर्णनात्तत्सङ्गः परमं ज्योतिः, यच्च विद्योतयति चेतः, प्रबोधयति विवेकं, विगमयति दुर्मतिम्, अपहरति मलं मलिनात्मनाम्, सङ्गमयति च भगवद्भावसरणिम्। अत उच्यते- सन्तो दिशन्ति चक्षूंषीति। भगवच्चरितसेवाफलमाह- **उदारधीरिति।** विशदप्रज्ञः इत्यर्थः। तादृशप्रज्ञाफलमाह- रूपं तदीयं चराचरात्मकं

पदपरामर्शः

जगत्तदीयं तस्य भगवतो रूपमिति पश्यन् साक्षात्करोति चराचरात्मकमित्यत्रात्मपदं स्वरूपपरम्, तेन बहुव्रीहिस्ततः समासान्तः कप्। जगदित्यर्थः। भगवानेवास्य जगतो निमित्तोपादानकारणम्, यथा घटादौ कार्ये उपादानभूतमृदतिरिक्तं किमपि नोपलभ्यते, घटस्य मृण्मयत्वात्, तथैव कार्यभूतं चराचरं जगद्भगवन्मयमित्यनुभवति वैष्णवो भगवदुपादानकत्वात्। यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्तीत्यादि-श्रुतिभिः- यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयमिति श्रीमद्भागवतोक्तेश्च यस्मिन्नधिष्ठाने यत यदुपानात् येन कर्त्रेदं जातमतस्तद्रूपमेवेत्याह- य इदं स्वयमिति कथं जगद् मिथ्या स्यादिति भावः। अत एव चैकविज्ञानेन सर्वविज्ञानमिति सिद्धान्त उपपद्यते। वस्तुतस्तु चिदचिदित्युभयं वस्तु कारणावस्थं कार्यावस्थं वा भवतु, तत्सर्वं भगवच्छरीरभूतमिति भगवदाश्रितम्, भगवांश्चोभयोरात्मेति सर्वं भगवदात्मकमत एव सामानाधिकरण्येन सर्वविशिष्टो भगवान् राम एव सर्वत्र राजते। यस्य पृथिवी शरीरम्, यस्यात्मा शरीरमित्याद्यन्तर्यामिब्राह्मणोक्त्या ब्रह्मास्मीत्यादावपि शरीरात्मभावेन विशिष्टै-कत्वविवक्षया जीवब्रह्मसामानाधिकरण्यं संभवति, सम्बन्धविशेषविवक्षयैव रामायणे रामसुग्रीवयोरैक्यमित्युक्तम्। ऐतदात्म्यमिदं सर्वमिति श्रुतेः, सर्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषयेति भागवतोक्तेश्च। अतो नात्र सर्वभेदमिथ्यात्ववेदनेन स्वरूपैक्ये तात्पर्यम्। यद्वात्रार्जयन् वसतीत्यत्रार्जनार्थो वास इत्यर्थलाभाल्लक्षणहेत्वोः क्रियाया इति फलार्थे शता, तथैवात्र चराचरात्मकं तदीयं रूपं पश्यन् सतां सङ्गञ्चरेदित्यत्र तादृशब्रह्मात्मकदर्शनार्थं सत्सङ्गं चरेत्ततो बुद्धिवैशद्यलाभात्।

**चापादिपञ्चायुधचिह्निताङ्ककः[1] समीक्ष्य हृष्टश्च हरिप्रियानथ।**
**तथाविधान् भक्तिपरः प्रपूजयेत् सुवैष्णवाञ्जन्मफलादि संस्तुवन्॥162॥**

पदपरामर्शः

वैष्णवलक्षणप्रस्तावे तापसंस्कारस्यानुपेक्षणीयतां निर्दिशन् भागवतपरत्वं घटकीकरोति-

संवित्करः

जो भगवान् के धनुर्बाणादि पञ्चायुध से चिह्नित अङ्गवाले, भगवत्प्रिय श्रीवैष्णवजनों को देखकर अत्यन्त उल्लास एवं भक्ति के साथ अपने जन्मफल (भाग्य) की सराहना करता हुआ उनका पूजन करे। (वह वैष्णव है)

[1] पा. भे.- चिन्हिताङ्ककान्।

.........................................पदपरामर्शः.........................................

चापादिपञ्चायुधचिह्निताङ्क इति। "अतप्ततनूर्न तदामोऽश्नुते" इति मन्त्रेण भगवदायुधाङ्कनं विहितम्। तत्र धनुर्बाणनन्दकचक्रादेः पञ्चायुधत्वे धनुर्बाणयोः प्रथमोपादानान्मुख्यत्वमुक्तम्, यो नाङ्कितो धनुशरैर्न च मन्त्रराजस्योपासको न स जनो रघुनन्दनस्येति सदाशिवसंहितोक्तेः। पञ्चायुधेषु क्वचिदन्यतरयोरङ्कनेनापि तत्सिद्ध्या पञ्चायुधपदोपादानम्, अङ्कनाधारानुरोधेन द्वयोरादानन्तु पञ्चानामपीति बोध्यम्। अयन्तापसंस्कारोऽत्र निर्दिश्यमानः संस्कारान्तरस्याप्युपलक्षणम्, संस्काराणां पञ्चत्वानुपपत्तेः। इत्थं पञ्चसंस्कारसंस्कृतो वैष्णवस्तदीयानां समर्चनमिति पाञ्चरात्रोक्तेर्वैष्णवे बन्धुसत्कृत्येति भागवतोक्तेश्च सुवैष्णवान् प्रपूजयेत्। सुवैष्णवानित्यत्र स्विति नेतरव्यावर्तकमपितु प्रकृत्या शोभनानित्यर्थे स्वरूपपरम्। तथाविधान् संस्कृतान्पूर्वोक्तभावसम्पन्नान् हरिप्रियान् हरेः प्रियान्, हरिः प्रियो येषान्तानित्युभयथा विग्राह्यतया प्रीत्या भगवत्सम्बद्धान्, साधवो हृदयं मह्यं साधूनां हृदयन्त्वहमिति भगवदुक्तेः। यद्वा यो मद्भक्तः स मे प्रिय इति गीताद्वादशाध्यायोक्तां हरेर्भक्तिमूलां प्रियतां दधानान् समीक्ष्य तस्मिंस्तज्जने भेदाभावादिति नारदसूत्रोक्ताभेदभावं मनस्याधाय भगवत्कृपानिबन्धनां तत्प्राप्तिं मत्वा हृष्टोऽतिमात्रं मुदितः अथ भागवता भूयं प्रिया स्थ भगवान् यथेति श्रीरुद्रोक्तेः। भक्तिपर इत्यनेन स्वाराध्यवत्साष्टाङ्गवन्दनादिकमुच्यते– वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेद् भुवीत्युक्तेः। अद्य मे सफलं जन्म जीवितं सफलञ्च म इत्याद्युक्तप्रकारेणात्मानं श्लाघमानः, जन्मफलादीत्यत्रादिपदेन तत्कृतानुग्रहधन्यतादि सङ्गृह्यते। तद्यथा–

अहो भाग्यस्य योगेन दर्शनं भवतामिह।
अनुग्रहस्तु कर्त्तव्यो मपि दीने दयापरैः।।
अहो आचरितं किं मे मङ्गलं मङ्गलायनाः।
यस्य वो दर्शनं ह्यासीद्दुर्दशानाञ्च योगिभिः।।

सुवैष्णवान् भगवद्बुद्ध्या भगवन्तमिव प्रपूजयेत् यः स वैष्णव इति पूर्वोक्तार्थेनान्वयः। प्रपदेन मत्सेवाभ्यधिका मतेति भगवदुक्त्या ततोऽप्यधिकभावेन पूजयेद् वैष्णवपूजाया अतिमात्रं भगवत्प्रसादजनकत्वादिति सूचितम्।

**पञ्चायुधाङ्काङ्कित[1]वैष्णवा ये विप्रा अथ क्षत्रियवैश्यशूद्राः।**
**स्त्रियस्तथाऽन्येऽपि च विष्णुरूपा जगत्पवित्रप्रपवित्रिणस्ते॥163॥**

.........................................................**पदपरामर्शः**.........................................................

*वैष्णवलक्षणनिरूपणे भक्तिहेतुकं वैष्णवत्वाधायकपञ्चसंस्कारप्रयुक्तं वैष्णवानां परमपावनत्वं वक्ति-* **पञ्चायुधाङ्काङ्कितवैष्णवा** *इत्यादिना। पवित्रं ते ब्रह्मणस्पत इत्यादिमन्त्रैर्विहितस्य तापसंस्कारस्य कषायपक्त्या पावनत्वाधाने पर्यवस्थितिः। भगवतो धनुर्बाणनन्दकचक्रादिनाम्नां पञ्चायुधानां सुतापितानामङ्कैरङ्किता ये वैष्णवास्त इत्यर्थः। अङ्कनाधिकरणभूतयोर्भुजमूलयोर्द्वित्वेन पञ्चायुधेषु यथासम्प्रदायं कयोश्चिद्-द्वयोरायुधयोरङ्केनाङ्किता वैष्णवा अपि वैष्णवा एवेति क्वचित्परम्परायां दृश्यमानस्य शङ्खचक्राङ्कनस्याप्यविहितत्वं नेति बोधनाय, शङ्खचक्राङ्कितानां सम्प्रदायान्तरीय-वैष्णवानामपि तथैव पूज्यत्वद्योतनाय च पञ्चायुधेत्युक्तम्। अत्र पञ्चायुधेत्यायुध-सत्तामात्रबोधकम्, द्वयोरुपादानन्तु प्रकरणानुरोधात्सम्भवाच्च। अत्र सम्प्रदाये तु धनुर्बाणयोरङ्कनमभिमतम्। अस्य संस्कारान्तरोपलक्षकतया पञ्चसंस्कारसंस्कृता वैष्णवा विष्णुरूपा भवन्तीति ते जगत्पवित्रप्रपवित्रिण भवन्ति, कामं ते जात्या विप्रा क्षत्रियवैश्यशूद्रा भवन्तु स्त्रियस्तदन्ये किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्कायवनाः खसादय इति श्लोकोक्ता पापजातयो भवन्तु, कर्मतः पतिता पापरूपा वा भवन्तु, सर्वे तपश्चर्यादि विनापि भक्त्यर्थमवाप्तैः पञ्चसंस्कारैः न केवलं शुद्ध्यत्त्यपितु निष्पापाः सन्तो विष्णुरूपा भवन्ति, अचिन्त्यसामर्थ्याद्भगवतस्तद्भक्तेश्च, भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवादिति भगवदुक्तेः। संस्कारयोगात्ते भगवत्समाराधनेऽनर्हताया हेतुभूतानि पापान्यतिलङ्घयन्तीति भावः। तेषां भक्तावभिरुचिरेव महागुणः जात्माद्यपकर्षेऽपि भगवत्समाश्रयणमात्रेण पावनत्वं किमुत जात्याद्युत्कर्षेन भक्तिपौष्कल्ये वा। भगवांस्तु निन्द्यगुणवृत्तजन्मनामपि भजनीयो भवति। स हि स्वभावतः पवित्राणां पवित्रमित्याश्रितदोषविशेषनिर्मोकपरो भवति। जीवस्य दोषोऽविद्याभगवदपराधरागद्वेषादिः,*

-------------------------------**संवित्करः**-------------------------------

**जो भगवान् के दिव्य पञ्चायुधों से अङ्कित वैष्णव हैं, वे विष्णुस्वरूप ही हैं। फिर चाहे वह जन्म से ब्राह्मण क्षत्रिय वैश्य शूद्र स्त्री या निम्नतम जाति के ही क्यों न हों, वैष्णवता के प्रभाव से वे स्वयं तो पावन हैं ही, जगत् में पावनतीर्थादि को भी पवित्र करने वाले हैं।**

---

[1] पा. भे.- भुवि।

..................................................पदपरामर्शः..................................................

भगवानेव तं दोषं समूलमुन्मूलयति, तस्यैव सर्वथा निर्दुष्टत्वात्। पावनः सर्वलोकानां त्वमेव रघुनन्दनेति श्रीरामायणोक्तेः यथा भगवान् मीन वराहकच्छपादिरूपेणापि पावनत्वं नोज्झति तथैवेमे विष्णुयोगात्परमपावना इति जन्मादिविचारेण न हेयाः। वैष्णवत्वादिमे विष्णुरूपा अतश्चेमे जगत्पवित्रप्रपवित्रिणः, गङ्गादितीर्थादेर्जगत्पवित्रकरत्वं, तादृशतीर्थान्यपीमे पवित्रयन्ति, तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृतेत्युक्तेः। उक्तं हि वैष्णवलक्षणे-

ये कण्ठलग्नतुलसीनलिनाक्षमालाः
ये वा ललाटपटले लसदूर्ध्वपुण्ड्राः।
ये बाहुमूलपरिचिरिनितशंखचक्राः
ते वैष्णवा भुवनमाशु पवित्रयन्ति।।

यद्यपि सर्वत्र वर्ण्यमानं सर्वविधं पावनत्वं भगवन्मूलं तथापि भक्तियोगात्तेषामतिशयपावनत्वं बोधयितुं भगवान् स्वशरीरभूतमखिलब्रह्माण्डं तत्पादरजोभिः पावयितुं तादृशं परमभागवतमनुधावति- यथोक्तं स्वयन्तेन- अनुव्रजाम्यहं नित्यं पूयेयेत्यऽङ्घ्रिरेणुभिः- नारायणकेशवादिनाममन्त्रैः श्रीकमला-विष्णुपत्न्यादिनाममन्त्रैश्च भगवत्पादाकृत्या तत्पादरजोभिर्द्वादशाङ्गेषूर्ध्वपुण्ड्रधारणात् तुलसीसमलङ्कृतग्रीवा दिव्यभगवदायुधाङ्कितबाहुमूला भगवद्गुणावलिश्रवण-कथनानुरक्तश्रवणवचना नामोच्चारणपवित्रिताननाः सर्वं जगदिदं भगवदात्मना भगवद्भावेन विलोकयन्तो भगवद्भागवतपरिचरणविनियुक्तेन्द्रिया हृदयेन भगवन्तं भावयन्तो वैष्णवा नूनं विष्णुरूपा एवेति सर्वं जगत्पुनाना विचरन्तीति भावः। वस्तुतस्तु विष्णो रूपाणीति विग्रहे षष्ठीतत्पुरुषे परवल्लिङ्गतया विष्णुरूपा इति न स्यादिति मुद्रामालातिलकादिभिर्विष्णो रूपमिव रूपं येषामित्येवंविधविग्रहादिना समासेन तदत्यन्ताल्पांशसाम्यावाप्तेरेतावत्पावनत्वादि किमुत पूर्णं सारूप्यं बिभ्राणानां भगवन्नित्यधामश्रीसाकेतवर्तिनां तत्पार्षदानामिति कैमुत्यं द्योत्यते। अतोऽद्यापि सम्प्रदाये वेषेण भगवानिति वेषभगवानित्यादरातिशयो दृश्यते।

**ते सर्वतीर्थाश्रयभूतदेहा देशे महाभागवता वसन्ति।**
**यस्मिन् स तद्दर्शन[1]संस्थितिभ्यां सूते सुपुण्यं निखिलाघशून्यम्[2]॥164॥**

**पदपरामर्शः**

*पञ्चसंस्कारसंस्कृतवैष्णवानां जन्मजात्यनादरेण भगवद्रूपापत्त्या साक्षाज्जगत्पावनत्वं निरूप्य तेनातृप्यन्निव परम्परयापि तदधिष्ठितदेशं पापहारित्वाद्युक्त्या स्तौति-* **त इत्यादिना।** *यस्मिन् देशे सर्वतीर्थाश्रयभूतदेहा महाभागवता वसन्ति, स तद्दर्शनसंस्थितिभ्यां निखिलाघशून्यं सुपुण्यं सूत इति विवक्षातः पदक्रमः। त इत्यनेनोक्तपरामर्शाद्ये वैष्णवास्त एव यथाक्रमं प्रीतिपरिपाकान्महाभागवता भवन्तीति गम्यते। महाभागवतत्वन्तु भागवतैकादशस्कन्धे निमियोगीश्वरसंवादे हरिप्रवचने भूम्ना विमृष्टम्। तद्यथा-*

*सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।*
*भूतानि भगवत्यात्मन्नेष भागवतोत्तमः॥*
*संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः।*
*वासुदेवैकनिलयः स वै भागवतोत्तमः॥*
*विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः।*
*प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः॥*

*यः स्वयं मुक्तये विष्णुदीक्षया निरतिशयानन्दं भगवन्तं भजति स भागवतो भवति, यस्य सम्पर्केण प्रेरणयोपदेशेनान्येऽपि भगवदभिमुखं व्रजन्ति ते परमदयालवो लोकहितार्थमेव जीवन्तो महाभागवता भवन्ति, न हि देहगेहाद्यभिमानवतां महाभागवतत्वं सम्भवति। इदमेव हि वैष्णवत्वपरिपाकरूपं भगवत्परत्वम्। यथोक्तं स्वयं भगवता-*

*तत्रापि कोटिशतजन्मसु वैष्णवत्वं*

**संवित्करः**

**पावनतीर्थों के आश्रयभूत परमपावन भगवान् जिनमें निवास करते हैं अथात् जो भगवद्विग्रहरूप ही हैं, ऐसे महाभागवत परमवैष्णव जहाँ निवास करते हैं, उस स्थान के दर्शन या वहाँ निवास करने से मनुष्य निष्पाप होकर परम पुण्यफल को प्राप्त करता है।**

---

[1] पा. भे.- यत्रैव तद्दर्शनतत्।
[2] पा. भे.- जातः सुपुण्यो निखिलाघशून्यः।

.........................................पदपरामर्शः.........................................

तत्रापि कोटिशतजन्मसु मत्परत्वम्।।

तेष्वास्ते ह्यघभिद्धरिरित्युक्तेर्गङ्गादेः सर्वतीर्थस्य तत्तीर्थास्पदपादोदकत्वेन भगवानेव सर्वतीर्थाश्रयभूतः, स एव येषां देहे वसति, ते सर्वतीर्थाश्रयभूतदेहाः। तन्निवासदेशोऽपि तीर्थवत्पावनमिति तद्देशदर्शकानां तत्र स्थायिनां च पापनिवृत्त्या सुपुण्यं जनयति। तादृशमहाभागवतस्थित्या तद्देशस्य दोषनाशेनान्यपावनकरत्वन्तु स्वयं भगवानेवाह–

यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः।
साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः।।

तद्दर्शनसंस्थितिभ्यामिति हेतौ तृतीया। पूर्वं कदाचित्समागत्य पश्यति, तद्दर्शने सञ्जातपुण्येन पापनाशात्तदनु कथाश्रवणादिलिप्सया तत्र स्थातुं निश्चिनोतीति बुद्ध्यारूढस्य क्रमस्य विवक्षया पूर्वनिपातशास्त्रस्यानित्यत्वाद्वा संस्थितिशब्दस्य घित्वेऽपि न पूर्वप्रयोगः। तद्दर्शनपूर्वकसंस्थितेः फलमाह– **निखिलाघशून्यं सुपुण्यं सूत** इति। तदधिष्ठितदेशदर्शनस्येयत्फलं तर्हि साक्षात्तद्दर्शनादेः कियत्फलं स्यादिति कैमुत्येन सूचयति। यथा तमोरहितः प्रकाश इति प्रयोगे विशेषणमयुक्तं प्रतिभाति तथैव निखिलाघशून्यं सुपुण्यमित्यत्र, तथाप्यत्र सुस्थिरं पुण्यं सुपुण्यमक्षय्यमिति यावत्। अक्षय्यमपि पुण्यं क्वचिद्यज्ञे पश्वालम्भनवत् अनर्थहेतुना पापेन मिश्रितं भवति। तादृशं पापमिश्रं सुपुण्यं व्यावर्तयितुं निखिलाघशून्यमिति विशेषणम्। तादृशवैष्णवाधिष्ठित-देशदर्शनादि पापैरनाविद्धमक्षय्यं पुण्यं सूते जनयतीति भावः।

**तदर्चनात्तत्पदनीरपानात्तत्सङ्गतेस्तत्प्रणतेर्विधानात्।**
**नृणां हि तच्छिष्टसुभोजनाच्च[1] स्यात्कोटिजन्मार्जितपापनाशः।।165।।**

.........................................पदपरामर्शः.........................................

यथा भगवान् ध्यातोऽर्चितः स्तुतः प्रणत इत्यादिसेवाभावभेदेनानेकधा प्रीत्या विषयीकृतो भक्तानां सर्वविधामङ्गलमुच्छिनत्ति तथैव तदेकपरो वैष्णवोऽपि तद्भक्त्या सङ्क्रान्ततुल्यप्रभावो भगवत्प्राप्तिविरोधिपापनिबर्हणेनासन्नलोकहिताय कल्पत इत्याह–

-----------------------------संवित्करः-----------------------------

ऐसे पञ्चसंस्कार से संस्कृत महाभागवतों के अर्चन, पादतीर्थपान, सत्सङ्ग, वन्दन तथा उनके प्रसादग्रहणानन्तर प्रसाद ग्रहण से कोटि जन्मों के पापों का नाश होता है।

---

[1] पा. भे.– तद्भोजनानन्तरभोजनाच्च।

..........................................................पदपरामर्शः..........................................................

**तदर्चनादित्यादिना।** नृणान्तदर्चनादिभ्यः कोटिजन्मार्जितपापनाशः स्यादिति मुख्याशः। सत्सङ्गतिः कथय किन्न करोति पुंसामिति तदर्चनादेः सङ्गतिमूलत्वन्तथापि प्राप्तावर्घ्यासनपादप्रक्षालनादिना तदर्चनं ततः प्रक्षलितपदयोर्नीरस्य पानं तदनु सुखोपविष्टस्य मुखात्सदुपदेशश्रवणरूपा सङ्गतिः सर्वान्ते प्रणतेर्विधानात् तत्पूजावसाने तदनुज्ञया तद्भुक्तस्य भोजनमिति क्रमः। अत्र भागवतसपर्याविधौ पञ्चानां क्रियाणां समुल्लेखः पञ्चोपचारैर्देवपूजनं स्मारयति। तत्पदस्य पञ्चस्वप्यावृत्त्यैकाश्रयेण विविधानां पूजाङ्गानां निर्वाहद्योतनात्सुखसम्पाद्यत्वं सूचितम्। तदर्चनात्त-त्पदनीरपानात्तच्छिष्टभोजनादिति त्रिषु हेतौ पञ्चमी, तत्सङ्गतेर्विधानात्तत्प्रणतेर्विधानादिति षष्ठ्यन्तयोः पञ्चम्यन्तेनान्वयः। यद्वा तत्सङ्गतेस्तत्प्रणतेरित्यनयोरपि हेतुपञ्चमी। विधानादित्यत्र विधिर्विधानम्, तदनुसृत्येति ल्यब्लोपे कर्मण्यधिकरण इति कर्मणि पञ्चमी। सविधीत्यर्थः। उच्छिष्टभोजिनो दासा इत्युक्तेर्वैष्णवानां भगवत्प्रसादभोजित्वेन पुनस्तच्छिष्टस्योभयप्रसादतया तन्माहात्म्यातिशयं सुपदं द्योतयति। नैवोच्छिष्टं कदाचनेति निषेधादुच्छिष्टभोजिनश्श्वान इति निन्दनाच्च कथमत्रैवमुक्तिरिति चेन्निषेधो विहितेतरपरस्तेन प्राणाहुत्यनन्तरं भोजनस्य समाप्त्या गृहे भाजनावशिष्टभोजनादित्यर्थेन न दोषः। अतोऽत्र तच्छिष्टेत्युपात्तं न तु तद्भुक्तशिष्टेति। अनुमोदनपूर्वक-वैष्णवोच्छिष्टग्रहणे पापनाशाद् भागवतधर्मेऽभिरुचिरिति भागवतोक्तम्। उच्छिष्ट-लेपाननुमोदितो द्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्विषः, एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायते। वैष्णवपूजायां श्रद्धामात्रस्यैवापेक्षा नान्येति सामान्यस्य पात्रतामाह- **नृणामिति।** तादृशपूजनादिना तावत्पापनाशे प्राप्तामाशङ्कां स्यात्पदलभ्यां निरस्यति हिना। हिर्निश्चये, निश्चयेन पापनाशो भवतीत्यर्थः। यथोक्तं भागवते-

येषां संस्मरणात्पुंसां सद्यः शुद्ध्यन्ति वै गृहाः।
किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः।।
सांनिध्यात्ते महायोगिन् पातकानि महान्त्यपि।
सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः।।

**कार्पासकैः सप्तभिरद्भुतैर्गुणैः सुनिर्मितं तत्कटिसूत्रमुत्तमम्।**
**काषायकं वस्त्रयुगं च धारयेत्तथोर्ध्वपुण्ड्रादिकमेव वैष्णवः।।166।।**

**.........................................पदपरामर्शः.........................................**

*गृहस्थविरक्तसाधारणवैष्णवलक्षणमुक्त्वा सम्प्रत्येकेन विरक्तवैष्णवस्य विशेषमाह- **कार्पासकैरित्यादिना**। वैष्णवः कटिसूत्रं वस्त्रयुगमूर्ध्वपुण्ड्रादिकञ्च धारयेत्। धर्तव्यकटिसूत्रस्य निर्माणविधिमुपादानवस्तुनिर्देशेनाह- उत्तमत्वे हेतुः सुनिर्मितम्, तत्र हेतुः सप्तभिरद्भुतैर्गुणैरिति तत्रापि गुणानवधारयति- **कार्पासकैरिति।** यदर्थं कटिसूत्रं तदवलम्ब्यं कौपीनं तदाच्छादकमुत्तरीयञ्चाह- **वस्त्रयुगमिति।** कषायेण रक्तं काषायं तदेव काषायकम्। कषायरञ्जितं तत्स्यात्। ऊर्ध्वपुण्ड्रादिकमेव धारयेदित्यत्रैवकारेण त्रिपुण्ड्रादिकं लीलयापि न धारयेदिति वचनं परामृश्यते। आदिपदेन विरक्तस्वरूपानुगुणं कमण्डल्वादिकं परिगृहीतं भवतीति सङ्क्षेपः।*

**-----------------------------संवित्करः-----------------------------**

विरक्तवैष्णव कपास के सुन्दर सात धागों से बँटे हुए कटिसूत्र (आड़वन), कौपीन तथा दो वस्त्र (अँचला तथा गमछा) धारण करे। ऊर्ध्वपुण्ड्रादिधारण तो गृहस्थ एवं विरक्त दोनों प्रकार के वैष्णवों के लिये समान ही है।

**कार्यो महात्मभिर्नित्य[1] कालक्षेपो मुमुक्षुभिः।**
**परमात्मपरैरित्थं वैष्णवैरिति वर्ण्यते।।167।।**

**.........................................पदपरामर्शः.........................................**

*तेषां वैष्णवानां कालक्षेपः कथं कार्य इत्यष्टमप्रश्ने कथमित्यनेन तत्स्वरूप-तदुपादानतद्विधानतदवधितत्प्रयोजकप्रयोज्यादिप्रकारकजिज्ञासा ज्ञायते, प्रकारवचने थमुविधानात्। तमविकलं समाधित्सुर्भवान् श्रीरामानन्दाचार्यः पूर्वं कालक्षेपविषयक-प्रश्नौचित्यं संस्तौति- **कार्य इत्यादिना।** वैष्णवैर्नित्यं कालक्षेपः कार्य इति वर्ण्यते। हेतुद्योतकेनेतिपदेन विषयस्य वैष्णवेतिकर्तव्यताज्ञानेन नित्यसम्बद्धतयाऽप्रसक्तिदोष-*

**-----------------------------संवित्करः-----------------------------**

मोक्ष की कामनावाले वैष्णवजनों के कालक्षेप (समययापन) की विधि बताने जा रहा हूँ। उनके कालक्षेप की विधि इस प्रकार है।

---

[1] पा. भे.- अथ कार्यः सदा सद्भिः।

पदपरामर्शः

*निरसनेन विवेच्यता सूच्यते। कालस्तु स्वयमेव क्षिप्यत तत्र वैष्णवानां कीदृशो योगविशेषस्तस्य तु पुरुषप्रयत्ननिरपेक्षतया सिद्धेः? तत्रोच्यते- अत्र* ***कालक्षेपशब्दः*** *आचार्यमुखेन भाष्याद्यर्थविचारे तत्राशक्तानां भक्तिविषयकार्षग्रन्थस्वाध्याये च रूढः इति विधिविशेषः। अतो नित्यं कार्य इत्यत्र विधिबोधको ण्यत्प्रयुक्तः स च पुरुषप्रयत्नसाध्यतामाह। तत्रापि नित्यमित्यनेन ब्रह्मयज्ञवदस्य नित्यविधित्वं लभ्यते। यथाचार्यमुखान्मन्त्रमन्त्रार्थादिश्रवणनियमस्तथैव निष्कम्पभक्तिनिष्ठासिद्धये वैष्णवाचार-परिज्ञानाय यथार्थतो वैष्णवसिद्धान्तावगतये च स्वाचार्यकृतभाष्याद्युपादायाचार्यसन्निधौ कालक्षेपेण शास्त्रप्राप्तिः परम्परालब्धा। यद्वैकल्ये सम्प्रदायस्य विद्यास्रोतांस्यनुदिनं क्षीयन्ते, दर्शनं तत्सिद्धान्तश्च क्रमेण यथावस्थिताकारेणासुरक्षितं सद्दुरधिगम्यतां याति, अत एवाद्यत्वे प्रवचनादौ वैष्णवा अप्यपदार्थमाहुस्तेषु सिद्धान्तज्ञानविरहितेषु करुणया सुहृद्भूत्वाचार्यः कालक्षेपविधिमाह। अत्र शास्त्रादेशोऽपि- स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमिति, भगवान् पार्थसारथिरप्येतदर्थमाह-मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्, कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति चेति। नीतिरप्येतदुन्नयति-काव्यशास्त्रविनोदेन कालो गच्छति धीमतामिति। एवमपि वैष्णवैः कया वृत्त्या वर्तितव्यमिति कालक्षेपोपादानजिज्ञासा साम्प्रतमेव, व्यर्थकालक्षेपस्यायुक्तत्वात्। यथोक्तम्-*

*यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते।*
*सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया।।*
*एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते।*
*दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्।।*

*अभीष्टापि तैलधारावदविच्छिन्नभगवत्स्मृतिस्तावन्नोदेति यावन्मनसोऽत्यन्तशुद्धिर्भगवति प्रेष्ठताबुद्धिश्च न जायेते अतः सञ्जातमोक्षाभिलाषाणामपि भक्त्योघवर्धनानुगुण-भक्त्युद्बोधकशास्त्रचिन्तने बुद्धिव्यापारः सर्वथा युक्त एव, अन्यथा विषयान्तरचिन्तनं स्यात्। अवशिष्टरोगांशानां जनानां भेषजपरित्यागस्येवातितरामयुक्तत्वात्। अतश्शुद्ध्यन्ति दानैः सन्तुष्ट्य द्रव्याण्यात्मात्मविद्ययेति भागवतोक्त्यात्मविद्ययात्मशुद्धेर्निरूपणाद्विषयतः फलतश्च विद्यान्तरेभ्य उत्कृष्टाया अध्यात्मविद्याया स्वाचार्यभाष्याद्याधारेण प्राप्तये*

.................................................पदपरामर्शः.................................................

कालक्षेपो विहितः। यथा वैराग्यं विना ज्ञानं दुर्बलं भवति तथा श्रुतं शास्त्रश्रवणं विना भक्तिर्न निष्कम्पतामश्नुते। यथोक्तं भागवते-

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय।
ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽङ्घ्रिसरोजपीठम्।।

इत्थं कालक्षेपविषयकजिज्ञासायास्तदनुसारं समाधानोक्तेश्चोपयुक्तता। वैष्णवैर्नित्यं कालक्षेपः कार्य इत्यत्र वैष्णवान् त्रिभिर्विशेषणैराह- **महात्मभिर्मुमुक्षुभिः परमात्मपरैरिति।** कर्मानुष्ठानं विना न सत्त्वशुद्धिर्न तां विना विषयानभिषङ्गम-भावास्तदनु बुद्धिप्रसादेन मुमुक्षोदय इति महात्मभिरित्यनेनोक्तम् महान् तत्त्वविचारोप-युक्तवैशद्यमापन्न आत्मा बुद्धिर्येषान्तैरित्यनेन बुद्धिनैर्मल्यमुच्यते। ततो बुद्धिशुद्ध्या जातवैराग्याणां मुमुक्षुत्वमुच्यते, तदनु जातवैराग्याणां युक्तायुक्तत्वनिश्चयरूप-विवेकोदयाद्यथार्थमुद्देश्यबोधः, तदाह- **परात्मपरैरिति।** परमात्मा भगवान् राम एव परो मुख्यो येषामिति लक्ष्यसिद्धिरुच्यते। भगवानेव मे मुक्तिं दास्यतीति निश्चयात्। एतेन प्राकृतमध्यमोत्तमैस्त्रिविधैरपि वैष्णवैर्नित्यं सदा कालक्षेपः कार्य इति तदाचार्यतया तद्धितैषुणा मयोपदिश्यत इत्याशयः, आचार्यस्य हानोपादानविषयबोधनौचित्यात्। यथा कथं कार्य इति प्रश्नस्तथैवेत्थं कार्य इत्युपक्रम्य समाधीयते।

**प्रातर्मध्याह्नसायं कृतशुचिकृतिभिः राममभ्यर्च्य सम्यक्,**
**श्रीमद्रामायणेन प्रतिदिनमखिलैर्भारतेन प्रपन्नैः।**
**शक्तैरानन्दभाष्यैरथ च शुभतमाचार्यदिव्यप्रबन्धैः**
**कालक्षेपो विधेयः सुविजितकरणैः स्वाकृतेर्यावदन्तम्।।168।।**[1]

.................................................पदपरामर्शः.................................................

वर्ण्यत इत्युक्त्वा तदविच्छेदेन प्रतिज्ञातं कालक्षेपविधिं तत्पूर्ववृत्तस्य तच्चरमावधेश्च

-----------------------------संवित्करः-----------------------------

अब मैं जितेन्द्रिय प्रपन्न वैष्णव को प्रतिदिन प्रातः मध्याह्न एवं सायंकाल स्नानादि से निवृत्त होकर श्रीसीतारामजी का पूजन करके श्रीमद्रामायण, महाभारत, भागवतादि सच्छास्त्रों तथा आनन्दभाष्यादि वैष्णवग्रन्थों के स्वाध्याय से अपने समय का यापन (कालक्षेप) करना चाहिए।

---

[1] किसी-किसी प्रति में यह श्लोकान्तर भी मिलता है-

त्रिकालसन्ध्यादि विधाय शक्तैः श्रीरामचन्द्रं च समर्च्य नित्यम्।
भाष्येण रामायणतो हि कालक्षेपो विधेयोऽपि च भारतेन।।

**पदपरामर्शः**

निर्देशेन प्रपन्नमात्रैकविधेयतानिश्चयेन च भगवानवबोधयति- **प्रातर्मध्याह्न-सायमित्यादिना।** अखिलैः प्रपन्नैः स्वाकृतेरन्तं यावत्प्रतिदिनं राममभ्यर्च्य श्रीमद्रामायणादिभिः कालक्षेपो विधेय इति मुख्यांशः। तत्र स्वरूपयोग्यतां सूचयितुं शक्तैरिति, सुविजितकरणैरिति प्रपन्नविशेषणाभ्यां यथाक्रमं शास्त्रग्रहणे मनोनिग्रहणे च सामर्थ्यमुक्तम्। प्रपन्नैरित्यनेन वैष्णवसुलभाः शास्त्रग्रहणानुगुणविनयसमर्पणादिगुणाः सूचिताः, अखिलैरित्यनेन प्रपन्नानामविशेषेणाधिकारो बोधितः। कालक्षेपारम्भा-त्पूर्वकृत्यमाह- **सम्यग्राममभ्यर्च्येति।** सम्यग् यथाविधि। रामम् आराध्यत्वेन प्राप्यत्वेन निरुपाधिकस्वामित्वेन च सर्वथा सर्वदाभ्यर्चनीयं सर्वेश्वरमित्यर्थः। प्रतिदिनमन्वहम्। प्रातर्मध्याह्ने सायञ्चेति त्रिसन्ध्यम्। शरीरादेश्शुचित्वाय याः कृतयश्शुचिकृतयः, कृताः सम्पादिताः शुचिकृतयो यैस्तैरिति, तच्छौचं विना भगवदर्चनानर्हत्वात्। सम्यगर्चितस्य भगवतः समक्षमेव कालक्षेपे न दोषः, प्रत्युत साद्गुण्यकरः। यथोक्तम्-

अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो हरेः।
आगमाध्ययनं कुर्यात्तद्वाक्यार्थविचारणम्।।

कालक्षेपस्य साधनभूतं ग्रन्थविशेषमाह- **श्रीमद्रामायणेन भारतेनेति।** वाच्यवाचकयोश्च तादात्म्यमनुसन्धाय भगवत्यनन्यसाधारणतया दृष्टं श्रीमदितिपदं युक्तं सत्तस्यानन्यलभ्यं पारम्यमाह। सकलश्रुतिसंवेद्यस्वाराध्यश्रीरामचरितमयत्वेनाम्नायस्य ललितावतरणतया चारुतररचनावैचित्र्येण रमणीयतयाभ्यर्हितत्वेन च महाभारताद्यपेक्षया पूर्ववर्तित्वाच्च श्रीमद्रामायणस्य सर्वापेक्षया पूर्वप्रयोगः, तदपेक्षया महाभारतस्यावरत्वं द्योतयितुं तस्य महत्त्वमप्यपहत्याह- **भारतेनेति।** यद्याचार्यैस्तच्छिष्यैश्शक्तै-र्भाष्याशयग्रहणाबोधनयोः समर्थैर्भूयते, तदानन्दभाष्यैश्शुभतमैः प्राचीनाचार्याणां श्रीमद्बोधायनप्रभृतीनां दिव्यप्रबन्धैश्च कालक्षेपो विधेयः। आनन्दभाष्यैरित्यत्र बहुवचनं प्रस्थानत्रयानन्दभाष्यानुरोधेन। अनाप्तैरप्युच्यमानानि शास्त्रवचांसि शुभं सृजन्ति किमुत तथाविधानां दिव्यप्रबन्धा इति तमपा प्रकर्षो बोध्यते। आचार्येति संशयविपर्ययप्रतिक्षेपं, दिव्येति च मन्त्रवदादरणीयतां सूचयितुम्। कालक्षेपोऽयं कियदवधिर्विधेयस्तत्राह- **स्वाकृतेर्यावदन्तमिति।** आकृतिर्देहः, स्वदेहस्यावसानं यावत्। यावच्छरीरपातमिति। यावज्जीवमग्निहोत्रं जुहोतीत्यत्र यथाग्निहोत्रस्य यावज्जीवमनुष्ठेयता तथा कालक्षेपस्यापीति भावः। शक्तैरानन्दभाष्यैरिति कथनाद्वैष्णवमताब्जभास्कर-

..........पदपरामर्शः..........

रचनापेक्षयानन्दभाष्यरचनाया प्राग्भावित्वं संसूच्यानन्दभाष्यस्यार्वाचीनतां वदन्तः प्रत्युच्यन्ते।

**स्नानादिकर्माणि विधाय नित्यं[1] ग्रन्थानमून् संश्रृणुयादशक्तः।**
**श्रीरामसन्नामसुकीर्तनं च द्वयानुसन्धानमथो विदध्यात्॥169॥**

..........पदपरामर्शः..........

यथाचार्यसन्निधौ साम्प्रदायिकभाष्यादिश्रवणे कालक्षेपस्य नियतत्वेऽभ्यासेऽप्यसमर्थोऽसि, अथैतदप्यशक्तोऽसीति गीताया द्वादशाध्यायोक्तरीत्या सामर्थ्यतारतम्याद् गुरुलघुसरण्योपायपरम्परानिर्देशस्तथैवात्रोपायान्तरमाह- तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेदित्यनुसन्धायाह **स्नानादिकर्माणीति।** वाक्यद्वयमध्यवर्तितयाऽशक्तपदं यथासम्भवमुभयत्रान्वयि। यदि कश्चिद् श्रीरामायणभाष्याद्याशयावबोधने प्रभुश्चेन्नूनं वैष्णवेषु तदर्थव्याख्यानेन, यदि तत्राशक्तश्चेत्स्ननादिकर्माणि स्नानादिकं विधाय समाप्यामून् पूर्वोक्तान् श्रीमद्रामायणभाष्यादीन् ग्रन्थान् संशृणुयात् श्रद्धयाकर्णयेत्, श्रवणस्य वक्तृसापेक्षतयानन्दभाष्यादेरवगतौ दर्शनशास्त्रीयसंस्कारापेक्षणाच्च अशक्तः श्रीरामसन्नामसुकीर्तनं द्वयानुसन्धानं विदध्यात्। श्रीराम रामेति भगवन्नामान्तरेभ्योऽप्युत्तमत्वात्सुनाम्नः सुकीर्तनं सुस्वरं सश्रद्धं कीर्तनं द्वयमन्त्रस्यार्थानुसन्धानं च कुर्यात्। अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः, त्वमेवोपायभूतो मे प्रार्थनामतिरित्याकारेण स्वदोषानुसन्धानं कुर्वन्नेव भगवन्नामसुकीर्तनं कुर्यात्, तावतापि कालक्षेपविधिपूर्तेः, भगवन्नामकीर्तनस्य वेदानुवचनवत्कल्याणकरत्वान्मन्त्रमन्त्रार्थयोस्तादात्म्याच्च ब्रह्मानूचुर्नाम गृणन्ति ये त इति भागवतोक्तेश्च।

----------संवित्करः----------

इसमें असमर्थ होने पर प्रतिदिन स्नानादि कर्म के बाद पवित्र होकर पूर्वोक्त सद्ग्रन्थों का श्रवण करना चाहिए। इसमें भी असमर्थ होने पर श्रीसीतारामजी का नामकीर्तन करना चाहिए। यदि ऐसा भी न हो सके तो श्रीरामजी के द्वयमन्त्र का अनुसन्धान करते रहना चाहिये।

---

[1] पा. भे.- स्याच्चेदशक्तःशृणुयात्कुतश्चित्।

**दिव्येषु देशेषु सतां प्रसङ्गं तदीयकैङ्कर्यपरायणः सन्।**
**यावच्छरीरान्तमहर्दिवं तत्कथामुदारां शृणुयाद्भवघ्नीम्॥170॥**

**पदपरामर्शः**

*यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि मामिति भगवदुक्तिमनुसन्धाय सत्सेवातत्कथयोरभिरुचिं दधानाः स्युस्तदा श्रीअयोध्याचित्रकूटादिषु भौमेष्वप्यप्राकृततया दिव्यदेशेषु सतां विद्यमानानां सतां तत्त्वज्ञवैष्णवानां प्रसङ्गं विदध्यादिति पूर्वश्लोकानुवृत्तक्रियाया अनुसन्धानात्। सत्सङ्गस्यापि भक्त्यङ्गत्वात्। तत्रापि प्रकृष्टात्सङ्गादवश्यं भगवत्कथालाभो भवतीति भावः। यद्वा सतां प्रसङ्गं शृणुयादित्यत्र क्रियान्वयः, भक्तजनचरितश्रवणस्यापि कल्याणकरत्वात्; भवज्जनकथाश्रवणेन वा स्यादिति श्रीध्रुवोक्तेः। साधुजनकैङ्कर्यपरायणः सन् तत्सेवनात्तन्मुखोद्गीतां भवघ्नीं संसारोच्छेदनीमुदारां चतुर्वर्गेण सह भगवत्प्रीतिपर्यन्तस्य प्रदायित्वेन वदान्यां भगवद्भागवतकथां शृणुयात्। साधुसङ्गो भगवद्रतौ पर्यवस्यति, तया च कृतार्थता। यथोक्तम्-*

*सतां प्रसङ्गान्मम वीर्यसंविदो*
*भवन्ति हृत्कर्णरसायनाः कथाः।*
*तज्जोषणादाश्वपवर्गवर्त्मनि*
*श्रद्धा रतिर्भक्तिरनुक्रमिष्यति॥*

*कथाश्रवणकालं नियमयति-* ***यावच्छरीरान्तमहर्दिवम्।*** *प्रतिदिनं देहपातं यावदाकर्णयेदित्यर्थः। लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवयेति भगवदुक्तेः।*

**संवित्करः**

वैष्णवजन श्रीअयोध्या चित्रकूटादि दिव्यदेशों में भगवद्भागवतसेवा एवं सत्संगादि का लाभ प्राप्त करते हुए मरणपर्यन्त प्रतिदिन उदार एवं संसारभयनाशिनी भगवत्कथा का श्रवण करें।

**तत्राप्यशक्तास्तु कुटीरमात्रं विधाय कुर्युस्त्वथ राघवाद्रौ।**
**अन्यत्र वासं च गुरूपदिष्टान्मन्त्राञ्जपन्तो ह्यभिमानशून्याः[1]॥171॥**

**पदपरामर्शः**

*यो यद्यार्षग्रन्थश्रवणपरायणादौ साधुजनसेवायां वा न प्रभवेत्तदा विविक्तसेवित्वेनाभिमानराहित्येन च मन्त्रैकशरणः स्यादित्युपायान्तरमाह-* ***तत्रापीति।***

**संवित्करः**

उसमें भी असमर्थ रहने पर चित्रकूट या अन्यत्र पुण्यप्रदेशों में निवास के लिए कुटीर बनाकर वहीं अभिमानरहित होकर गुरूपदिष्ट मन्त्र का जप करना चाहिए।

[1] पा. भे.- ममकार शून्याः।

..................पदपरामर्श:..................

राघवाद्रौ चित्रकूटे, अन्यत्र जनकपुरधामादिषु, भगवद्व्यतिरिक्तविषये सदोषतानुचिन्तनेन विविक्तजनसेवित्वाभिप्रायेण, तत्राप्यहेरिव गणाद्भीत इति न्यायेन कुटीरमात्रं विधाय, ह्रस्वकुटीं निर्माय, ह्रस्वा कुटी कुटीर: कुटीशमीशुण्डाभ्यो र: इति ह्रस्वार्थे र:। भजनसाधनभूतदेहरक्षामात्रप्रयोजनमिति भाव:, न तु मठादिकम्। मात्रमत्रावधारणे। अभिमानस्यानन्यापेक्षोऽहमित्याकारकस्योदयसम्भवनायान्तद्राहित्यमपेक्षमाण आह- **ह्यभिमानशून्या** इति। मन्त्रानुष्ठायित्वादिमूलो गर्व एवात्राभिमान:, स्वबलानुसन्धानाद्धि सकलाज्ञानहेतो: पूज्यजनावमानप्रतिस्पर्धित्वादिकं यज्जायते, तादृशाभिमानस्य सकलार्थनाशकत्वाद्धेयतोच्यते। यथोक्तम्-

यद्यहङ्कारमाश्रित्य यज्ञदानतप: क्रिया:।
कुर्वस्तत्फलमाप्नोति पुनरावर्तनं तु तत्।।

अतो नारदभक्तिसूत्रे ईश्वरस्याप्यभिमानद्वेषित्वाद्दैन्यप्रियत्वाच्चेत्युक्तम्। गुरूपदिष्टान् मन्त्राञ्जपन्तो वासं कुर्युरित्यत्र गुरूपदिष्टानिति परम्पराप्राप्ततया तेषामेवोष्टसाधकत्वात्। मन्त्रान् श्रीरामतारकमन्त्रराजादीन्, द्वयादिसहिताभिप्रायेण बहुवचनम्। ऐकान्तिकेन मन्त्रानुष्ठानेनापि कालक्षेपविधे: सम्पूर्तिर्भवति, मन्त्रजपस्य स्वाध्यायरूपत्वादिति भाव:।

**भक्त्यादियुक्तस्य तथाऽनहङ्कृतेर्महात्मनस्तस्य निदेशपालनम्।**
**उपायमेनं चरमं निरन्तरं सु[1]वैष्णवोऽयं विदधात्वतन्द्रित:[2]।।172।।**

..................पदपरामर्श:..................

महत्सेवां द्वारमाहुविमुक्तोरित्युक्तेर्वयन्तु हरिदासानां पादत्राणावलम्बका इति भावनया विधीयमानाया भागवतशेषवृत्तेश्चरमोपायत्वेन तदाधारेणापि कालक्षेपस्य करणीयतामाह- **भक्त्यादियुक्तस्येति**। अयमुपायान्तरे निष्ठावान् सुवैष्णव: विष्णुदेवताको वैष्णवो भवत्ययन्तु विष्णुदेवताकदेवताक इति तदुपाश्रयाश्रयत्वात्सुवैष्णव:, द्विर्बद्धं सुबद्धं भवतीत्युक्ते:। निदर्शनञ्चात्र श्रीभरताधीनशत्रुघ्नचरितम्। भागवतशेषत्वस्य चरमोपायतां

------------------संवित्कर:------------------

ऐसे सद्गुण-सम्पन्न वैष्णव को आचार्योपदिष्ट उपदेशों का पालन सर्वथा अभिमान एवं आलस्य से रहित होकर करना चाहिए।

---

[1] पा. भे.- श्री।

[2] पा. भे.- विदधात्वहर्निशम्।

पदपरामर्शः

मन्वानोऽतन्द्रितः प्रमादालस्यभ्रमादिरहितोऽयमेव मुदुद्धारस्य चरम उपाय इति धिया तस्य महात्मनो भागवतस्य निदेशपालनं तदधीनतया तदाज्ञानुसरणं विदधातु कुर्यादिति। तस्येति पूर्वोक्तं निरभिमानं विविक्तसेविनं मन्त्रजापकं परामृशति- तस्य तादृशस्य वा। यश्च भक्त्यादियुक्तो भक्तिज्ञानवैराग्यादिविशिष्टः सन्नप्यनहङ्कृतिः स नूनं महात्मा, भगवानेव सर्वं कारयतीति तस्य विशदात्मबोधसम्पत्तेः।

**तदर्थपुष्पप्रचयेन सन्ततं तथैव तन्मन्दिरमार्जनादिना।**
**तदीयनामाभ्यसनेन तन्मनाः क्षिपेत्स कालं नितरां गतालसः[1]॥173॥**

पदपरामर्शः

मदर्थमपि कर्मापि कुर्वन् सिद्धिमवाप्स्यसीति भगवदुक्त्या यत्तन्निमित्तकपुष्प-प्रचयादिकमनुतिष्ठेत्तस्यापि कालक्षेपसिद्धिरित्यत आह- **तदर्थपुष्पप्रचयेनेत्यादिना**। यो गतालस आलस्यरहितः सेवासमुत्सुकः तन्मन्दिरमार्जनादिना भगवदालयस्य मार्जनेन पूजनपात्राप्रक्षालनेन यथाधिकारं जलाहरणादिना, भगवत्सपर्यार्थं पुष्पप्रचयेनाभिमत-कुसुमाहरणेन तदीयनामाभ्यसनेनाविच्छिन्ननामोच्चारणेन नितरामत्यन्तं तन्मनाः भगवत्येव मनो यस्य, भगवति निरतिशयप्रीतिमान् सन् कालं क्षिपेदतिवाहयेत्तेन कालक्षेपो विधीयत इति भावः। तन्मना इति मन्मना भवेति भगवदुक्त्यपेक्षाभिप्रायेणोक्तम्।

संवित्करः

वैष्णव को भगवदर्चन के निमित्त पुष्प तुलसी आदि पूजोपकरण का नित्यसंग्रह, देवालय की स्वच्छता एवं पवित्रता आदि का कार्य आलस्यरहित होकर भगवन्नामोच्चारणपूर्वक करना चाहिए।

**तीर्थेषु वासेन सतां महात्मनां[2] समागमेनाथ तदर्चनेन।**
**जिज्ञासया तद्यशसः श्रवेण तच्छ्रावणेन स्मरणेन तस्य॥174॥**

पदपरामर्शः

कालक्षेपः कथं कार्य इत्यपेक्षायां सप्तभिस्तृतीयान्तैः साधनमालामेकेन पद्येन

संवित्करः

वैष्णवों के लिए तीर्थों में रहना, महात्माओं की संगति एवं उनकी सर्वविधसेवा, भगवद्विषयकजिज्ञासा, भगवद्यशोगाथा का श्रवण, दूसरों को भगवच्चरित सुनाना, तथा भगवद्विषयकचिन्तन ही कालक्षेप का सर्वोत्तम साधन है।

---

[1] पा. भे.- निरालसः।

[2] पा. भे.- महात्मनां च।

....................................................पदपरामर्शः....................................................

सङ्गृह्याह– **तीर्थेषु वासेनेत्यादिना।** अयोध्यामथुराकाश्यादिपुण्यतीर्थेषु वासेन, पुण्यनदीस्नानभगवद्भागवतदर्शनाद्युपलब्धेः, सतां शास्त्रज्ञानां वैष्णवजनानामर्चनेन सविधि पूजनेन, प्रसन्नेषु च तेषु तत्त्वविषयकजिज्ञासया परिप्रश्नेन तदुक्तानां भगवद्यशसां श्रवेण श्रद्धया श्रवणेन, श्रुत्वा च समीपवर्तिषु श्रोतृषु भगवद्गुणश्रावणेन, तदित्थं भगवद्यशः श्रवणकथनादेः सञ्जातेन भगवत्स्मरणेन वैष्णवः कालं क्षिपेदिति पूर्वक्रियान्वयः। अत्र सर्वेषां साधनानां भगवत्स्मरणे पर्यवसानं द्योतितम्। एवं तीर्थानां कालक्षेपानुगुणप्रचुरसामग्रीसम्भृतत्वं सूच्यते।

**रामस्य साङ्गस्य सपार्षदस्य सीतासमेतस्य सहानुजस्य।**
**कैङ्कर्यमीर्ष्यारहितः प्रकुर्वन् क्षिपेत् स्वकालं सततं सुभक्तः[1] ॥175॥**

....................................................पदपरामर्शः....................................................

अन्ते रामकैङ्कर्यस्यैव सर्वथा करणीयतां वदन् प्रकरणमुपसंहरति– **रामस्येति।** सुभक्तः सततमीर्ष्यारहितः रामस्य कैङ्कर्यं प्रकुर्वन् स्वकालं क्षिपेदिति सारः। नानाशास्त्रज्ञानस्य वाग्विलासस्य तीर्थनिषेवनमन्त्रानुष्ठानविविक्तसेवित्वादेः सत्पुरुषसमागमपूजनादेश्च फलं श्रीरामकैङ्कर्यमेव, सर्वेषां श्रेयःसाधनानामात्मैवावधिः, स एवात्मा भगवान् रामस्तत्कैङ्कर्ये स्वाध्यायादेः पर्यवसानम् चरमफलरूपत्वात्तस्य। रामस्य कैङ्कर्यं शेषवृत्तिस्तत्त्वतो भक्तिः, भक्तिं लब्धवतः साधो किमन्यदवशिष्यत इत्युक्तेः। इदमेव स्वस्वरूपावाप्तिर्जीवस्य, मकारार्थो जीवः सकलविधकैङ्कर्यनिपुण इत्युक्तेः। आत्मत्वेन स एव निरुपाधिकसेव्यः। सपरिकरस्य सेव्यत्वमाह– **सीतासमेतस्येति** सश्रीकस्य सहानुजस्य सभ्रातृकस्य सपार्षदस्य पार्षदसमन्वितस्य साङ्गस्य रामरहस्योपनिषत्प्रतिपादिताङ्गविशिष्टस्य भगवतो रामस्येति। एतेनास्मिन् सेवित आचार्यभागवतादिसेवा सुतरामेव सिद्ध्यतीति द्योतयितुं पूर्वार्धे विशेषणचतुष्टयम्। ईर्ष्यारहितस्यैव सुभक्तत्वमित्युक्तम् यद्वा श्रीरामपरत्वेनैव भक्तस्य सुभक्तत्वम्, न

------------------------------संवित्करः------------------------------

वैष्णवभक्त को ईर्ष्यारहित होकर (अंगो एवं पार्षदों के सहित) श्रीसीताजी तथा श्रीभरतादि अनुजों से समन्वित भगवान् श्रीरामजी की सेवा करते हुए अपना समययापन (कालक्षेप) करना चाहिए।

---

[1] पा. भे.– आम्नायवेद्याय विधाय शश्वत्कैङ्कर्यमीर्ष्यारहितः सुचित्तः।

पदपरामर्शः

शास्त्रश्रवणमात्रेण न वा तत्प्रवचनमात्रेण। भक्ते सौष्ठवं भजनीयतायाथार्थ्य-परिज्ञानप्रयुक्तम्, आत्मानमुपासीतेति श्रुतेः। सततं प्रकुर्वन्निति प्रीत्यतिरेकादविच्छेदेनेति लभ्यते। भगवत्कैङ्कर्यनिष्ठस्योपादेयगुणमाह- **ईर्ष्यारहित** इति। परोत्कर्षासहनं परदोषासहिष्णुत्वञ्चेर्ष्याऽक्षमेत्येव। दृश्यते चैतत्कैङ्कर्यमहमेव कुर्यां नान्य इत्याकारकाग्रहोऽर्चकादिषु। अन्योऽपि भगवत्कैङ्कर्यं विधाय मदधिकारं मत्साम्यं वा न प्राप्नुयादितिरूपोऽमर्षः पदं न लभेतेत्यत आह- **ईर्ष्यारहित** इति। भवति स्त्रियः पत्युरन्यप्रियासङ्गदर्शनादिजन्यो मानभेदः, सोऽपीर्ष्यापदेन गृह्यते, यस्मिंश्चोदिते भगवदन्तर्धानं वर्ण्यते रासेऽपि। भगवता करुणया किङ्करत्वेन स्वीकृतस्य जीवस्य अन्यो मदपेक्षया हीनः, एष्वहं गुणवत्त्वात्कैङ्कर्यदानेनानुगृहीत इत्येवंभूता बुद्धिरपि तथैव। वस्तुतस्तु प्रकृतमीर्ष्यापदमसूयादिसकलचित्तदोषाणामुपलक्षणं कैङ्कर्य-वैगुण्यापादकत्वात्। तेन जयविजययोर्भागवतावज्ञानात्कैङ्कर्याच्च्युतिर्वर्ण्यते। देवतान्तरेषु तद्भक्तेषु च हीनत्वायुक्तत्वादिबुद्धिरपि दोषः एव। अत एवोक्तं साङ्गस्येति देवतादेस्तदङ्गत्वात्। प्रारब्धवशात् प्राप्तदुःखैराक्रान्तस्य हितपरे भगवत्यप्यभजन्तमप्ययं सुखयति, भजन्तमपि मां व्यथयतीत्यादिरूपेण दोषमनुसन्दधानस्य न सुभक्ततेति तद्राहित्यं नित्यापेक्षम्।

**तथाविधैस्तैः परमार्थभूतं सुवैष्णवैः प्राप्यमथोच्यते यत्।**
**जितेन्द्रियैरात्मरतैर्बुधाग्र्यैर्महत्तमैः स्वाभिमतार्थदोहम्।।176।।**

पदपरामर्शः

किमाप्यं कथमुरुशुभदमित्याकारकस्य नवमप्रश्नस्यैकवृन्तावलम्बिफलद्वयवत्किमाप्यं कथमुरुशुभदमाप्यमित्यन्वयवैचित्र्यादाप्यस्वरूपतदाप्तिसाधनप्रकारकजिज्ञासाद्वयघटितत्वेन प्रकृतिसिद्धकरुणयाचार्यो भगवान् सपरिकरबोधानुगुणाकारेण प्रबोधयितुं द्वाभ्यामाप्यं त्रिभिस्तत्साधनं द्वाभ्यामूर्ध्वगतिक्रमं द्वाभ्याञ्चान्त आप्तिफलं यथाक्रमं विविच्याभिधत्ते- **तथाविधैरित्यादिना**। अथेति विषयान्तरोपक्रमं सूचयति। यत्तदोर्नित्यसम्बन्धा-द्यत्सुवैष्णवैः प्राप्यं तदुच्यत इति। यद्वोच्यत इत्यस्यावृत्त्या यत्सुवैष्णवैः प्राप्यमुच्यते

संवित्करः

भक्तिप्रपत्तिनिष्ठ सद्वैष्णवों के सकल साधनों का जो अभीष्टपूरक तथा परमार्थरूप प्राप्य है, जिसे जितेन्द्रिय, भगवत्परायण महनीय विद्वज्जनों ने सद्वैष्णवों का परम प्राप्य कहा है। अब मैं उसका स्वरूप बताता हूँ।

पदपरामर्शः

तदेवोच्यत इति। प्राप्यं प्राप्तुं योग्यं प्राप्त्यर्हमित्यर्थः, परमानन्दरूपतया तस्य चेतनमात्रेणेप्स्यमानत्वात्। अंशानामंशिन्येवान्वयस्य युक्तत्वाच्च। प्राप्तुं शक्यमिति वा ब्रह्मविदाप्नोति परमिति श्रुतेस्तदवाप्तिशक्यतायाः प्रतिपादनात्। नहि शास्त्रमशक्यं शास्ति प्रमत्तत्वापत्तेः। अर्हे कृत्यतृचश्चेति ण्यत्। यद्वा प्राप्यत इति प्राप्यम्, कर्मणि ण्यत्। न हि नदीनां ज्ञानेच्छाकृता समुद्रप्राप्तिः, तदेकपर्यवसायित्वेन तत्प्राप्तेः प्रकृतिसिद्धत्वात्, यथा नद्यः स्यन्दमानाः समुद्र इति दृष्टान्तश्रुतेः। तत्र स्वेच्छया निवर्तितुमशक्यत्वद्योतनाय नदीदृष्टान्तः निर्वर्त्यादिष्वीप्सितकर्मसु प्राप्यं कर्म, मन्दिरं गच्छामीत्यत्र मन्दिरस्य यथा क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति फलाश्रयत्वात्तथा। लौकिके धनादौ प्राप्यत्वबुद्धेर्दर्शनान्न केवलमचितोऽपितु चिदपेक्षयापि तस्य श्रेष्ठत्वमाह- **परमार्थभूतमिति।** एतेन प्राप्यप्रापकभावस्याज्ञान-कल्पितत्वं वदन्तः परास्ताः। न रत्नप्रभावमजानतस्तत्र प्राप्यत्वबुद्धिर्जायत इति प्राप्यभूतस्य भगवतः सकलाभीष्टप्रदत्वरूपं गुणविशेषमाह- **स्वाभिमतार्थदोहमिति।** स्वस्य स्वकीयभक्तस्याभिमतार्थमभिलषितार्थं दोग्धि पूरयतीति। आश्रितवाञ्छितार्थ-पूरकमित्यर्थः। एतेन तत्प्राप्तेरमोघफलत्वं दर्शितम्। यदिति प्राथम्येन सिद्धत्वेन च प्रतीयमानमिति बोध्यते। यदिच्छन्तो ब्रह्मचर्यं चरन्तीत्यादिश्रुत्युक्तं सर्वसाधनोद्देश्य-भूतमित्यर्थः। यथोक्तं भट्टवार्तिके- यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यतेति। किंविधैः प्राप्यमिति सप्तभिः पदैराह- जितेन्द्रियैर्जितानीन्द्रियाणि यैर्निगृहीतोभयकरणै-रित्यर्थः। एतेन तादृशैरनुष्ठेयं शास्त्रविहितं कर्म निर्दिष्टम्। बुधेष्वग्र्यैः शास्त्रज्ञेषूत्तमै-रित्यर्थस्तेन यथावस्थितात्मबोधो निर्दिष्टः। आत्मनि भगवति रतं रतिरनुरक्तिर्येषान्तै-रित्यनेन भक्तिरुक्ता। सुवैष्णवैरिति सत्सम्प्रदायानुगुणाचार्यस्य तदुक्तोपासनापद्धतेश्च प्राप्तिः सूचिता। इत्थमाचार्यमुखेन कर्मज्ञानभक्तिसहितैस्तथाविधैश्च प्राप्यमिति भगवत्प्राप्तौ साधनानि कथितानि। यत्प्राप्यप्रशस्त्या तत्साधनपराणामपि यन्महत्तमत्वं किमुत लब्धप्राप्याणामिति कैमुत्यं गम्यते। यद्वा वक्ष्यमाणं यत्प्राप्यं तदेवंविधैरुच्यते, तदुक्तं प्राप्यं मयाप्युच्यत इत्याशयेन प्राप्यस्वरूपमुच्चारयितॄणां प्रामाण्यबोधनाय तानाह- **सुवैष्णवैरित्यादिना।** सुवैष्णवैरित्यनेन तेषां सत्सम्प्रदायाचार्यपरिग्रहन्तत्रापि सुना साभिनिविष्टतया गहनप्रवेशं सूचयति, असकृदनुष्ठितविविधाचारैः गोष्ठीनिष्ठैः सुवैष्णवैर्यत्प्राप्यमुच्यते इत्यनेन तदुच्यमानस्यानाहार्यत्वं बोधयति, न हि प्रवृत्युद्देश्यं

....................................................पदपरामर्शः....................................................

सम्यगनिर्धाय कस्यचित्क्वचिदिष्टताबुद्धिर्जायते, किम्पुनस्तदवाप्तिमार्गाधिरूढानाम् प्रवृतिः, लोकेऽनाहार्यज्ञानस्यैव प्रवर्तकत्वस्य दृष्टत्वात्, प्राप्तेरिच्छाविषयस्यैव प्राप्यत्वाच्च। चपलेन्द्रियाणां चित्तस्थैर्याभावे बुद्धिनिष्कम्पता न, तदभावे प्रत्ययदार्ढ्यं नेति जितेन्द्रियैरिति चित्तसमाधिरुक्तः। आत्मन्येव रतं रतिर्येषामिति विषयान्तरविरक्त्या हानोपादानविवेकेन सारग्राहित्वं प्रकाशितम्। बुधेष्वग्र्यैरधिगतवेदार्थेष्वपि मुख्यैः लक्षणप्रमाणाभ्यां तत्त्वपरीक्षणदक्षैः, महत्तमैरात्मबुद्ध्यादिशौचेन नितान्तं पूतान्तः-करणतया प्रकृत्यैव प्रमाणभूतैः। एतेनाविमृश्यैव विश्वसनीयत्वं लक्ष्यते। तथाविधै-रुत्तरोत्तरगुणपौष्कल्यात्सर्वथा-ऽपरिच्छेद्यमाहात्म्येनासामान्यत्वं द्योतयित्वा भ्रान्त्याद्य-त्यन्तासम्भावना ध्वन्यते। तैरुक्तगुणकैः। पूर्वप्रकरणानुसन्धानेनोक्तरीत्या कालक्षेपपरैर्वा। प्रामाण्यनिश्चयाय येष्वेकसत्त्वमप्यलं किमुत तत्समवाय इति प्रकाशयितुं बहुवचनम्। उक्तविशेषणैर्वक्ष्यमाणायां भगवतो रामस्य प्राप्यतायां महज्जनवक्तृप्रामाण्यं पुरस्कृतम्।

**श्रीमान् दिव्यगुणाब्धिरौपनिषदो हेतुः शरण्यः प्रभुः**
**देवेशो जगतामनादिनिधनो ब्रह्मादिदेवार्चितः।**
**तारार्कानलचन्द्रमोबहुमहःसौदामिनीभासकोऽ-**
**जय्यो वीरसपत्नशस्त्रनिचयैर्जेता च तेषां मुहुः॥177॥**

....................................................पदपरामर्शः....................................................

औपनिषदस्य परमपुरुषस्य श्रीरामस्य नित्यज्ञानबलैश्वर्यादिसूचकैश्शास्त्र-सिद्धैर्विशेषणैः प्राप्यतां निश्चिनोति- **श्रीमानित्यादिना** द्वाभ्याम्। श्रियोऽपीः श्रीः श्रीसीता, पुरुषकारभूतया तयाऽविनाभूतो नित्यं युक्तः श्रीमान् श्रीराम इत्यर्थः, एतेन प्राप्यं मिथुनमेवेति स्वोक्तं स्मारितम्। यद्वा स्वस्वरूपानुरूपसर्वातिशायिज्ञानै-श्वर्यादिसम्पन्न इति।विभूत्यानन्त्यमुक्त्वा तत्कल्याणगुणानन्त्यमाह- **दिव्यगुणाब्धिरिति।** दिव्यानां वेदान्तोदितानां जगत्कारणत्वसर्वज्ञत्वसर्वशक्तिमत्त्वसर्वान्तर्यामित्वादीनाम-प्राकृतानां नित्यनिरतिशयौज्ज्वल्यादिविग्रहगुणानां समाश्रयणोपयुक्तगुणानां सौशील्य-

---------------------------------संवित्करः---------------------------------

जो नित्य ऐश्वर्य एवं श्रीसीता से संयुक्त रहते हैं, दिव्य कल्याण गुणों के सागर हैं, जो उपनिषद्वेद्य तथा जगत्कारण हैं। जो उत्पत्तिविनाशरहित तथा ब्रह्मादिदेवताओं के द्वारा पूजित देवेश्वर हैं। तारे, सूर्य, चन्द्र, अग्नि तथा बिजली जैसे प्रकाशकों के भी प्रकाशक तथा वीर शत्रुओं के शस्त्रसमूहों द्वारा भी अजेय होते हुए उनको जीतने वाले हैं, ऐसे भगवान् श्रीरामजी ही परमप्राप्य हैं।

**पदपरामर्शः**

कारुण्यादीनामब्धिः समुद्रो नित्याश्रयभूत आकर इत्यर्थः। तादृशस्य तस्य श्रुतिप्रतिपन्नत्वमाह– **औपनिषद** इति। उपनिषदा श्रुत्या प्रमुखज्ञातव्यत्वेन प्रतिपाद्यत इत्यौपनिषदः, शेष इत्यण्। उपनिषत्प्रमाणकः, तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिना, कारणवाक्येषु च बहुधा पुरुषादिशब्दैः श्रूयमाण इति भावः। सूत्रितञ्च श्रीबादरायणेन शास्त्रयोनित्वादिति। कारणवाक्यैः श्रूयमाणत्वेन किम्प्रतिपन्नमित्यत आह– **हेतुरिति**। उत्पादकः कारणमिति, नित्यसाकाङ्क्षतया कार्यमनुसन्धाय षष्ठ्यन्तेनोपस्थापयति– **जगतामिति**। प्रत्यक्षादिप्रमाणप्रतिपन्नानां जङ्गमाजङ्गमरूपाणां कृत्स्नजगतां सकलकार्य-वर्गस्याभिन्ननिमित्तोपादानकारणम्, स कारणं करणाधिपाधिप इति श्रुतेः। यथा कुलालादिरहमेतत्कार्यं कुर्यामितीच्छाकृत्यादिविशिष्टतया घटादिकार्यं प्रति निमित्तं भवति तथैवेश्वरो बहुस्यां प्रजायेयेति सङ्कल्पविशिष्टः सन्नविशेषेण सर्वकार्यनिमित्त-कारणम्। ईश्वरस्य सर्वकार्यं प्रत्यपि ऐक्यरूप्येण निमित्तत्वेऽप्युपादानत्वं तथा न भवति किन्तु क्वचित्साक्षात्क्वचित्परम्परया। ईश्वरगतघटसंयोगादि निष्कृष्टशुद्धस्वरूपेण, एषां साक्षात्स्वरूपगततयाऽगन्तुकतया च तदुपादानत्वं साक्षादेवेश्वरस्य भवतीति। एतेनैककार्ये निमित्तोपदानयोरैक्यं न सम्भवति विरोधादिति वदन्तः परास्ताः। सर्वकार्यनिमित्त-भूतस्येश्वरस्य स्वगतघटसंयोगादिकं प्रत्युपादानत्वस्य दृष्टत्वेन सर्वैरभ्युपगतत्वात्। अवस्थाश्रयत्वमुपादानत्वम्, तद्घटकावस्था चागन्तुकापृथक्सिद्धधर्मः। आगन्तुकत्वञ्च प्रागभावप्रतियोगित्वरूपं जन्यत्वम्, ईश्वरगतघटसंयोगसूक्ष्मचिदचिद्वैशिष्ट्यादीनां च तथात्वात्तदुपादाय तस्योपादानत्वमुपपद्यते। यद्यप्युपयन्नपयन् धर्मो विकरोति हि धर्मिणमिति न्यायेनेश्वरस्य विकारित्वापत्त्या निर्विकारश्रुतिविरोधः स्यादिति तथापि विकारत्वावस्थात्वघटकजन्यत्वयोर्मिथः पार्थक्येन सूक्ष्मचिदचिद्वैशिष्ट्यादिकमादाये-श्वरस्योपादानत्वोपपत्तावपि न विकारित्वम्। विकारत्वघटकजन्यत्व च प्रागभावा-प्रतियोगित्वात्मकनित्यत्वाभावरूपं व्यतिरेकमुखनिरूप्यम्, अवस्थात्वघटकजन्यत्वं च प्रागभावप्रतियोगित्वरूपमेवान्वयमुखतः। एवञ्च सूक्ष्मत्वविशिष्टचिदचिदपृथक्सिद्धेः विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन केवलचिदचिदपृथक्सिद्ध्यनतिरेकात्। तस्याश्चेश्वरे सनातनत्वेनास्या अपि कथञ्चित्प्रागभावाप्रतियोगित्वरूपनित्यत्वप्राप्त्या तदभावाभावान्न विकाररूपत्वमिति न तामादायेश्वरस्य विकारित्वापत्तिः। सूक्ष्मत्वविशिष्टचिदचिदपृथक्सिद्धेर्विशिष्टवेषेण प्रागभावप्रतियोगित्वादवस्थारूपत्वमिति

पदपरामर्शः

तानादाय तस्योपादानतानिर्वाहश्च भवति। अत उक्तं श्रीरामायणे– जगत्सर्व शरीरं त इति। भगवतो रामस्य निमित्तकारणतापि तत्रैवेत्थं प्रतिपाद्यते–

सर्वाल्लोकान् सुसंहृत्य सभूतान् सचराचरान्।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः।।

जगतां हेतुरित्यत्र कार्यवर्गेषु भेदप्रयुक्तवैचित्र्याभिप्रायेण बहुवचनम्। चेतनपक्षे हेतुः प्रयोजको नियामक इत्यर्थः। यथाह भगवान् पाणिनिः– तत्प्रयोजको हेतुश्चेति। जगतामिति शरण्यः प्रभुरित्यनयोरपि सम्बध्यते, तेन जगतां शरण्यो जगतां प्रभुरिति लभ्यते। शरणे साधुः शरण्यो, जगतां शरण्यः, सर्वलोकशरण्याय राघवाय महात्मन इति श्रीरामायणोक्तेः। न त्यजामि कथञ्चेनेति प्रतिज्ञानुगुणमाश्रितरक्षणे गृहीतव्रतः। असमर्थत्वे शरण्यत्वं व्यर्थमित्यत आह– **प्रभु**रिति प्रभुः समर्थ इत्यर्थः। यद्वा सर्वस्पृहणीयतया सर्वेषां हृदयहरणे प्रभवतीति प्रभुः, प्रकृत्यैवातिमात्रकमनीयः, रामः कमलपत्राक्षः सर्वसत्त्वमनोहर इति श्रीरामायणोक्तेः। यद्वा प्रभवतीति प्रभुः, निरुपाधिकसर्वस्वामी, पतिं पतीनामिति श्रुतेः, त्रयाणामपि लोकानामादिकर्त्ता स्वयम्प्रभुरिति श्रीरामायणोक्तेश्च। देवेशो ब्रह्मादिदेवानामीशो राक्षसादिभ्यो रक्षणात्पालकः। देवानामीश्वरत्वादेव ब्रह्मादिदेवार्चित इत्यप्युक्तम्। लोकपूजितानामपि पूजित इति निरुपाधिकपूज्य इति जगद्विधात्रादिभिः पूज्यतया तस्य ततोऽपि प्राचीनतरत्वं स्यात्तस्य सनातनत्वमाह– **अनादिनिधन** इति। आदिश्च निधनश्चेत्यादिनिधनौ न तौ यस्य सः, उत्पत्तिविनाशरहितो नित्य इत्यर्थः। नित्यत्वञ्च ध्वंसभिन्नत्वे सति प्रागभावाप्रतियोगित्वम्। वस्तुतो भगवांस्त्वकालोपाधिकः, तेन नित्यकिशोरतया जरादिदुरितरहिततया नित्यविग्रह इति लभ्यते, सदा पश्यन्ति सूरय इति मन्त्रवर्णात्। इत्थं तस्य स्वयम्प्रकाशत्वं संसूच्य सर्वप्रकाशकत्वमाह– **तारार्कानलचन्द्रमोबहुमहस्सौदामिनीभासक** इति। ताराश्चर्कश्चानलश्च चन्द्रमाश्च, तारार्कानलचन्द्रमसः, बहुमहस्तेजो यस्या सा बहुमहाः, सा चासौ सौदामिनी, तारार्कानलचन्द्रमसश्च बहुमहस्सौदामिनी चेति द्वन्द्वः, लोकप्रकाशकत्वेन प्रसिद्धानामपि भासकः प्रकाशक इत्थं भगवत्प्रकाशेनैवैतत्प्रकाशकत्वमुक्तम्। तस्य भासा सर्वमिदं विभाति, तमेव भान्तमनुभाति सर्वमित्यादिश्रुतेः, सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निरिति रामायणोक्तेः, यदादित्यगतं तेजो जगद्भासयतेऽखिलम्, यच्चन्द्रमसि यच्चाग्नौ तत्तेजो

पदपरामर्शः

विद्धि मामकमिति गीतोक्तेश्च। चन्द्रादिषु चिरप्रकाशकेषूक्तेषु पुनरचिरप्रकाशायां सौदामन्यामपि निहितं चपलमपि तेजस्तदीयमेवेति द्योतयितुं सौदामन्याः पुनरुपादानम्। तेज उक्त्वा परैरनभिभवनीयताया वर्णनेनाचिन्त्यप्रभावमाह– **वीरसपत्नशस्त्रनिचयैरजय्य** इति। वीराणां वीर्यवतां सपत्नानां शत्रूणां शस्त्रनिचयैः प्रहरणनिकरैरप्यजय्यो न जेतुं शक्यः, "क्षय्यजय्यौ शक्यार्थे" इति शक्यार्थे जय्यशब्दस्य निपातनात्। अभ्यस्यति श्रीमद्रामायणं तस्य जेतुमशक्यताम्–

न हि रामो दशग्रीव शक्यो जेतुं त्वया रणे।
रक्षसां वापि लोकेन स्वर्गः पापजनैरिव।।
पूरितश्शरजालेन धनुर्मुक्तेन संयुगे।
महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते।।
अप्रधृष्यश्च सङ्ग्रामे क्रुद्धैरपि सुरासुरैः।

प्रभावमुक्त्वा पराक्रमं वक्ति– **जेता च तेषां मुहुरिति।** तेषां तत्र प्रसह्य सापत्न्यं दधानानां खरदूषणत्रिशिरःकुम्भकर्णरावणप्रभृतीनां जेता निगृहीता। यथोक्तम्–

चतुर्दश सहस्राणि रक्षसां कामरूपिणाम्।
खरदूषणमुख्यानां निहतानि महामृधे।।
अहो बत महत्कर्म रामस्य विदितात्मनः।
अहो वीर्यमहो दाढ्र्यं विष्णोरिव हि दृश्यते।।

भगवांस्तु सर्वदा विजयी, सत्यसङ्कल्पत्वात्, उपबृंहितञ्च रामायणे– नाविजित्य निवर्तत इति। **तेषामिति** बहुवचनेनानेकेषां विविधायुधानां शत्रूणामेकाकी निरायुधोऽपि जेतेति बोधितम्। तद्यथा–

चतुर्दश सहस्राणि राक्षसानां जघान यः।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत्।।
पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान्।
अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर।।

**मुहुरित्यनेन** पराजितोऽपि शत्रुः पुनः सबलः सन् यदा यदा योद्धुमागतस्तदा तदा तज्जेतेति द्योतितम्। एतेनासकृद्युद्धात्पलायितस्य योद्धुं पुनरागतरावणस्य पराजयप्रसङ्गः स्मारितः– भयात्प्रदुद्राव समेत्य रावणो यथानिलेनाभिहतो बलाहक इति रामायणोक्तेः।

**नित्यो ब्रह्मविधायकश्च पुरुषो वेदप्रदो ब्रह्मणे[1]**
**नित्यानां शरणं तपःप्रभृतिभिः सद्योगिनां दुर्लभः।**
**एकश्चेतनचेतनो भृतजगद्ध्येयः स्वतन्त्रो वशी**
**स प्राप्योऽस्ति मुमुक्षुभिः सुगुरुभिः सत्सङ्गिभिस्तत्परैः॥178॥**

पदपरामर्शः

*अनादिनिधन इत्यनेनोक्तनित्यतया जीवेश्वरसाधारण्यात्पुनर्जीवापेक्षया तद्विशेषमभिदधाति-* ***नित्यानां नित्य*** *इति। निर्धारणे षष्ठी। लोके यथा गुरूणां गुरुरिति प्रयोगो विद्यादिकृतं प्राशस्त्यं द्योतयितुं भवति तथैवाशांशिभावगर्भ नियम्यनियामकभावप्रयुक्तं पारम्यं सूचयितुमित्थमुक्तिः। नित्यानामक्षराणाञ्जीवानां स नित्यः तदपेक्षयोत्कृष्ट इत्यर्थः, नित्यो नित्यानामिति श्रुतेः, अक्षरादपि चोत्तम इति स्मृतेश्च। विदधातीति विधायक उत्पादकब्रह्मणः प्रजापतेर्हिरण्यगर्भस्य विधायको ब्रह्मविधायकः। तृजकाभ्यां कर्त्तरीति समासनिषेधेऽपि शेषषष्ठ्या समास इति कैयटः। यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेः, मां त्वं पूर्वमजीजन इति रामायणोक्तेश्च। पिताहमस्य जगत इत्युक्तेः पिता यथा पुत्रमुत्पाद्य हिते प्रवर्तनाय शास्त्रमुखेनोपदिशति तथैव भगवान् ब्रह्माणमुत्पाद्य तस्मै जगद्व्यवस्थायै च स्वानादिज्ञानं वेदं प्रयच्छति, तदेवाह-* ***ब्रह्मणे वेदप्रदश्चेति।*** *यो वै वेदांश्च प्रहिणोति तस्मा इति श्रुतेः। औदार्यमाह-* ***पुरुष*** *इति। पुरु बहु सनोति ददातीति पुरुषः, दानकर्मणः सनोतेर्डः निरतिशयानन्दप्रदानेच्छया सह सामर्थ्यस्याविनाभावं सूचयति पुरुषशब्दः। पूर्वश्लोकोक्तस्यौपनिषदपदस्यानुसन्धानात् पुरुषसूक्तादिषु जगत्कारणतयाम्नातः पुरुषान्नपरं किञ्चिदित्यादिश्रुत्युक्त औपनिषदः पुरुषो भगवान् राम एवेति निष्पद्यते। यत्रामृतः स पुरुषो ह्यव्ययात्मेत्यादिश्रुतेः। यद्वा मुक्तेभ्योऽपि वाङ्मनसापरिच्छेद्यं स्वदिव्यानुभवं ददाति स भगवान् पुरुष इत्युच्यते एष*

संवित्करः

जो नित्यों में भी नित्य, एवं पुराणपुरुष, हैं, जिन्होंने सृष्टिकर्त्ता ब्रह्मा को उत्पन्न कर उसे अपनी अनादिवेदविद्या प्रदान की, जो श्रेष्ठयोगियों की तपःसाधना आदि के द्वारा भी दुर्लभ हैं। जो नित्यमुक्तों के परमाश्रय हैं, चेतनरूप जीवों के नियामक होने से परमचेतन, तथा जगत् के पोषक एवं रक्षक है। स्वाधीन होने पर भी भक्त की भक्ति से वश में होने वाले हैं। वे गुरुकृपाप्राप्त भक्तिपरायण मुमुक्षुओं के एकमात्र प्राप्य भगवान् श्रीरामजी हैं।

---

[1] पा. भे.- पुरुषस्तद्वेद बोध्यो सुधीः।

........................................................पदपरामर्शः........................................................

ह्येवानन्दयतीति श्रुतेः। अत्र पुरुषपदं पुरि शरीरे शेत इत्यर्थतया प्रत्यक्परं न, अपितु प्राप्यतया निर्देशात्परात्परं पुरुषमुपैति दिव्यमिति श्रुत्या दिव्यपरात्परोभयविशेषणभूषित उपेयतयोच्यमानः यश्च वेदाहमेतं पुरुषं महान्तमिति श्रुत्या महत्पदविशिष्टतयोपात्तो भगवता बादरायणेन च वन्दे महापुरुष ते चरणारविन्दमित्यादिना प्रत्यभिज्ञापितः पतञ्जलिना चेश्वरलक्षणसूत्रेण पुरुषविशेषतया लक्षितः स सर्वेश्वरो महापुरुषो भगवाञ् श्रीराम एव तत्पदबोध्यस्तस्यैव तथात्वेन युक्तत्वात्। पूर्वं भगवाञ् शरण्य इत्युक्त इदानीं साक्षाच्छरणमेवेत्युच्यते- नित्यानां जीवानां शरणं रक्षकः परमाश्रयोऽभयदातेति। शरणं गृहरक्षित्रोरिति कोषात्। शरणशब्दस्योपायपरत्वे जीवानां स्वप्राप्तौ प्रतिबन्धकनिवर्तकत्वेन भगवान् स्वयमेवोपायो नान्य इत्याशयेन नित्यानामित्यस्य शरणमित्यतोऽव्यवहितपूर्वप्रयोगः। शरण्यं शरणं च त्वामाहुर्दिव्या महर्षय इति रामायणोक्तेः। अतस्तप आदीनां पापनाशकतयैव सार्थक्यं न तेषां भगवदुपलब्धौ साक्षात् सामर्थ्यमित्याह- **तपःप्रभृतिभिः सद्योगिनां दुर्लभ** इति। हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिका इत्युक्त्यनुसारं भक्तिविरहितैस्तप आदिभिरित्यर्थः सम्पद्यते। दुर्लभो दुष्प्राप्यः। प्रभृतिपदेन सत्यब्रह्मचर्यशौचादीनां परिग्रहः। पापनाशकत्वं यथा भक्तेस्तथा तप आदीनां नेत्यवधारयच्छुकोऽपि- न तथा ह्यघवान् राजन् पूयेत तप आदिभिरित्यादिना। भक्त्याऽहमेकया ग्राह्य इत्यत्रैकया नाम तपआदिनिरपेक्षया केवलयाऽहं भक्त्या वशीकर्तुं शक्य इत्यर्थः। यद्यपि ज्ञानादेर्ब्रह्मप्रापकत्वं श्रूयते, तत्र भगवदुपासनात्मकज्ञानेन तदवाप्तिरिति। भक्तेर्ज्ञानविशेषत्वात्। सद्योगिनां निर्जितमनसामपि प्रशस्तयोगिनां तपःप्रभृतिभिर्दुलभो भगवान् किमुत साधारणयोगिनां कुयोगिनां वा। यथोक्तं स्वयं भगवता- अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनामिति। तथाविधो भक्तिलभ्यो भगवाञ्जीववदनेक एको वेत्यवधारयति- **एक** इति। स भगवानेक एव। एके मुख्यान्यकेवला इतिकोषादेकः प्रधानः श्रेष्ठः, केवलोऽप्रतिमः, न तस्य प्रतिमास्तीति मन्त्रवर्णात्, न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुतेः श्रीराममुद्दिश्याधिकसाम्यविमुक्तधामत्वस्य श्रीमद्भागवतोक्तेश्च। एकशब्दस्यान्यपरत्वे एको विलक्षणः, उत्तमः पुरुषस्त्वन्य इति स्मरणात्। जीवापेक्षया भगवतो ज्ञातृत्वे विषयमाह- **चेतनचेतन** इति। चेतनश्चेतनानामितिश्रुत्यनुरोधेनोक्तिः, अत्र चेतनेषु चेतन इति विग्रहो न्याय्यः,

..................................................पदपरामर्शः..................................................

षष्ठीपुरुषस्य न निर्धारण इति निषेधात्। चेतनानां जीवानां चेतनो जीवको येन जातानि जीवन्तीतिश्रुतेः ज्ञानाश्रयत्वं चेतनत्वम्, चेतनेषु भगवत्सङ्कल्पाधीनसङ्कोच-विकासशीलज्ञानेषु जीवेषु चेतनो नित्यज्ञानवान् भगवानित्यर्थः। यद्वा चेततीति चेतनः प्रत्यक्, तेषां चेतनानां प्रत्यगात्मनाञ्चेतनः प्रवर्तकः प्रेरकः, आत्मनामप्यात्मा सर्वात्मेति यावत्, आत्मा यस्य शरीरमिति श्रुतेः अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मेति श्रुतेश्च। भृतं धृतं जङ्गमाजङ्गमं जगद्येन स जगद्धारको भगवान्। स दाधार पृथिवीमित्याम्नायात्। सर्वाधारत्वे सति चेतनत्वमीश्वरलक्षणम् आधेयत्वे सति चेतनत्वञ्जीवलक्षणम्, आधेयत्वमात्रस्याचेतनेषु चेतनत्वादीश्वरे चातिव्याप्त्यो-भयोरुपादानम्। आधेयत्वकथनेन चिदचिदोर्ब्रह्मशरीरत्वं सिद्ध्यति। आधाराधेय-भावादेर्द्विष्ठत्वेन व्यासज्यवृत्तित्वद्योतनाय सम्बन्धकथनं, नियमपदेन च कदाचिदाधेयत्वविधेयत्वादिमतो घटपुत्रादेर्भूतलपित्रादिकं प्रति शरीरत्वं व्युदस्यते। इत्थं यत्प्रति नियताधेयत्वादिमद् द्रव्यं तत् तत्प्रति शरीरमिति। यथाऽचेतनपरिणामभूतो देहो जीवं प्रति शरीरम् उक्तसम्बन्धनियमात्, तथैव तत्सम्बन्धनियमेन जीवोऽपीश्वरं प्रति शरीरमिति भावः। अचेतनानामन्यशरीरतयोपलब्ध्या कथं ब्रह्मशरीरत्वं न ह्येकस्य शरीरं भवदन्यस्यापि शरीरं भवति द्वैराज्यप्रसङ्गात्। पृथिव्याद्यचेतनानाम् अनेन जीवेनात्मानुप्रविश्य इत्यादिश्रुत्या जीववर्गं प्रति शरीरत्वेऽवगतेऽपि यस्य सर्वाणि भूतानि शरीरमित्यन्तर्यामिब्राह्मणानुरोधेन भगवच्छरीरत्वस्यैष्टव्यत्वादुभयं प्रत्यपि चेतनाचेतनानाञ्च युगपदेव शरीरत्वं प्रामाणिकमेवेति भावः। वस्तुतो जीवस्य स्वाधीनभोक्तृत्वं भ्रान्तिसिद्धम्, तस्य स्वतन्त्रतया पुण्यपापफलभोक्तृत्वं नास्ति। स ध्यातुं योग्य इति ध्येयश्चिन्तनार्हः। तदतिरिक्तचिन्तनस्य रागत एव प्राप्तेः। पुना रागादिजनकतया वासनामुखेन बन्धकरत्वाद्, भगवच्चिन्तनस्य वेदनीयतया विहितत्वेनोपासनारूपतया च बन्धनिवर्तकत्वाच्च भगवतो ध्यानस्यैव युक्तत्वादेवमुक्तिः। स्मर्तव्यश्चेच्छताभयमिति भागवतोक्तेः। यश्च विषयान् ध्यायति तस्य सङ्गकामादिक्रमेण पुनरपि संसारप्राप्तिं गायति स्वयं भगवानपि- ध्यायतो विषयानित्यारभ्य बुद्धिनाशात्प्रणश्यतीत्यन्तेन। ध्येयः, पत्न्या पतिरिव, दरिद्रैर्धनमिवात्यन्तकाम्यतया, सर्वदा प्रीत्या चिन्तनीयो भगवानिति भावः। अत एव ध्यायेदाजानुबाहुं धृतशरधनुषमित्यादौ लिङा निर्देश उपपद्यते। यद्वा भृतजगद्ध्येय इत्यखण्डं समस्तं पदम्। तेन यच्च येन धृतं पोषितञ्च भवति, तदधीनस्थिति-

...........................................पदपरामर्शः...........................................

प्रवृत्तिमता तेन सोऽवश्यं ध्येय उपजीव्योपक्षाया अयुक्तत्वात्कृतघ्नस्य निन्दनाच्च, कृते च प्रति कर्तव्यमेष धर्मः सनातन इत्युक्तेः। भगवतोऽनितरसाधारणं वैशिष्ट्यमाह- **स्वतन्त्र** इति। स्वाधीनः, नियोगपर्यनुयोगानर्ह इत्यर्थः। जीवस्वातन्त्र्यन्तु स्वेच्छानुविधायिप्रवृत्तिशीलत्वम्, अतो जीवश्च यथेच्छं दृष्टार्थकृष्यादौ अदृष्टार्थयागादौ यथाकामं प्रवर्तते किन्त्वीश्वरोऽचेतनेषु भोग्यत्वं चेतनेषु भोक्तृत्वं तदनुगुणज्ञानशक्त्यादिकं सङ्कल्प्य विहरति, ततश्च जीव ईश्वरदत्तज्ञानतया हिताहितोपदेशं श्रुत्वा तदाहितशक्त्या यथाज्ञानं प्रवर्तते, अतो जीवस्वातन्त्र्यस्येश्वर-सङ्कल्पाधीनत्वमेव। अतो याथार्थ्येन स्वातन्त्र्यमीश्वरस्यैवेत्याह- **स्वतन्त्र** इति। अनितरचेतनप्रेर्य इत्यर्थः। तादृशोऽपि भगवान् प्रीत्यतिशयाद् भक्तवशे भवतीत्याह- **वशी**। आश्रिततन्त्र इत्यर्थः, अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजेति भगवदुक्तेः। एतेन प्रोक्तं स्वातन्त्र्यमधिकं शोभते। वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथेत्युक्तेः। यद्वा वशः कान्तावित्यमरोक्तेस्ततो नित्यातिशायनयोर्मत्वर्थीयेना नित्यातिशयितकान्तिमानिति वशिपदेनोक्तः। यद्वा वशः स्वायत्तत्वमस्त्यस्येति वशी, स्वाधीनोपकरण इत्यर्थः। इत्थमनितरचेतनप्रेर्यत्वं स्वाधीनलीलोपकरणत्वञ्चे-श्वरस्यासाधारणधर्मः। एतादृशो भगवान् रामः प्राप्यत्वेन निश्चितः कीदृशैः प्राप्यते तत्राह- **मुमुक्षुभिः सुगुरुभिः सत्सङ्गिभिस्तत्परैरिति**। अत्र चतुर्णामपि कश्चित्क्रमो दर्शितः। आदौ स्वधर्मानुष्ठानान्मुमुक्षा जायते, तादृशैर्जातमुमुक्षैस्तद्विज्ञानार्थं गुरुमेवाभिगच्छेदिति श्रुत्यर्थमनुसन्धाय प्रशस्ताचार्यपरम्परासंश्रयश्च कृतो भवेत्सुगुरुणां सान्निध्याद् भगवान् मे प्राप्तः स्यादित्याकारको भगवद्विषयकः सङ्गो जायेत, तदा जातसङ्गानां तदुपायजिज्ञासायां भक्त्या त्वनन्या शक्य इत्युक्तरीत्या तद्भक्तिपरत्वे तत्प्राप्तिर्भवतीति कश्चित्क्रमो निर्दिश्यते।

**तथाविधं प्राप्यमथो सुवैष्णवः सुचिन्तयन्नित्यमनुक्षणं प्रिय।**
**सदा सदाचाररतं गुरुं वरं ज्ञातं भजेताखिलसंशयच्छिदम्॥179॥**

...........................................पदपरामर्शः...........................................

लौकिकार्थस्य स्वरूपतः फलतश्च दुःखरूपतां निश्चित्य जातनिर्वेदस्य भगवत्प्राप्तौ तद्विज्ञानार्थं गुरुमेवाभिगच्छेदिति श्रुत्युक्तमनुस्मृत्य सदाचार्यसमाश्रयणरूपं

------------------------------संवित्करः------------------------------

ऐसे परमप्रभु श्रीराम को अपना परम प्राप्य निश्चय करके उनकी प्राप्ति के लिये साधक जीव पहले सर्वसंशयों के निवारक, सदाचारपरायण श्रेष्ठ वैष्णव सद्गुरु की सेवा करे।

**पदपरामर्शः**

प्रथमं सोपानमाह- **तथाविधमित्या**दिना। तव तूच्यमानगुरूपसत्तिलाभात्सर्वार्थ-साधिकाचार्यप्रीणननैपुण्यादिगुणविशेषधन्यता सुतरामिति सम्बोधनेन द्योतयति- **प्रिय** इति। अथो प्राप्यस्वरूपज्ञानानन्तरं लोकपरीक्षणानन्तरं वा। सुवैष्णवो सुवैष्णवो बुभूषुः, यद्यपि वैष्णवीयपञ्चसंस्कारप्राप्त्यनन्तरमेव प्राप्यं वैष्णवत्वमाचार्यसमाश्रयणफलं तथापि सूत्रशाटकवद्भाविसञ्ज्ञाश्रयणान्नान्योन्याश्रयः। तथाविधं वेदान्तेषु नित्यनिरतिशय-ज्ञानानन्दरूपत्वेनोच्यमानं भगवन्तं श्रीरामं प्राप्यमनादिकालाच्चेतनमात्रेण सर्वविध-ज्ञानेच्छाकृतिभिः सततमीष्यमाणं तस्येतरानधीनेच्छाविषयरूपत्वात्। नित्यं प्रतिदिनमनुक्षणं निरन्तरं सुचिन्तयन् सुदृढमवधारयन् गुरुमाचार्यं भजेत सेवेतेति गुरुशब्दनिरुक्त्यैव तस्यान्धकारनिवर्तकत्वं लभ्यते तथापि चतुर्भिर्विशेषणै-स्तत्राप्येक्ष्यमाणगुणगौरवमाह- **सदा सदाचाररतं वरं ज्ञातमखिलसंशयच्छिदमिति** च। आचारहीनं न पुनन्ति वेदा इति वेदसम्पन्नस्याचारहीनत्वे निन्दोक्तेः स्वयमाचरते यस्मादित्याचार्यलक्षणानुरोधेन नित्यसदाचारानुष्ठायित्वमाह- **सदा सदाचाररतमिति।** एतेन क्रियावानेष ब्रह्मविदां वरिष्ठ इति श्रुत्यर्थ उक्तः। एतेनैव च सत्कुलप्रसूतत्वं तद्धेतुकवेदलाभश्च सूचितो। वरमाचार्यत्वेन वरणीयम्, भक्त्या विरक्त्या स्वात्मपरात्मबोधेन च श्रेष्ठम्। तेन स्वप्राप्यभूतश्रीरामभक्तिसत्सम्प्रदायान्वयेन सद्वैष्णवत्वं लब्धं भवति। स्वभक्तिज्ञानवैराग्यादिभिर्वैष्णवजनेषु ज्ञातः ख्यातः, सम्यक् परीक्षितो वा। सा विद्या या विमुक्तय इत्युक्त्या भगवत्प्राप्त्युपयुक्तेन शास्त्रसिद्धेन स्वपरस्वरूपादिज्ञानेन सह विविधोपपत्तिभिः युक्तायुक्तविवेचनशक्त्याऽभिव्यक्त्या च शिष्यसंशयादिनिवर्तनसामर्थ्यमाह- **अखिलसंशयच्छिदमि**ति। छिनत्तीति च्छित्, अखिलसंशयानां च्छित्तमित्यर्थः। श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः, ज्ञानिनस्तत्त्वदर्शिन इति स्मृतेश्च। यद्वा वरमित्यस्य मनोविभ्रमादिशून्यमित्यर्थः, ज्ञानाभावे सन्देहापकरणसामर्थ्यं न स्यात्तत्रापि स्वस्यापरोक्षज्ञानं विनासंबोधस्य योगात्। तद्विना शिष्ये उपदिष्टज्ञानसङ्क्रमणं न स्यात्, न हि घटाज्ञानवानन्यं प्रति घटं बोधयितुं प्रभवति। अत उक्तम्-

भिन्ननावाश्रितः स्तब्धो यथा पारं न गच्छति।
ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयात्॥

.......................................................पदपरामर्शः.......................................................

*तादृशं गुरुं प्राप्य शिष्यस्य कर्त्तव्यमाह-* **भजेतेति।** *यथा देवे तथा गुराविति श्रुत्युक्तरीत्या भगवद्भावेन परिचरेदित्यर्थः। आचार्य मां विजानीयादिति भगवदुक्तेः।*

**सत्संगतः सन् विगतस्पृहो मुहूरामं[1] प्रपद्याऽथ गुरोर्मुखदसौ।**
**कर्माखिलं सम्परिभुज्य चाऽऽत्मवान् प्रारब्धमेवं प्रहतान्यकर्म्मकः॥180॥**
**न्यासात् स्वतन्त्रेश्वरजातसद्दयानिर्लूनमायान्वय एव दैशिकः।**
**हार्दोत्तमानुग्रहलब्धमध्यसन्नाडीशुभद्द्वारबहिर्विनिर्गतः॥181॥**

.......................................................पदपरामर्शः.......................................................

*आचार्यप्राप्त्या त्रिविधैषणानाशो भगवत्प्राप्त्युपायभूतन्यासाधिगमो ज्ञानप्राप्त्या च सर्वकर्मपरिक्षयो न्यासप्रसादितेश्वरकृपया मायासम्बन्धविच्छेदेन सुषुम्नानाड्या देहत्यागक्रमेण च मुक्तिरित्येवमाचार्यद्वारकन्यासेन भगवत्प्रसादमुखेन सकलानर्थ-निवृत्तिमाह-* **सत्सङ्गत** *इत्यादिना। असौ मुमुक्षुर्मुहुरसकृत्सत्सङ्गतस्तत्त्वज्ञाचार्यसङ्गत्या ज्ञानोपदेशाद् विगतस्पृहः सन् विगता निवृत्ता भगवद्व्यतिरिक्तवस्तुविषयिणी स्पृहा यतस्तादृशो भगवदैककामनो भवन् गुरोर्मुखाद्रामं प्रपद्य गुरुमुखेनेत्यर्थः, प्रपत्तावाचार्यमुखादेव मन्त्रप्राप्तेर्विहिततयाऽवधिविवक्षया पञ्चमी, मुखशब्द उपायपरोऽतिप्रीत्याचार्यसमाश्रयापूर्वकभगवच्छरणागतिविधिं सम्पाद्य। रामं सर्वशेषिणं परमप्राप्यं भगवन्तमित्यर्थः। प्रपद्य महाविश्वासपूर्वकं रक्षकत्वेन वृत्वात्मानं तत्र समर्प्येत्यर्थः। तत आत्मवान् लब्धस्वभावः बुद्धिमाञ् ज्ञानवान् वा, आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म चेत्यमरः। अहं भगवच्छेष इति सुदृढं भावयन् स्वभावे शेषवृत्तौ स्थितः। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जनेत्युक्तया ज्ञानमाहात्म्येन*

------------------------------संवित्करः------------------------------

उनके सङ्ग के प्रभाव से वैराग्यसम्पन्न होकर गुरुमुख से भगवन्मन्त्रग्रहणपूर्वक भगवान् श्रीरामजी की प्रपत्ति (शरणागति) प्राप्त करे। तदनन्तर प्रपत्तिद्वारा प्रारब्ध के अतिरिक्त संचित क्रियमाण कर्म के नष्ट होने पर प्रारब्ध को भी निर्विकार भाव से भोग ले। शरणागति से प्रसन्न, परमस्वतन्त्र भगवान् की अहैतुकी दया से मायासम्बन्ध का विच्छेद हो जाने पर वह गुरुकृपाप्राप्त वैष्णव सुषुम्नानाडी के द्वार से निकल कर स्थूल देह का परित्याग कर ऊर्ध्वगमन करता है।

---

[1] पा. भे.- श्रीशम्।

.....................................................पदपरामर्शः.....................................................

तन्निवर्त्यमाह- **प्रहतान्यकर्मक** इति। प्रहतानि पूर्णतो नष्टान्यन्यानि प्रारब्धव्यतिरिक्तानि प्राचीनानि वासनासहितानि कर्माणि येन सः। शिष्टस्य प्रारब्धस्य कर्मणः पुनः किं भवतीत्याह- **अखिलं प्रारब्धं कर्मैवं सम्परिभुज्येति-** प्रारब्धस्य भोगेनैव नाश इति तस्य फलं साक्षात्कृत्य, नाभुक्तं क्षीयते कर्मेत्युक्तेः। भोगेन त्वितरे क्षपयित्वा सम्पद्यत इति ब्रह्मसूत्रेणापि सञ्चितक्रियमाणाभ्यामतिरिक्तस्य प्रारब्धरूपशुभाशुभकर्मणः फलमुपभोगेन क्षपयित्वैव भगवत्प्राप्तेर्वर्णनाच्च। विहितन्यासमहाविद्याफलमाह- **न्यासादिति।** न्यासात्प्रपत्त्याः जाता समुद्भूता, दयासामान्यस्य सर्वेषु सत्त्वेऽपि निरतिशयानन्दरूपमोक्षप्रापकत्वात्सती चासौ दया, सद्दया सुकरुणा, स्वतन्त्रेश्वरस्य अन्याधीनत्वव्यावृत्तये, स्वकृपामात्रैकसाध्यताद्योतनाय च स्वतन्त्रेति विशेषणम्, तस्य तादृश्या सद्दयया, निर्लूनो नितरामुच्छिन्नो मायान्वयो मायामूलोऽचित्संसर्गो भगवत्प्राप्तावशेषप्रतिबन्धकसंसर्गो यस्य, तादृशो दैशिको भगवद्धामप्राप्तियोग्यो जीवः। देशः प्राप्यदेशः श्रीसाकेताख्यं नित्यं भगवद्धाम, तं देशमर्हतीत्यार्हीयष्ठञ्। यद्वा तादृशो देशः प्रयोजनं फलं यस्येति प्रयोजनमिति ठञ्। यद्वा भगवन्मन्त्रादि दिशति प्रयच्छतीति देशिको मन्त्राद्युपदेष्टाचार्यस्तदनुशिष्टतया शैषिकेनाणा दैशिक आचार्यानुग्रहपरिपुष्ट इत्यर्थः। एवकारेण मायान्वयविच्छेदाव्यवधानेन साकेतप्राप्तिपात्रतालाभ इति द्योत्यते। हृदि भवो हार्दो हृदयस्थो भगवान्, हृद्देशेऽर्जुन तिष्ठतीत्युक्तेः, तस्योत्तमानुग्रहः परमानुकम्पा, सन्महदित्युत्तमशब्दस्य पूर्वनिपातः। अत एव ब्रह्मसूत्रे हार्दानुगृहीत इत्युक्तम् तद्यथा- तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति-योगाच्च हार्दानुगृहीतः शताधिकया (4.2.17) तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामतीति श्रुतेः। यद्वा हृदि भवोऽभिलाषो हार्दः, भगवन्तं प्राप्तुमुत्कटाभिरुचिः तेन, भगवतः परमानुकम्पया चेति। यद्वा हार्देन भगवदनुरागेण, भगवतश्च परमानुग्रहेण लब्धं यन्- मध्यसन्नाडीशुभद्वारम्, तेन द्वारेण बहिर्विनिर्गतो बहिरुद्गत इति। अत्र मध्यगतया सन्नाड्याः सुषुम्नानाम्न्या यच्छुभं द्वारमात्मनो बहिर्गमनस्य मार्गः। मोक्षप्रापकत्वाद्द्वारे शुभत्वमुक्तम्। सन्नाडीपदेन सुषुम्नाया एव ग्रहणम्, मेरुदण्डबाह्ये इडापिङ्गलानाडीमध्यस्थनाडीविशेषत्वात्तस्याः। यथोक्तम्-

मेरुदण्डे इडा नाडी पिङ्गलया समन्विता।<br>सुषुम्ना भानुमार्गेण ब्रह्मद्वारावधिस्थिता।।

पदपरामर्शः

*इत्थं भगवत्प्रपन्नजीवस्य भगवत्कृपयाविद्यामूलविच्छेदेन सुषुम्नानाडीद्वारेण शरीरदूर्ध्वगतिर्भवतीति भावः।*

**मार्गे ततः सोऽर्चिरुपैति मुक्तकस्तथाऽर्चिषोऽह्नो दिनतः सुरार्चितः।**
**आपूर्यमाणं विविधैस्तु वासरैः पक्षं प्रभूतोत्तमशर्मविज्वरः॥182॥**
**पक्षादुदङ्मासमथो षडात्मकं तेभ्यश्च संवत्सरमब्दतो रविम्।**
**चन्द्रं ततश्चन्द्रमसोऽथ विद्युतं स तत्र तत्राखिलदेवपूजितः॥183॥**
**परं पदं सोऽयमुपेत्य नित्यममानवं[1] ब्रह्मपथेन तेन।**
**सायुज्यमेव प्रतिलभ्य तत्र प्राप्यस्य सन्नन्दति तेन साकम्॥184॥**

पदपरामर्शः

*ततः शरीरादुत्क्रमणानन्तरं स मुक्तको मुक्तो जीवोऽर्चिर्मार्गमुपैति ततो दिनत आपूर्यमाणाह उपैति तदनु विविधैर्वासरैरापूर्यमाणं पक्षमुपैतीति प्रतिवाक्यं तत्क्रियान्वयः। जीवस्य तदानीन्तनावस्थां तत्समादरञ्चाह-* **सुरार्चितः प्रभूत्तोत्तमशर्मविज्वर** *इति। स तत्तत्स्थानदेवैः समभ्यर्चितो भवति ततश्च सञ्जातोत्कृष्टसुखलाभेन निवृत्ताखिलव्यथो जायत इति भावः। तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमिति छान्दोग्यश्रुतेः। यथा तमेतं वेदानुवचनेनेति श्रुत्या विद्योत्पत्तौ वर्णाश्रमशौचाचारादीनामपेक्षा भवति तथैव सम्पूर्णाविद्यानिवृत्तिरूपविद्यानिष्पत्तये तेऽर्चिषमभिसम्भवन्तीत्यादिशास्त्राद्विशिष्टदेश-गतिरपेक्षिता भवति। शरीराद्ब्रह्मनाड्या समुत्क्रान्तस्यापि सर्वकर्मक्षयेऽपि सूक्ष्मशरीरमनुवर्तते, तदानीं प्राणेन्द्रियादिमत्त्वादेवार्चिरादिमार्गे भोगविहारसंवादादिक-*

संवित्करः

स्थूलदेह त्याग के बाद अर्चिरादिमार्ग से देवपूजित होता हुआ भगवद्धाम के लिये ऊर्ध्व प्रयाण करता है। उस समय वह जीवात्मा अर्चि-पथ से अहर्मार्ग, अहर्मार्ग से पक्ष के लिये ऊर्ध्वगमन करता है, उन उन स्थानों के अभिमानी देवाताओं द्वारा पूजित होता हुआ आगे बढता है। इस प्रकार पक्ष से मास, वहाँ से उत्तरायण-संवत्सर-सूर्य, चन्द्र, विद्युत् आदि देवलोकों के देवताओं द्वारा पूजित तथा अग्रेसारित होता हुआ आगे बढ़ता जाता है। वह मुक्तात्मा अमानव दिव्य पुरुष के द्वारा ब्रह्मपथ से भगवान् के नित्यधाम श्रीसाकेत की ओर ले जाया जाता है, जहाँ जीव भगवत्सायुज्य (भगवान् के भोगसाम्य) को प्राप्तकर परब्रह्म श्रीरामजी के साथ निरतिशय आनन्द प्राप्त करता है।

---

[1] पा. भे.- अमानवः।

**पदपरामर्शः**

मुपपद्यते। तच्च शरीरं प्रत्यगात्मनः स्वरूपाविर्भावे प्रतिबन्धकं भवति, अमानवकरस्पर्शानन्तरं ब्रह्मविन्मुक्तो भवति, तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयतीति श्रुतेः।तदित्थमर्चिरादिनामभिर्बोध्यमानास्तत्तल्लोकाभिमानिदेवता आतिवाहिक- पुरुषा यथाक्रमं तं ब्रह्मविदं स्वस्वदेशसीमानं प्रापयन्ति, वैद्युतोऽमानवः पुरुषस्तं वरुणादिसमीपं प्रापय्यान्ते परब्रह्मोपलम्भयतीति छान्दोग्यादिश्रुत्याद्याधारेण तद्गतिक्रमं निरूपयति- **पक्षादित्यादिना।** पूर्वश्लोकादुपतिष्ठमानमुपैति क्रियापदं प्रतिद्वितीयान्तं सम्बध्यते। अथो स सुषुम्नानाड्या शरीरादुत्क्रान्तः प्रत्यगात्मा पक्षात्सितपक्षात् षडात्मकमुदङ्मासमुपैति, तेभ्यः संवत्सरं ततोऽब्दतः संवत्सराद्रविं ततश्चन्द्रं चन्द्रमसो विद्युतमुपैति, तत्र तत्र लोकविशेषे तत्तल्लोकाभिमानिदेवैः स पूजितो भवतीति श्लोकाशयः। उत्तरायणपरम् उदङ्मासपदं श्रुत्युक्तस्वरूपानुरोधेन, षडुदङ्तिमासान् मासेभ्य इति श्रुतेः। वस्तुतस्तु दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येवेति अतश्चायनेऽपि दक्षिण इति ब्रह्मसूत्रे निर्णीतत्वात्। अत्र वायुमब्दादविशेषविशेषाभ्यामिति सूत्रोक्त्या संवत्सरादनन्तरं वायोरपि समावेशो विवक्षितः। अखिलदेवपूजित इत्यत्राखिलदेवैः पूजित इति विग्रहः। पूजितो यः सुरासुरैरिति प्रयोगवद् भूते क्तो न तु मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने, तेनेत्यधिकार उपज्ञात इति लिङ्गेन मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमानक्तेन भूतक्तस्य बाधो न भवतीति ज्ञापनात्। स जीवो वैद्युतममानवं प्राप्य ब्रह्मपथेन भगवत्सायुज्यं लभत इत्यत आह- **परं पदमित्यादिना।** सोऽयमानवमुपेत्य तेन ब्रह्मपथेन परं पदं नित्यं प्राप्यस्य सायुज्यमेव प्रतिलभ्य तत्र तेन साकं सन्नन्दतीत्यर्थानुरोधात्पदक्रमः। यद्यप्यमानवेन वैद्युतेन पुरुषेण वरुणेन्द्रप्रजापतिसमीप-प्राप्तिपूर्विका परब्रह्मप्राप्तिरिति श्रुत्योच्यते तथाप्यत्र परमपुरुषसायुज्योक्तेस्तत्प्राप्ते-राक्षेपात्सिद्ध्यति। केचनात्र वैद्युतपुरुषोऽमानवः स्वसीमानमतिक्रमय्य वरुणेन्द्रप्रजापति-सहायेन तत्तदवधिं समुतीर्य विरजातीरं प्रापयति तदनु ततोऽन्यः कश्चिदमानवः' पुरुषो विरजायां सूक्ष्मशरीरं त्यक्तवन्तन्तदुत्तरतीरे प्राप्तं मुमुक्षुं स्पृष्ट्वा तत्सर्ववासनानाशेन मुक्तिपदं प्रापयतीत्यभिप्रयन्ति। किन्तु श्रीमदानन्दभाष्यकारेण तस्यानुल्लेखोदेक एवामानवः पुरुषो विरजापारं गतस्य तस्य हस्तस्पर्शप्रभावेन मुमुक्षोः सर्ववासनानाशेन तं भगवन्तं प्रापयतीति गम्यते। अयमभिप्रायः- भगवत्प्राप्तौ केवलं कर्मैव प्रतिबन्धकं न, तत्तु चरमशरीरनाशान्निवर्तते, अमानवकरस्पर्शात्प्रकृतिसम्बन्धरूपः प्रतिबन्धको निवर्तते।

पदपरामर्शः

येन तस्य स्वाभाविकमपहतपाप्मत्वादिगुणाष्टकं तिरोहितमभूत् भगवत्सङ्कल्पात्तादृश-प्रतिबन्धकस्यापि निवृत्तौ सकलप्रतिबन्धकनिवर्तनात्तस्य स्वाभाविकरूपाविर्भावो भवतीति भावः। सोऽयं प्राप्यस्य नित्यं सायुज्यं प्राप्य तेन साकं सन्नन्दतीत्यत्र सोऽयमिति तत्तेदन्तावगाहिनी प्रतीतिः प्रत्यभिज्ञैव, यश्च भगवत्प्रपत्तेः पूर्वं बद्धतया संसाराग्निना दन्दह्यमानोऽभूत्स एवेदानीं तत्प्रपत्त्या तदनुग्रहेण सर्वकर्मक्षयात्परं पदमुपेत्य न केवलं प्राप्यं प्राप्नोदपितु तेन साकं मोदते। स्वरूपैक्येऽपि देशकालकृतमवस्था-वैलक्षण्यमुक्तं भवति। सायुज्यमेव प्रतिलभ्येत्यत्रैवकारेण सामीप्यसालोक्यादे-र्वास्तवमोक्षत्वं नेति सूच्यते। तत्र प्राप्तानां प्राप्यसायुज्यस्यैव प्राप्तिरित्यनेन मोक्षे तारतम्याभावो बोधितः। वस्तुतः यथा सहस्रे शतं तथा सायुज्ये सालोक्यादिकं स्वतोऽन्तर्भवति, तद्यथा अद्भुतार्चिरादिगत्याऽतिवाहिकैर्दैवैरुन्नीतो विरजाप्रवाहमवगाह्य पवित्रपाणिनाऽमानवेन करस्पर्शेन विधूतवासनाविशेषो जीवो दिव्यदेशं श्रीसाकेतं प्राप्य सर्वेश्वरेण भगवता सलोकतां गतः, तदनु ऐरम्मदीये सरसि स्नात्वाऽप्राकृतामृतमय-विलक्षणविग्रहदिव्याभरणादियोगेन सरूपतां प्राप्तः, दिव्यनगरीं श्रीअयोध्यां क्रमेण प्राप्य कल्पवृक्षतले दिव्यमणिमण्डपे ब्रह्मवेश्मनि सहस्रदलपद्मे दिव्यरत्नसिंहासने श्रीहनुमदादिदिव्यपार्षदसंयुतं श्रीसीतया सह भगवन्तं श्रीराममुपगम्य सामीप्यं भजमानो तदभ्याशमुपेत्य साष्टाङ्गं प्रणिपतितस्त्वं कोऽसीति भगवतः पृष्टो नाथ! सर्वशेषिणस्तवैवाहं शेष इति ब्रुवन् पराम्बया श्रीसीतया भगवदुत्सङ्गे समारोपितः, भगवता च सोल्लासमालिङ्गनादिना नित्यमुल्लसितो भगवद्गुणेषु गाढावगाढः सन् तं ब्रह्मानन्दमनुभवति, एतदेव सायुज्यम्, सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चितेति श्रुतेः। तत्र भगवद्गुणानां विग्रहगुणानाञ्च प्रत्यक्षाज्जातप्रीत्यतिरेका-त्सर्वदेशसर्वकालसर्वावस्थोचितकैङ्कर्येण नित्यानन्दमग्नो भवति। इयं परिपूर्णप्राप्तिर्ज्ञान-साक्षात्काराभ्यामुत्तरा, यथावस्थितसर्वाकारेणानुभवरूपा, तेन व्यूहविभवादि-मात्रप्राप्तिव्यवच्छेदः। तद्यथा प्राक्तनजन्मपुण्यमूलसात्त्विकजनसंवादादिजनितं यच्छास्त्रश्रवणानुगुणं भक्तिमात्रं शास्त्रजन्यज्ञानोत्पत्तौ सहकारि भवति, तत्राप्युत्कटभगवद्दिदृक्षगर्भा परभक्तिस्तत्साक्षात्कारे हेतुः, साक्षात्कृते च तस्मिन् परिपूर्णानुभवाभिनिवेशलक्षणा परमभक्तिस्तत्कैङ्कर्यफला तदुत्सङ्गप्रवेशे हेतुर्भवतीति भावः। अयमेवार्थस्तेन साकं सन्नन्दतीत्यनेनोक्तः। तेनेत्यनेन पूर्वं परमप्राप्यतया निरन्तरं

पदपरामर्शः

काम्यमानेनेदानीन्तत्कृपया प्राप्तेन भगवतेति लभ्यते। तेन सहेत्यत्र साहित्यविवक्षया तात्त्विकोऽभेदो निरस्तः, निरञ्जनः परमं साम्यमुपैतीति श्रुतेर्भेदघटितस्य साम्यस्य निर्देशात्। तेन सह साम्यं प्राप्याविर्भूतस्वज्ञानानन्दस्वरूपः सन् पूर्वाननुभूतेन निरतिशयानन्देन भगवता तदानन्दामृतसन्दोहेनेत्यर्थः, तन्महानन्दास्वादनस्य तेन सहैक्ये-ऽशक्यतया तेन सहेत्युक्तम्।

**सीमान्त[1]सिन्ध्वाप्लुत एव धन्यो गत्वा परब्रह्मसुवीक्षितोऽथ।**
**प्राप्यं महानन्दमहाब्धिमग्नो नावर्त्तते जातु ततः पुनः सः॥185॥**

पदपरामर्शः

किन्तादृशमुक्तानां पुनः कदाचित् संसारप्राप्तिस्स्यादित्यत्राह- **सीमान्तसिन्ध्वाप्लुत** इत्यादिना। प्राप्यं गत्वा प्राप्य ततः स पुनर्जातु नावर्तत इति न स पुनरावर्तत इति श्रुत्यर्थः प्रकाशितः। स सीमान्तसिन्ध्वाप्लुत एव धन्यः, अथ परब्रह्मसुवीक्षितः प्राप्यं गत्वा महानन्दमहाब्धिमग्नस्ततः पुनर्जातु नावर्तत इत्यर्थदृशा पदक्रमः। सीमान्तसिन्धुर्विरजा, यतोऽधस्तात्प्रकृतिमण्डलं परस्ताद् भगवद्धामेति या त्रिपादविभूतेर्भगवतो धाम्नोऽवधिभूता, तस्यामेव सूक्ष्मशरीरप्रवाहात् तदुत्तर-तटमासाद्याप्लुतः समुत्तीर्ण एव शुद्धस्वरूपलाभाद् धन्यः कृतकृत्यो भवति किम्पुनः प्राप्यं गत्वा प्राप्य ततोऽप्यधिकधन्यता, तेन च पुनर्न वीक्षितोऽपितु सुवीक्षितस्तस्य धन्यताविषये कथं वक्तव्यमित्येवकारेणोत्तरोत्तरप्रकर्षो ध्वन्यते। परब्रह्मपदेन सर्वशेषी भगवान् श्रीराम एवोच्यते, ब्रह्मलक्षणयोगात्तस्यैव परब्रह्मत्वं दर्शयति, तत्सद्ब्रह्मादि सामान्यशब्दानां तत्रैव विशेषे पर्यवसानं सूचयति। ब्रह्मशब्दस्य चरमावधिप्राप्तबृहत्त्वबृंहणत्वयोगाद् भगवति श्रीराम एव योगरूढत्वेऽपि तस्मादन्यत्र जीवादौ तद्गुणलेशयोगादौपचारिकप्रयोगात्तद्व्यवच्छेदाय **परेति**- विशेषितम्। परब्रह्मणा

संवित्करः

जब वह प्रकृतिमण्डल की सीमारूप विरजा नदी में अवगाहन करता है, उस समय ही उसके सूक्ष्मादिशरीर का प्रवाह होजाने से शुद्धस्वरूप धन्य हो जाता है। मायामुक्त हो भगवत्सान्निध्य प्राप्तकर, प्रभुद्वारा कृपादृष्टि से अवलोकित होकर वह परमानन्द में निमग्न हो जाता है। वहाँ से पुनः संसार में नहीं आता।

---

[1] पा. भे.- शीतान्त।

..................................................पदपरामर्शः..................................................

श्रीरामेण सुवीक्षितोऽतितरां स्नेहेन सुधाप्राविकमलनयनाभ्यां समवलोकितः, एतेन भगवतोऽप्यपहृतस्वकीयवस्तुलाभादिव चिराद्दूरादागतस्य पुत्रस्य दर्शनादिव पितुस्तद्दर्शन-जन्यप्रीतिविकसितनयननलिनाभ्यां न केवलमीक्षितोऽपितु विशेषप्रीत्या वीक्षितः, न केवलं वीक्षितोऽपितु अलभ्यलाभ इव सुवीक्षित इत्युपसर्गद्वयेन गम्योऽर्थः। परमात्मना सुवीक्षितस्य प्राप्तप्राप्तव्यस्य जीवस्यानन्दातिरेकमाह- **महानन्दमहाब्धिमग्न** इति। ब्रह्मानन्दस्य नित्यत्वं परिपूर्णत्वञ्च द्योतयितुं महद्विशेषणम्, पुनर्महानन्दस्यापि नाब्धिरपितु महाब्धिरत्राप्यपरिच्छेद्यत्वमपरिमेयत्वं वा द्योतयितु महद्योगः। तत्र मग्नो निश्शेषेण पूर्णव्याप्त्या निमज्जनं मग्नपदं सूचयति। एवं भगवदानन्दनिमग्नस्य जीवस्य कदाचित्पुनः संसारप्राप्तिः स्यादित्याशङ्क्य परिहरति- **नावर्तते जातु ततः पुनः स** इति। पुनः कदाचिदपि स संसारे नावर्तते- एतेन प्रतिपाद्यमान इमं मानवमावर्तं नावर्तन्त इति तत्रत्यच्छान्दोग्यश्रुतेः।

**महामते प्रोच्य तदीयमाप्यं तेषां निवासस्तु निरूप्यतेऽथ।**
**मोक्षप्रदः शास्त्रसुसम्मतश्च जिज्ञासुबोध्यो भव सावधानः॥186॥**[1]

..................................................पदपरामर्शः..................................................

पूर्वं कालक्षेपस्य विधिः प्रोक्त इदानीं वैष्णवानां भजनसाधनानुरूपस्य निवासदेशस्यावधारणमावश्यकमिति तदाह- **महामत** इति। तेषां श्रीवैष्णवा-नामिदन्तदीयमाप्यं भगवन्तं तत्प्राप्तिक्रमञ्च यथावत्प्रोच्य छान्दोग्यादिश्रुत्याधारेण प्रकृष्टपद्धत्या सुगमयोक्त्वाथेदानीं कुत्र कार्यो निवास इति त्वदीयस्य चरमप्रश्नस्य समाधित्सया मया तेषां श्रीवैष्णवानां निवासो वासोपयुक्तं स्थानजातं निरूप्यते निर्दिश्यते। न्युष्यतेऽस्मिन्नित्यधिकरणे घञ्। निरूप्यमाणतन्निवासं विशिनष्टि- **मोक्षप्रदः शास्त्रसुसम्मतो जिज्ञासुबोध्य** इति। अयोध्यादिसप्तपुरीणां मोक्षप्रदत्वेन प्रसिद्धेस्तदितरस्य भक्त्यनुगुणभगवद्भागवतकैङ्कर्यादिसामग्रीसौलभ्यद्वारेण तद्विरोधि-

---------------------------------संवित्करः---------------------------------

वैष्णवजनों के प्राप्य (भगवत्सायुज्य) के निरूपण के बाद वैष्णवों के निवासस्थान (निवास करने योग्य भूमि), जो शास्त्रसम्मत, मोक्षप्रद तथा जिज्ञासुओं के लिए ज्ञातव्य (जानने योग्य) है, उसे श्रवण करो।

---

[1] यहाँ के विषय को किसी-किसी प्रति में अनुष्टुप् छन्द में उद्धृत किया गया है।

**पदपरामर्शः**

राहित्येन च मोक्षप्रदत्वम् अवैष्णवो हतो देश इत्याद्युक्त्या कीकटादिनिषिद्धदेश-परिहारेण शास्त्रानुज्ञातत्वमाह- **शास्त्रसुसंमत** इति। देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितानिति भगवदुक्तेः। साधकभजनाद्यर्थं योग्यायोग्यदेशान् जिज्ञासुभिः-सुबोध्यः सुष्ठुतयाऽवधारणीयः। अतस्त्वं सावधानः समाहितमना भव तवापि विरक्तत्वेन मुमुक्षुत्वेन च जिज्ञासुत्वात्। धारणानुगुणसामर्थ्यं संसूच्याभिमुखीकरोति-**महामत** इति। समुदारशेमुषीक! ये देहगेहादिसम्बन्धानुविद्धाः प्रवृत्तिपरा गृहस्थ-वैष्णवास्ते गृहेष्वेव सपरिकरं भगवद्भागवतसमर्चामनुतिष्ठन्ति, किन्तु ये लौकिक-सम्बन्धमपहाय भागवतधर्मैकपरा भगवदेकाश्रया विरक्तवैष्णवास्तेषां निवासदेशा-न्निश्चिनोत्याचार्यः। यत्र भक्तेस्तदङ्गानाञ्चानुक्षणं परिपोषः स्यात्। स्वरूपानुगुणे कैङ्कर्येऽन्तरायानुपहतिः स्यात्, यत्र वासश्चित्तशुद्धावुपकारकः स्याद्यथोक्तं श्रीरामायणे-

यावता चित्रकूटस्य नरःशृङ्गाण्यवेक्षते।
कल्याणानि समाधत्ते न पापं कुरुते मनः।।

अत एव भूसंस्कारादिकं शास्त्रे विधीयते। भागवते च परिगण्यते तथाविधदेशजातम्-

अथ देशान्प्रवक्ष्यामि धर्मादिश्रेय आवहान्।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते।
विम्बं भगवतो यत्र सर्वमेतच्चराचरम्।
यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम्।
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम्।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः।
सरांसि पुष्करादीनि क्षेत्राण्यर्चाश्रितान्युत।
कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः।
नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली।
वाराणसी मधुपुरी पम्पा विन्दुसरस्तथा।
नारायणाश्रयो नन्दा सीतारामाश्रयमादयः।
सर्वेकुलाचला राजन् महेन्द्रमलयादयः।
एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये।
एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः।

.....................................................पदपरामर्शः.....................................................

धर्मो ह्यत्रेहितः पुंसां सहस्राधिकफलोदयः।

देवा अपि व्यतिरेकेण तादृशदेशान् प्रशंसन्ति–

न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः।

न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम्।।

**अशेषतीर्थेषु वसेत् प्रपूजयन् स यत्र यत्राविरभूद् यथा यथा।**

**तथा तथा तत्र रघूत्तमं जगत्पतिं चतुर्वर्गफलप्रदं हरिम्।।187।।**

.....................................................पदपरामर्शः.....................................................

वासविषयकप्रश्नं समादधानः पूर्वं सामान्यतः सर्वाण्येव तीर्थानि वासयोग्यानीत्यभिप्रेत्याह– **अशेषतीर्थेष्विति**। वैष्णवो विशिष्य विरक्तवैष्णवो–ऽशेषतीर्थेषु वसेत्। निराश्रयस्य पातित्याशङ्कया भगवदेकाश्रयाणां तेषां प्रधानकृत्यं स्मारयन्नाह– **रघूत्तमं प्रपूजयन्निति**। सर्वाराध्यं सर्वेश्वरं श्रीरामचन्द्रमाराधयन्नेव वसेत्तीर्थवासेऽलम्बुद्धिर्मा भूदिति भावः, कस्यामप्यवस्थायां भगवच्छेषतापरित्याग–स्यात्यन्तमयुक्तत्वात्। रघूत्तमं रघुषु रघुवंश्येषु धर्मपरायणेषु राजसूत्तमम्, रघोरप्युत्तमं वा, इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशाम्पत इति श्रीरामायणोक्तेः। राघवा उत्तमा उत्कृष्टा येनेति वा, अत एव रघुवंशभूषणेत्यादिसञ्ज्ञाप्रसिद्धिः। उत्तमपदस्य पूर्वनिपातप्रसक्तिस्त्वनित्यत्वाद् वारणीया। रत्नमालायां यथा महामणियोगेनान्यरत्नानि समधिकं शोभन्ते तथैव धर्मात्मानोऽपि तेऽनेन दिव्यगुणोज्ज्वलेन श्रीरामचन्द्रेणेति भावः। यथोक्तमादिकविना– शक्तस्त्रैलोक्यमप्येष भोक्तुं किन्तु महीमिमामिति। रघुशब्दस्य जनपदवाचित्वाभावात्परस्य तद्राजसञ्ज्ञा नेति लुकोऽप्रवृत्त्या राघवाणामित्येव स्यात्तथापि रघुशब्दे तदपत्ये लक्षणा, तेनोक्तार्थप्रत्ययो नात्पन्न इति। वस्तुतस्तु गत्यर्थकाल्लघि धातोर्लङ्घतीति व्युत्पत्त्या कुप्रत्यये लस्य रत्वे रघुपदसिद्धिस्तथात्वे रघुशब्दस्य चेतन इत्यर्थः, अततीत्यात्मेतिवत्। रघुषु चेतनेषूत्तम इति विग्रहेण चेतनश्चेतनानामिति श्रुतेः परमात्मेत्यर्थः स्थिरीभवति। अत एव परास्य शक्तिर्विविधेव

-------------------------------संवित्करः-------------------------------

जहाँ जहाँ, जगत्पति श्रीराम का जिस जिस लीलाभूमि पर जिस जिस रूपों में अवतार हुआ है, उन उन रूपों में अर्चन करते हुए वैष्णवों को निवास करना चाहिए। अथात् तीर्थो में भी भगवान् की अर्चना करते हुए वैष्णव निवास करें। अर्थात् परमाराध्य चारों पुरुषार्थों के देने वाले श्रीराम ही सर्वत्र उन उन रूपों में पूजित हो रहे हैं इस भावना से उन उन तीर्थों में निवास करना चाहिये।

..........पदपरामर्शः..........

श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्यनुरोधेन सर्वनियमनसामर्थ्यवत्त्वात् सर्वशेषित्वेन जगत्पतिमित्यनेन, बलम् सार्वज्ञ्यं विना सर्वकर्मफलप्रदातृत्वस्यानुपपत्त्या चतुर्वर्गफलप्रदमित्यनेन ज्ञानम्, सर्वभूतमनोहरस्य तस्य श्रितजनसन्तापहरणपरायणतया हरिमित्यनेन क्रिया चोच्यते, तेनौपनिषदमीश्वरलक्षणं सूचितम्। इत्थं त्रिभिर्विशेषणैः सर्वशेषित्वकारुण्यसौशील्यौदार्याद्यनेकगुणाः सन्निधापिताः। यद्येवमशेषतीर्थेषु वसेदिति निश्चये श्रीरामप्राधान्यरहितेष्ववैष्णवतीर्थेषु वा वासेन स्वाराध्यनामरूप-लीलाभिनिवेशवतां वैष्णवानां भावपरिपोषः कथं स्याद् यद्वा शैवशाक्तादितीर्थेष्वनन्य-देवताकत्वरूपानन्यतानिर्वाहः कथं स्यादिति प्राप्तशङ्कामपहरति-**स यत्र यत्राविरभूद्यथा यथा तथा तथा तत्रेति।** भगवान् राम एव श्रीकृष्णनृसिंहनारायणादिरूपेण पूजितो भवतीति भावनया भावपरिपोषः सम्भवति, सर्वेषामवताराणामवतारी रघूत्तमः, रामपादनखज्योत्स्ना परं ब्रह्मेति गीयत इत्यागमोक्त्या तस्यैव सर्वावतारित्वात्। आविरभूदित्यनेन वामनाद्यवतारवत्सम्पूर्णमैश्वर्यं बिभ्राणस्यार्चाविग्रहस्य साक्षाद्-भगवद्रूपतयानुग्रहं विधातुं प्रीतिपारवश्याद्भक्ताभिलषितभावानुगुणाकारेणार्चासौलभ्यार्थं स्वेच्छया प्रकटितोऽभूदित्यर्थो लभ्यते। ऐहि अश्मानमारोह अश्मा भवतु ते तनूरिति मन्त्रात्।

बिम्बाकृत्यात्मना विम्बे समागत्यावतिष्ठते।
अर्चापि लौकिकी या सा भगवद्भावितात्मनाम्
मन्त्रमन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रहेत्यागमोक्तेः।

इत्थमप्राकृतदिव्यविग्रहेण सह तत्रानुप्रविश्यायोध्यादिदेशानामवतारकालानां नियमैर्विना सर्वदेशेषु आराधकापेक्षितेषु कालेषु रुचिमत्सर्वाधिकारिविषयेऽपि सर्वानप्यपराधान-विगणय्य विलसति। यथोक्तं-

तदिच्छया महातेजा भुङ्क्ते वै भक्तवत्सलः।।
स्नानं पानं तथा यात्रां कुरुते वै जगत्पतिः।

एवमाराधके स्वामित्वं स्वस्मिन् स्वत्वं नूतनतयोत्पाद्य शक्तोऽशक्तो रक्षकोऽपि रक्ष्यो भूत्वा विलसति भगवान्। यस्मिन् यस्मिन् तीर्थे तथा तथा यत्प्रमाणाकारेण यद्रूपगुणकर्मतया बाल्यकैशोर्यतापसत्वाद्याकारेण श्यामत्वद्विभुजचतुर्भजधनुर्धरमुरलीधर-

**पदपरामर्शः**

चक्रधरश्रीरामकृष्णनृसिंहादिरूपेणार्चावतारस्याविर्भावः, तादृशं तथा तथा तेन तेन प्रकारेणावस्थितमपि श्रीरामभावेन प्रपूजयेदित्याशयः। यथोक्तं भागवते- यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहायेति। शैवशाक्तादितीर्थेष्वपि शिवदुर्गादिदेवतारूपेण भगवत एवोपासना भवति यस्यादित्यश्शरीरमित्यादिश्रुत्या तेषां भगवच्छरीरत्वात् तत्र तेषां सुकृततारतम्येन तादृशोपासनश्रद्धाया भगवतैवाधानात्। यथोक्तं गीतायाम्-

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्।।

इत्थं तदात्मकत्वात्सर्वस्य भगवद्भावेनार्चने न दोषः। अशेषतीर्थेषु वसेदित्यस्यान्यतमतीर्थे वासं कुर्यादित्याशयः प्रतितीर्थं वसेदेवेत्याकार आग्रहो नाभिमतः। यत्र कुत्रापि तीर्थे वसन् भगवद्रघुपतिपूजनपर एव स्यादिति विवक्षितार्थः। श्रूयते तीर्थेष्वपि तत्क्षेत्रपतिरसन्तुष्टः प्रसह्य ततो वसन्तं निष्कासयति देवानामपि भक्तिपरिपन्थित्वत्वेन वर्णनात्-

श्रूयते खलु गोविन्दे भक्तिमुद्वहतां नृणाम्।
संसारन्यूनताभीतास्त्रिदशाः परिपन्थिनः।।
सत्यं शतेन विघ्नानां सहस्रेण तथा तपः।
विघ्नायुतेन गोविन्दे नृणां भक्तिर्निवार्यते।।

इत्यतो विघ्ननिवारणामोघसाधनं निर्दिशति- **प्रपूजयन् वसेदिति**। अर्चितो भगवान् तदर्चा वा स्वयमर्चनपरायणं कालादिप्रभावप्रयुक्तविघ्नदोषजातान्निवार्य तदाश्रित्य वर्तमानन्तं सर्वतो रक्षति तदाश्रितसाधनममृतेन च सेचयति- अत एवोक्तं श्रीसात्वते-

सङ्कल्पादेव भगवान् तत्त्वतो भावितात्मनाम्।
व्रतान्तमखिलं कालं सेचयत्यमृतेन तु।।

अतस्तीर्थवासप्रसङ्गेऽपि नियमतो भगवत्पूजाया एव प्रधानविधेयता। यथोक्तं स्वयं भगवता भागवते- ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात्। एकत्र वासेनेदं ममेत्यासक्त्युदयाशङ्कया तीर्थेषु वसेदिति लिङा तीर्थे तीर्थे वसेदित्याचार्यादिशोऽपि द्योत्यते। उच्यते चावधूतेन-

विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत्।।

**वैकुण्ठदेशे खलु वासुदेवमामोदसंज्ञे त्वथ कर्षणाह्वम्।**
**प्रद्युम्नमब्जाक्षमपि प्रमोदे सम्मोद ईशन्तु तथाऽनिरुद्धम्॥188॥**

........................................................पदपरामर्शः........................................................

चत्वारिशृङ्गा त्रयो अस्य पादा इति मन्त्रेण प्रतिपादिताकारस्य भगवतो रामस्य चतुर्णां व्यूहानामाराधनं मनोबुद्धिचित्ताहङ्कारशुद्ध्यर्थं तदधिष्ठितदेशानुरोधेन कुर्यादित्याह- **वैकुण्ठदेश** इति। अप्राकृते वैकुण्ठदेशे वासुदेवम् आमोदसञ्ज्ञ आमोदनामके क्षेत्रविशेषे कर्षणाख्यं सङ्कर्षणं प्रमोदे प्रद्युम्नं संमोदेऽनिरुद्धमाराधयद्भिर्वासः कार्य इत्युत्तरेण सम्बन्धः। चतुर्णां व्यूहानामन्तःकरणचतुष्टयदेवतारूपेण भागवते वर्णनं लभ्यते। तत्रोच्यते श्रीधरस्वामिना- अधिभूतरूपेण तस्यैव महानिति सञ्ज्ञा, अध्यात्मरूपेण चित्तमिति उपास्यरूपेण- वासुदेव इति, अधिष्ठाता तु तस्य क्षेत्रज्ञः, एवमहङ्कारे सङ्कर्षण उपास्यो रुद्रोऽधिष्ठाता, मनस्यनिरुद्ध उपास्यश्चन्द्रोऽधिष्ठाता बुद्धौ प्रद्युम्न उपास्यो ब्रह्माधिष्ठातेति ज्ञातव्यम्। वस्तुतो भगवान् रामस्तु परात्परो यः पूर्वश्लोके सर्वतीर्थेषु सामान्यतः पूज्यतयोक्तस्तस्यैव वासुदेवसङ्कषणप्रद्युम्नानिरुद्धरूपेण चतुर्धा व्यूहाः, तेषामुपासकानुग्रहः सृष्ट्यादयः संसारिसंरक्षणञ्च मुख्यं कृत्यम्, उपासकानुग्रहार्थं जगतो रक्षणाय चेत्युक्तेः। सर्वत्र वसति दीव्यति च वासुदेवो ज्ञानबलैश्वर्यवीर्यशक्तितेजोभिः षड्गुणैः परिपूर्णो वैकुण्ठदेशे समाराध्यते। अस्मादेव केशवनारायणमाधवाख्यं स्वरूपत्रयं विभाव्यते। आमोदाख्ये देशे सङ्कर्षणः षाड्गुण्यपूर्णोऽप्यधिकृतकार्यानुगुणत्वाज्ज्ञानबलप्रकाशेन जीवतत्त्वमधिष्ठाय शास्त्रप्रवर्तनं जगत्संहरणञ्च करोति। यथोक्तं स्मृतौ-

बलेन हरतीदं स गुणेन निखिलं मुने।
ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम्॥

तस्य ज्ञानं सर्वदा सर्वविषयकः स्वप्रकाशश्च गुणविशेषः, बलञ्च जगत्कारणत्वप्रयुक्तश्रमाभावः सर्ववस्तुधारणसामर्थ्यञ्च। सम्यक्पापकर्षणशीलत्वादयं सङ्कर्षण इति गीयते। अस्मादेव गोविन्दविष्णुमधुसूदनेति त्रयं रूपं विभाव्यते। प्रमोदाख्ये दिव्यदेशे सर्वनियन्तृत्वरूपेणैश्वर्येण,जगदाकारेण परिणामेऽपि स्वयमविकारि-

------------------------------संवित्करः------------------------------

वैकुण्ठ में श्रीभगवान् वासुदेव, आमोद में श्रीसङ्कर्षण, प्रमोद में कमलाक्ष श्रीप्रद्युम्न भगवान् तथा सम्मोद में श्रीअनिरुद्ध के रूप में भगवान् निवास करते हैं। मोक्षेच्छु वैष्णव इन तीर्थों में निवास करते हुए तत्तद्देवताओं की आराधना करके अपनी मनोकामना पूर्ण करते हैं।

......................................................पदपरामर्शः......................................................

त्वरूपवीर्येण च युक्तः प्रद्युम्नो मनस्यधिष्ठाय धर्मोपदेशं मनुचतुष्टयप्रभृतिशुद्धवर्ग-सृष्टिञ्च करोति। यथोक्तम्-

ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम्।
वीर्येण सर्वधर्माणि प्रवर्तयति सर्वशः।।

अतःप्रकृष्टं द्युम्नं बलमस्येति प्रद्युम्नसञ्ज्ञा, एतस्मात् त्रिविक्रमवामनश्रीधररूपं त्रयं प्रकाश्यते। न केनापि स्वेच्छां विना निरुद्ध इत्यनिरुद्धो रक्षणस्य तत्त्वज्ञानप्रदानस्य कालसृष्टेर्मिश्रसृष्टेश्च निर्वाहकः संमोदाख्ये देशे समाराध्यते, यथोक्तम्-

शक्त्या जगदिदं सर्वमनन्ताङ्गं निरन्तरम्।
बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम्।।
तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने।।

अब्जाक्षम्, ईशमिति च विशेषणद्वयं सौन्दर्यैश्वर्यबोधकतया चतुर्षु व्यूहेष्वन्वेतव्यम्। वैकुण्ठादेर्दिव्यधामत्वेन भौमतीर्थेष्वेव सामान्यवैष्णवजनवास-सम्भवात्तदुल्लेखश्चतुर्व्यूहाणां स्थानज्ञापनाभिप्रायेण, भूतशुद्ध्या ध्यानेन च भगवद्धामप्रवेशपूर्वकार्चनकर्तॄणां व्यूहस्थितिबोधनाय वा। एवमेवोत्तरश्लोकेऽपि।

**विष्णुं तु लोके वरसत्यसंज्ञके पद्माक्षमित्थं त्वथ सूर्यमण्डले।**
**क्षीराब्धिमध्ये शुभशेषशायिनं श्वेते तथा द्वीपवरे च तारकम्।।189।।**

......................................................पदपरामर्शः......................................................

वैकुण्ठादधस्ताद् ब्रह्मलोके सूर्यमण्डले क्षीरसागरमध्ये श्वेतद्वीपे च भगवान् केन केन नाम्नाराधनीय इति बोधयति- **विष्णुमिति।** सत्यनामके श्रेष्ठे लोके भगवान् राम एव विष्णुनाम्ना समाराध्यते- वेवेष्टि व्याप्नोतीति विष्णुरिति सर्वव्यापको भगवांस्तत्र तमाराधयता वासः कार्यः। इत्थं सूर्यमण्डले पद्माक्षं पद्माक्षनामकं भगवन्तम्, क्षीराब्धिमध्ये क्षीरसमुद्रमध्ये शुभे शेषाख्य आसने शयितुं शीलं यस्य, तथाविधं भगवन्तं, श्रेष्ठे श्वेतद्वीपे तारकनामकं भगवन्तं सेवमानो वसेदिति भावः।

------------------------------संवित्करः------------------------------

सत्यलोक में श्रीविष्णुभगवान्, सूर्यमण्डल में श्रीपद्माक्ष, क्षीरसागर में श्रीशेषशायी तथा श्वेतद्वीप में श्रीतारकभगवान् निवास करते हैं। अतः इन तीर्थों में वैष्णवों को इनका पूजन करते हुए निवास करना चाहिए।

पदपरामर्शः

पूर्वार्धोत्तरार्धयोः वरशब्दः प्रशस्तपरः। श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरमिति भागवतपद्यव्याख्यावसरे श्रीधरस्वामी श्वेतद्वीपाधीश्वरतयानिरुद्धमूर्तिमाह- क्षीराब्धिमध्ये शेषातिरिक्तस्य स्थानाभावात्, शेषस्य चानादिपार्षदतया, तत्र शयनं युज्यते। शरीरभेदैस्तव शेषतां गत इत्युक्तः स्मार्यते। सत्यलोकादधस्ताच्छ्वेतद्वीपाख्यं भगवद्धाम, यत्रैकदा योद्धुकामो गतो रावणस्तत्रत्ययैकया योषितैकहस्तेन धृतो यथाकथञ्चिदात्मानं मोचयित्वा पालयित इति रामायणकथा परामृश्यते। यथोक्तम्-

सत्यलोके तथा दिष्णुं पद्माक्षं सूर्यमण्डले।
क्षीराब्धौ शेषशयनं श्वेतद्वीपे तु तारकम्।।

**तथा बदर्यभिध आश्रमे वरे सुरर्षिराजर्षिमहर्षिसेविते।**
**नारायणं लोकनमस्कृताङ्घ्रिकं मुनीशसेव्ये त्वथ नैमिषे हरिम्।।190।।**

पदपरामर्शः

वैकुण्ठादारभ्य सत्यलोकसूर्यमण्डलादेरवरोहणक्रमेण भगवद्धामतत्सेव्याभिधानाभिधानमुखेन वासस्थानं निर्दिश्येदानीं सुरसङ्घसमुपासिते भारते तत्रापि भागवतोक्तरीत्या भारतवर्षाधिदैवतं नारायणमृषिं तदधिष्ठितं सर्वोन्नतहिमालयप्रान्तेऽवस्थितं बदरिकाश्रमञ्च स्मृत्वा तदनु नैमिषारण्यञ्च विरक्तजननिवासयोग्यं मत्वोपन्यस्यति- **तथेति**। बदर्यभिध आश्रमे नारायणं नैमिषे च हरिमाराधयन् वसेदिति श्लोकसारः। तथेति समुच्चयार्थचकारार्थे। बदरी आभिधं नाम यस्य तस्मिन्। बदरी अभिधा यस्येति विग्रहे ''बदर्यभिधे'' इतिरूपनिष्पत्त्या छन्दोभङ्गः स्यादित्यभिधैव आभिधम् स्वार्थेऽण्। यद्वात्वं छन्दोऽनुरोधादपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेदित्युक्तेः। बदरिकाचिह्नित आश्रमे बदरिकाश्रम इत्यर्थः। आश्रमे मुनीनां वासस्थाने तेन मुमुक्षुजनवासयोग्यत्वं सूचितम्। तथाविधनिर्विण्णतपस्विजननिर्वाहसाधनसम्पदमाह- **बदर्येति**। साधनानुष्ठाने बदरीफलभक्षणविधानात् तद्यथा- त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः, आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन् हरिमिति ध्रुवोपाख्याने भागवतोक्तिः। देहे रममाणानां विलासिनां नाम्नैव कण्टकस्मृत्या

संवित्करः

सुरर्षि, राजर्षि तथा महर्षियों द्वारा संसेवित बदरिद्रकाश्रम में सर्वजनार्चितचरणकमल भगवान् श्रीनारायण तथा श्रेष्ठमुनियों की निवासभूमि नैमिषारण्य में श्रीहरिभगवान् निवास करते हैं। (अतः यहाँ इनका पूजन करते हुए वैष्णवों को निवास करना चाहिए।)

.........................................................पदपरामर्शः.........................................................

दुरासाद्यत्वं दुष्प्रवेश्यत्वं वा सूचितं भवति, एतेन मुमुक्षुजनानुरूपं विविक्तत्वमुच्यते। यत्र भगवन्तमुद्दिश्य तपस्विनस्तपश्चरन्ति स आश्रमो यत्र च सर्वाराध्यो भगवानपि नृणां स्वस्तये क्षेमाय च तपश्चरति सोऽतितरां प्रशस्ततया वर आश्रमः। यथोक्तम्-

नारायणो विभुर्विष्णुश्श्वाश्वतः पुरुषोत्तमः।
तस्यातियशसः पुण्यां विशालां बदरीमनु।।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः।
योऽवतीर्यात्मनोंऽशेन दाक्षायण्यान्तु धर्मतः।।
लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे।।

न केवलं परमोन्नतशिखरारूढतयैवोच्चैस्त्वमपितु तपोवैराग्योत्तम्भकत्वादपीति भावः। यत्र स्वाराध्यं तपस्यन्तं विलोक्य मुमुक्षूणां तपसि निष्ठानुदिनं परिबृढा भवतीति वासयोग्यतया वरणीयतामाह- **वर** इति। यद्दर्शनमात्रेण चेतसि वैराग्यं समुज्जृम्भते भक्तिश्च पुष्टिमश्नुत इति भावः। अतो भगवानपि परमात्मीयतया स्वाश्रमं ममेत्यनेनाभिधत्ते- गच्छोद्धव मयादिष्टो बदर्याख्यं ममाश्रममिति। तस्य लोकवन्दितर्षिजनसेवितत्वमाह- **सुरर्षिराजर्षिमहर्षिसेवित** इति। नारदादिभिः सुरर्षिभि-र्ऋतपर्णादिभी राजर्षिभिर्व्यासादिभिश्च महर्षिभिः सेविते समुपासित इति। भगवत ऋषित्वन्तु लोकसङ्ग्रहार्थमेव। युज्यते च नारायणर्षेः नारदादिभिः पूजनमुपास्यो-पासकयोर्निवृत्तिपरत्वेन साजात्यात्। बदरिकाश्रमे भगवदर्चकेषु श्रीनारदस्य सुरर्षेरेव प्रामुख्यात् सुरर्षिपदस्य प्रथमोपादानम्। यदर्चकस्य नारदस्योपदेशान्मायाजयः श्रूयते, साक्षात्तदर्च्यस्य भगवतः सेवया किन्न स्यादिति भावः। आराध्यगौरवमाह- **नारायणमिति**। नराणां समूहो नारं तत्रायनमस्येति नाम्नैव सर्वभूतनिवासताप्रत्ययेन न केवलं सर्वपरविद्यावेद्यत्वमपितु सर्वनियामकत्वरूपमैश्वर्यगर्भं पारम्यमुक्तं भवति। तस्य न केवलं भारतभुवि संश्रितमात्रनमस्कृतत्वमपित्वकुण्ठमैश्वर्यमाह- **लोकनमस्कृता-ङ्घ्रिकमिति**। लोकत इति लोकश्चतेनवर्गस्तेन नमस्कृतौ वन्दितावङ्घ्री चरणौ यस्येति बहुव्रीहौ समासान्तः कप्। आश्रमे तपस्विभावेन नित्यं विद्यमानतया सौलभ्यं संसूच्य तदङ्घ्रियुगले प्रह्वीभावमात्रेण सकलानर्थनिवृत्तिरिति। कृपोत्तम्भकत्वेनौचित्या-दङ्घ्रिशब्दः। यदङ्घ्रिमुद्दिश्य कृतो नमस्कारोऽपि लोकस्य मङ्गलपरम्परां सूते किमुत स्थिरवासेन तदङ्घ्रिमुपसेवमानानामिति कैमुत्यं लभ्यते। नैमिषे नैमिषारण्ये वसेच्चेद्धरिमाराधयन् वसेदिति भावः। तत्र तदरण्यस्य भगवद्भावेन शिष्टजनसेवितचरत्वमाह- **मुनीशसेव्य** इति। मुनीशानां शौनकादीनां तीर्थबुद्ध्या सेव्ये

पदपरामर्शः

सेवनीये वैष्णवक्षेत्रत्वात्। तत्र क्षेत्राधिपतिं नाम्नाह- **हरिमिति**। आश्रितविपद्धारितया पुराणादौ प्रथितयशसं पुरुषोत्तमं भगवन्तमित्यर्थः। नैमिषनामकरणे तद्वैष्णवक्षेत्रत्वे चाह श्रीधरस्वामी- ब्रह्मणा विसृष्टस्य मनोमयस्य चक्रस्य नेमिश्शीर्यते कुण्ठीभवति यत्र तन्नेमिशं, नेमिशमेव नैमिशम्। तथा च वायवीये- एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते, यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः, इत्युक्त्वा सूर्यसङ्काशं चक्रं सृष्ट्वा मनोमयम्, प्रणिपत्य महादेवं विससर्ज पितामहः, तेऽपि हृष्टतमा विप्राः प्रणम्य जगतां प्रभुम्, प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत। तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम्। मूर्धन्यघटितपाठं वाराहपुराणकथां स्मृत्वोपपादयति- गौरमुखमृषिं प्रति भगवद्वचनम्-

एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा।
उवाच निमिषेणेदं निहितं दानवं बलम्।।
अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम्।
भविष्यति यथार्थं वै ब्राह्मणानां विशेषकम्।।

अनिमिषः श्रीविष्णुरलुप्तदृष्टित्वात्तस्य क्षेत्रे तथा चात्रैव शौनकादिवचनम्- क्षेत्रेऽस्मिन् वैष्णवे वयमिति। इत्थं नैमिषे हरिं पूजयन् वसेदिति भावः।

**शालग्राममममोघदिव्यफलदं देवं हरिक्षेत्रतो[1]-**
**ऽध्यायां रघुपुङ्गवं गुणनिधिं श्रीरामचन्द्रं प्रभुम्।**
**सत्स्थाने मथुराभिधाश्रमवरे श्रीबालकृष्णं परं**
**मायायां मधुसूदनं सुरनरध्येयाङ्घ्रिपद्मं सदा[2]।।191।।**

पदपरामर्शः

शालग्रामशिला यत्र पूज्यते पुरुषोत्तमैः। तत्र योजनमात्रन्तु तीर्थकोटीसमन्वितम्,

संवित्करः

हरिक्षेत्र में अमोघफल प्रदान करनेवाले श्रीशालग्रामभगवान्, श्रीअयोध्याजी में रघुकुलश्रेष्ठ, सकल दिव्यगुणों के सागर श्रीरामचन्द्रजी, साधुसन्त महात्माओं द्वारा सेवित श्रीमथुराजी में श्रीरुक्मिणी सहित श्रीबालकृष्ण, तथा मायातीर्थ (हरिद्वार) में श्रीमधुसूदन भगवान् निवास करते है। (अतः वैष्णवों को इन तीर्थस्थलों में तत्तद्देवतार्चनपूर्वक निवास करना चाहिए।)

---

[1] पा. भे.- के।

[2] पा. भे.- हरिजनो नित्यं मुदा पूजयेत्।

पदपरामर्शः

इत्युक्त्या तत्पूजनस्थलपावनताया अधिगमो भवति, यच्च तदाविर्भावस्थलं तत्पावनता कथं कथ्येतेति तदर्चावतारभूमित्वेन श्रीहरिक्षेत्रं, तत्र वासेन निसर्गत एव वैष्णवाणां तत्रत्यं नित्यार्चनीयभगवत्सेवासन्निधानसुखसौलभ्यञ्च स्मरन्नाह- **शालग्राममित्यादिना।** हरिक्षेत्रत इत्यत्र तस्यादित उदात्तमर्धह्रस्वमिति सूत्रोक्तं लिङ्गमनुस्मृत्याद्यादे-राकृतिगणत्वात्सप्तम्यर्थे तसिः। हरिक्षेत्र इत्यर्थः। तत्रामोघदिव्यफलदं देवं शालग्राममाराधयन् वैष्णवो वसेदिति विवक्षानुगुणपदसन्धानम्। हरिक्षेत्रं शालग्रामक्षेत्रं पुलहाश्रम इत्यनर्थान्तरम्। यत्स्वरूपमाविष्कुर्वन्नाह भगवान् बादरायणो भागवते- "य ह वाव भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यत इच्छारूपेण। यत्राश्रमपदान्युभयतो नाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति।" तत्र पूज्यस्वरूपमाह- **शालग्राममिति।** हरिक्षेत्रे गण्डक्यां विद्याधरकुण्डे समाविर्भूतं भगवदर्चाविग्रहम्, यत्र नित्यं सन्निहितो हरिरित्युक्तेः। शाड़ृ श्लाघायामित्यतो डलयोरभेदाच्छाल्यते प्रशस्यत इति शालो गुणः, शालानां दिव्यगुणानामपराधसहिष्णुत्व-सौशील्यकारुण्यौदार्यादीनां ग्रामः समूहो यत्रेति व्यधिकरणबहुव्रीहौ शालग्रामपदमनन्त-कल्याणगुणनिलयपरम्। वाङ्मनसागोचरत्वेन दुरधिगमोऽपि भगवान् करुणया स्वार्चकेभ्यः स्वात्मानमुपलम्भयति, अतस्तदर्चनस्य भक्तैः सुखसाध्यतैवमुच्यते-

तुलसीदलमात्रेण जलस्य चुलुकेन वा।
विक्रीणीते स्वामात्मानं भक्तेभ्यो भक्तवत्सलः।।

अत एव भक्ताय मोक्षं धारयति हरिरित्यत्र भक्तस्योत्तमर्णत्वेन हरेश्चाधमर्णत्वेन तन्निबन्धना विभक्तिव्यवस्था। परिजनानुरागविरचितशबलसंशब्द-सलिलसितकिसलयतुलसिकादूर्वाङ्कुरैरपि सम्भृतया सपर्यया किल परम परितुष्यसीति भगवन्तमुद्दिश्यर्त्विग्जनोक्तेः। पाषाणाकारतया प्रतीतौ जडत्वाशङ्कायामाह- **देवमिति।** सर्वभूतेष्वात्मतया दीव्यति द्योतत इति देवः परमात्मा, दीव्यति नित्यं मोदत इति देवः, मोदते भगवान् भूतैर्बालः क्रीडनकैरिवेत्युक्तेः। देवशब्देन पूज्यत्वमुक्तम् एको देव इति मन्त्रवर्णात्। देवो दानाद्दीपनाद्द्योतनाद्वेति निर्वचनोक्तदातृत्वमनुसन्धायाह- **अमोघदिव्यफलदमिति।** तत्सेवाया निष्फलत्वशङ्काया अत्यन्तासंभावनोच्यते-ऽमोघेत्यनेन, दिव्यफलेत्यनेन च भक्तिः सायुज्यं वा प्रोच्यते, उभयोः परमफलत्वेनोक्तेः। सकृदंभ्यर्चितो विष्णुः शालग्रामशिलास्थितः, ददाति विपुलां मुक्तिं

..........................................................पदपरामर्शः..........................................................

सर्वसङ्गविवर्जिताम्। जन्मकोटिसहस्रेण पूजिते मयि यत्फलम्। तत्फलं समवाप्नोति शालग्रामशिलार्च्चनात्। अर्चावतारभूमितया वासयोग्यं हरिक्षेत्रमुक्त्वा स्वकीय-परमाराध्यस्य सर्वावतारिणो भगवतो रामचन्द्रस्य तदवतारभूतस्य तदभिन्नस्वरूपस्य कृष्णस्य भगवत्पादतीर्थभूतगङ्गायाश्चावतरणस्थलं वैष्णवजननिवासयोग्यतया निश्चिनोति- **अयोध्यायामित्यादिना**। अयोध्यायां श्रीरामचन्द्रं समर्चयन् वैष्णवो वसेदित्याशयः। अयोध्या च सप्तसु मोक्षदायिपुरीषु सर्वाभ्यर्हितत्वात्प्राथम्येन सम्प्रोक्ता, परमधार्मिकैः सूर्यवशोद्भवै राजभिः समाराधिता साकेतापरपर्याया अष्टाचक्रा नवद्वारा देवानां पूरयोध्येत्यादिमन्त्रैराम्नाता मुमुक्षजनोपसेविता, वैष्णवैश्च दिव्यभगवदवतार-स्थलत्वेन दिव्यदेशतया परिगणिता विरक्तजनराजधानी श्रीरामनगरी, यत्र भगवत्करुणेव प्रवहन्ती वासिष्ठी सरयूर्नाम सरित्प्रवराशेषकल्मषं क्षपयति। यत्परिचयमाहादि-कविरेवम्-

> कोशलो नाम मुदितः स्फीतो जनपदो महान्।
> निविष्टः सरयूतीरे प्रभूतधनधान्यवान्।।
> अयोध्या नाम नगरी तत्रासील्लोकविश्रुता।
> मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्।।

विष्णोराद्या पुरी चेयं क्षितिं न स्पृशति द्विज। विष्णोः सुदर्शने चक्रे स्थिता पुण्यकरी स्थितौ।। न योद्धुं शक्येत्ययोध्यापदव्युत्पत्त्या अयधवर्णघटितत्वाच्चेयं त्रिदेवमयी निरुच्यते।

> अकारो ब्रह्म च प्रोक्तं यकारो विष्णुरुच्यते।
> धकारो रुद्ररूपश्च अयोध्यानाम राजते।।

यत्र कृतं कर्माक्षय्यं भवति, यत्र प्रयागोऽप्यात्मशुद्ध्यर्थमायाति-

> जप्तं दत्तं हुतं दृष्टं तपस्तप्तं कृतञ्च यत्।
> ध्यानमध्ययनं सर्वं दानं भवति चाक्षयम्।।
> यत्र प्रयागराजोऽपि स्नातुमायाति कार्तिके।
> शुद्ध्यर्थं साधुकामोऽसौ प्रयागो मुनिसत्तम।।

तत्रार्चनीयदेवमसाधारणनाम्ना सर्वलोकविश्रुतेन निर्दिशति- **श्रीरामचन्द्रमिति**। नित्यश्रीविशिष्टं रामचन्द्रम्, नाम्नि श्रीयोगात्पूज्यतमत्वमुक्तम्। सर्वावतारिणमयोध्यानाथं

श्रीभगवन्तमित्यर्थः। तं त्रिभिर्विशिनष्टि- प्रभुं गुणनिधिं रघुपुङ्गवमिति। प्रभुमित्यनेन सर्वेश्वरत्वम्, गुणनिधिमित्यनेन शरण्यत्वसौशील्यधर्मिष्ठत्वादिगुणाकरत्वसूचनेन वरेण्यत्वम्, रघुपुङ्गवमित्यनेन प्रशस्तवंशप्रसूतत्वलक्षणाभिजात्यञ्चोच्यते। रघुषु रघुवंशोद्भवेषु राजसु पुङ्गवः श्रेष्ठ इति विग्रहे सप्तमीति योगविभागात्समासः। सप्तपुरीषु प्रथमाया अयोध्यायाः कथनादेकसम्बन्धिज्ञानमपरसम्बन्धि-स्मारकमितिन्यायान्मथुरादिस्मरणात्तासामपि निवासयोग्यतया स्मरणं तत्रापि तदनन्तरवर्तित्वात्प्रथमं मथुरामेव स्मरति। श्रीरामकृष्णयोस्तात्त्विकमैक्यमनुसन्धाय श्रीकृष्णावतारस्थलं वैष्णववासयोग्यत्वेनाह- **सत्स्थान** इति। स्थीयतेऽस्मिन्निति स्थानं वास सतां महात्मनां स्थाने। मथुराऽभिधा यस्येति मथुराभिधे आश्रमेषु वरे श्रेष्ठे वैष्णवो वसेत्, मोक्षदायिपुरीष्वन्यतमत्वात्तत्र निवसतां पापराशेर्नाशकत्वाच्च मथ्यते पापराशिर्ययेति व्युत्पत्तेः। अस्या अप्ययोध्यावत्पृथ्वीमध्ये परिगणनं नेति भूतशुद्धितन्त्राद्विज्ञायते, तद्यथा-

श्रीरामधनुरग्रस्था अयोध्या सा महापुरी।
मथुरा केशवोत्सृष्टसुदर्शनविधारिता।।

तादृशपुण्यतीर्थनिवासिभिराराध्यमाह- **श्रीबालकृष्णमिति**। बालं मुकुन्दमित्यर्थः। कंसकारागृहे लब्धाविर्भावस्य भगवतस्तदाकारेणैवोपास्यत्वात्तथोक्तिः। तत्र बालसुलभ-मौग्ध्यारोपादचिरेण सुखप्रसादनीयत्वमुच्यते। कथं बालस्य तथाविधैर्महज्जनै-रुपास्यत्वमित्यत आह- **परमिति**। उत्कृष्टतमम् प्रकृतिपुरुषयोरुत्कृष्टमीश्वरमित्यर्थः। यद्वा परं पुरुषं पुरुषोत्तममित्यर्थः। नात्र तमसः परस्तादित्यादाविव दिगर्थे परशब्दः, पुरुषः स परः पार्थः, मत्तः परतरं नान्यत्, मोहितं नाभिजानाति मामेभ्यः परमव्ययमित्यादावुत्कृष्टवाचकपरशब्दप्रयोगात्। ईश्वरत्वाद् बालरूपेणावस्थितस्य नैश्वर्ये मनागपि नैयून्यमिति द्योतयितुमेव बालशब्दात्प्राक् श्रीशब्दप्रयोगः। अन्यथा श्रीकृष्णाय वयं नुम इत्यादिप्रयोगवत्कृष्णशब्दात्प्रागेव श्रीपदं प्रयुञ्ज्यात्। भगवत्पादाम्बुजनिःसृताया भागीरथ्या भुव्यवतरणस्थलीयं माया हरिद्वारमित्यनेके निश्चिन्वन्ति, केचन नवद्वीपाद् गङ्गापारं मायापुरीमिति प्रथितां मायामाहुः अतश्श्लोके तृतीये हरिद्वारस्य पृथगुपादानम्। मायापुर्यां वासेन मायासमुत्तरणं कथं स्यादित्यत्राह- **मधुसूदनमाराधयन् वसेत्**। मधुं

पदपरामर्शः

तन्नामानमाद्यसुरं यः सूदयति, तदाराधकं प्रति मायाप्रभावस्याकिञ्चित्करत्वात्। यथोक्तं ब्रह्मवैवर्ते-

परिणामाशुभं कर्म भ्रान्तानां मधुरं मधु।
करोति सूदनं यो हि स एव मधुसूदनः॥

मधुसूदनशब्दस्य भ्रमरवाचकत्वेनान्यथाप्रतिपत्तौ विशेषणेन तदैश्वर्यमाह- **सुरनरध्येयाङ्घ्रिपद्ममिति।** सुराश्च नराश्चेति सुरनरास्तैर्ध्येये अङ्घ्रिपद्मे यस्य तम्। नरापेक्षयोत्कृष्टत्वात्सुरशब्दस्य पूर्वप्रयोगः। एतेनोभयोः कर्मवश्यतया तदुपासकत्वं तदपेक्षया हीनत्वं च सुतरां गम्यते। नासौ भ्रमरोऽपितु देवमनुष्यादेस्तत्पादपद्म-भ्रमरत्वमिति भावः। अतो देवमनुष्यादिसाधारण्येन तद्ध्यानस्य स्मरणस्य फलमित्थं वर्णितं ब्रह्मवैवर्तपुराणे-

महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम्।
विपत्तौ तस्य सम्पत्तिर्भवेदित्याह शङ्करः॥

**काश्यां भोगिशयं सनातनमथावन्त्यामवन्तीपतिं**
**श्रीमद्द्वारवतीतिनाम्नि शुभदे श्रीयादवेन्द्रं मुदा।**
**रम्ये श्रीव्रजनामके सुरनतं गोपीजनानां प्रियं**
**ब्रह्मेशादिकिरीटसेवितपदाम्भोजं भुजङ्गाश्रयम्॥192॥**

पदपरामर्शः

मरणं मङ्गलं यत्रेत्युक्तेः काशते या सेति व्युत्पत्तेश्च सर्वलोकविश्रुतायां काश्यां भोगिशयेत्याख्यं सनातनं भगवन्तं पूजयन् वसेत्। भोगः फणो वक्रगतिर्वास्यास्तीति भोगी सर्पः, तत्र शेते शयनशीलो भगवान् शेषशायी नारायणस्तम्। यद्वा कर्मपारवश्यात्सुखदुःखान्यतरसाक्षात्कारवान् भोगी जीवस्तत्र शेते निवसतीत्यन्तर्यामिणं भगवन्तम्। सना सर्वदा भवं विद्यमानं सनातनं सायञ्चिरमित्यादिना ट्युल्तुटौ। नित्यमुत्पतिविनाशरहितमित्यर्थः। अवन्त्यामुज्जयिन्यां शिप्रातटेऽवस्थितायां मोक्षदायिन्यां

संवित्करः

काशी तीर्थ (वाराणसी) में सनातन श्रीभोगिशयन भगवान्, अवन्तिनामक पुण्यतीर्थ में श्रीअवन्तीपति, द्वारिका में श्रीयादवेन्द्र तथा अत्यन्त रमणीय तीर्थ व्रज में श्रीगोपीजनप्रिय निवास करते हैं जो ब्रह्मादि देवों से भी सेवित है।

.........................................................पदपरामर्शः.........................................................

पुर्यामवन्तीपतिमेतन्नामकं देवं पूजयन् वसेत्। **पतिशब्दस्य** पालकपरत्वेन भर्तृवाचकतया तस्या राज्ञो बोधे तद्वारणाय सनातनपदस्यात्राप्यन्वयेन सनातनमवन्तीपतिं पूजयन्नित्यर्थलाभाद् भगवद्बोधः, सनातनस्वामित्वस्येश्वर एव सत्त्वात्। क्रमप्राप्तां द्वारकां स्मरति- **श्रीमद्द्वारवतीतिनाम्नीति**। श्रीमती चासौ द्वारवतीति कर्मधारये पुंवद्भावेन श्रीमद्द्वारवती द्वारकेति यावत्। चतुर्वर्णानां मोक्षप्रदानि द्वाराणि सन्त्यत्र सा द्वारवती। **श्रीमदिति** नित्यविभूतियोगं नित्यभगवत्सन्निधानप्रयुक्तनित्यशोभासमृद्धिं च सूचयति। अतस्तत्र वासं विशिनष्टि **मुदेति**। **इतिपदं** प्रसिद्धिं द्योतयति। शुभं मोक्षं ददातीति शुभदे कल्याणप्रदे भगवद्धाम्नि, यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यत इति भागवतोक्तेः-

> अपि कीटपतङ्गाद्याः पशवोऽथ सरीसृपाः।
> विमुक्ताः पापिनः सर्वे द्वारकायाः प्रभावतः।।
> किं पुनर्मानवा नित्यं द्वारकायां वसन्ति ये।
> या गतिः सर्वजन्तूनां द्वारकापुरवासिनाम्।।
> सा गतिर्दुर्लभा नूनं मुनीनामूर्ध्वरेतसाम्।।

तत्र पूज्यं देवमाह- **श्रीयादवेन्द्रमिति**। यदोरपत्यानां यादवानामिन्द्रं श्रेष्ठं कृष्णं, तत्रापि श्रीविशिष्टधामानुगुण्येनाष्टोत्तरषोडशसहस्रपत्नीभिर्नित्ययोगान्नित्यश्रीकम् श्रीयादवेन्द्रं श्रीद्वारकाधीशमिति यावत्। भगवतो व्रजलीलां स्मृत्वा तत्र निवासं तत्रोपास्य-देवमनुस्मरन्नाह- **रम्य** इति। रम्येऽतितरां रमणीये श्रीव्रजधामके व्रजेत्याख्ये नित्यश्रीधाम्नि वसेत्- अत्यन्तप्रशस्तत्वात्, जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हीति गोपीजनोक्तेः, व्रजन्ति वासार्थमत्र वैष्णवा इति व्रजपदनिर्वचनाच्च। कृष्णमयत्वात्तत्राराध्यस्य सुग्राह्यत्वमाह- **गोपीजनानां प्रियमिति**। एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावा इत्यादिवचोभिः प्रथितयशसां गोपीजनानां प्रियं नित्यप्रियं जीवातुभूतं सर्वस्वभूतम्, गोपीजनवल्लभमित्यर्थः। तदीयैश्वर्यं द्योतयितुं त्रिभिर्विशेषयति- **सुरनुतं देववन्दितम्, ब्रह्मेशादिकिरीट-सेवितपदाम्भोजं** विरिञ्चिरुद्रमुकुटार्चितचरणारविन्दम्, एतेनेन्द्रब्रह्मादिभिः कृतस्य वन्दनादेः प्रसङ्गोऽनुसन्धीयते। भुजङ्गश्शेष आश्रयो यस्य तं साक्षान्नारायणमिति। यद्वा कालियं तत्फणमाश्रयते नर्तकमुद्रया यस्तथाविधं नटवरम्, तेन दुष्टदमनशीलमुक्त्वा

.........................................................पदपरामर्शः.........................................................

कालस्यापि नियमने सामर्थ्यं प्रकाश्यैश्वर्यं सूचितम्। तत्र निवसतां सर्वविधं विघ्नजातं स्वयं भगवानेव शमयतीति भावः।

**वृन्दावने सुन्दरनन्दसूनुकं गोविन्दमेवं त्वथ कालियह्रदे।**
**गोवर्धने गोपसुवेषधारिणं तथा भवघ्नेऽपि च पद्मलोचनम्॥193॥**

.........................................................पदपरामर्शः.........................................................

व्रजक्षेत्रं वासयोग्यतया संस्तुत्य भारते व्रजभूः श्रेष्ठा तत्र वृन्दावनं परमित्युक्तेर्धन्यं वृन्दावनं तेन भक्तिर्नृत्यति यत्र चेति पाद्मोक्तेश्च श्रीधामतया भक्तिपोषणकामनिषेवणीयतया चाह- **वृन्दावन इति।** वृन्दावने सुन्दरनन्दसूनुकं भजन् वसेद्वैष्णव इति विवक्षितम्। यत्र गोविन्दचरणप्रियायाः श्रीवृन्दायास्तुलस्या परम्परया योगस्तत्र भगवद्भावो वैष्णवाणां किमुत यच्च वृन्दाया वनं तत्र भक्तचित्त-विहरणशीलस्य भगवतो नित्यविहारे कः सन्देहः। अत उक्तं वृन्दावनं परित्यज्य पादमेकं न गच्छति। भगवता चोक्तं गौतमीये- पञ्चयोजनमेवास्ति वनं मे देहरूपकमिति। भगवल्लीलास्मारकत्वाद् भक्त्योघवर्धकत्वाद् भगवद्भागवतदर्शनसङ्ग-प्रीत्युपलम्भकत्वेन तत्पादरजःप्राप्तिधन्यतापादकत्वाच्च तत्र वासः कार्यः। यत्प्राशस्त्यमुक्तं भागवते- वृन्दावनं सखि भुवो वितनोति कीर्तिं यद्देवकीसुतपदाम्बुज-लब्धलक्ष्मि गोविन्दवेणुमनुमत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्ततत्त्वम्। तत्र समभ्यर्च्यस्वरूपमाह- **सुन्दरनन्दसूनुकमिति,** तत्प्रधानधामत्वात् अखिललोकचित्ता-पहारकशोभासम्पदमाह- **सुन्दरेति,** तेन सुग्राह्यत्वमुक्तम्। सुन्दरश्चासौ नन्दसूनुक-स्तमिति। ह्रस्वे कः, सुकुमारलीलामधुरं नन्दनन्दनं भजन् तत्र वसेदिति भावः। तदनु कालियमर्दनलीलां संस्मृत्य कालियह्रदस्यापि भगवल्लीलास्थलत्वेन तत्र वासे विनियुङ्क्ते- **गोविन्दमिति।** कालियह्रदे कालियस्य नागविशेषस्य ह्रदोऽगाधजलः कुण्डविशेषः, तत्रागाधजलो ह्रद इत्यमरकोषात्। पूर्ववासनिबन्धनाऽख्या। कालियह्रद इत्यत्र गङ्गायां घोष इति प्रयोगवत् सामीप्ये लक्षणा, मुख्यार्थबाधात्। तत्र भजनीयदेवविशेषसमाख्यामाह- **गोविन्दमिति।** गां भुवं विन्दति भक्तेषु कारुण्याद्यः स

-------------------------------**संवित्करः**-------------------------------

**श्रीवृन्दावन में श्रीनन्दनन्दनभगवान्, कालियह्रद में (यमुनाजी के तटपर) श्रीगोविन्द, गोवर्धन (पुण्यतीर्थ) में श्रीगोपवेषधारी भगवान् गोपाल तथा भवघ्ननामक तीर्थ में श्रीपद्मलोचन भगवान् विराजते हैं।**

पदपरामर्शः

भगवान् गाविन्द इत्युच्यते, गवादिषु विन्देः सञ्ज्ञायामिति शः। अत्र तु महाविषधरं निगृह्य ह्रदान्निवार्य भक्तजनरक्षार्थं गामगाधजलमपि विन्दतीत्याश्रितरक्षापरो भगवान् तथा प्रोक्तः। विन्दतीति विन्दः गोः पृथिव्या विन्दः पालको गोविन्द इति व्युत्पत्तेः। अतस्तादृशं गोविन्दं चिन्तयन् कालियह्रदसमीपे वैष्णवो वसेदिति। भागवते तु तत्र स्नानदेवपूजनभगवत्स्मरणार्चनादेः सर्वपापनिवर्तकत्वमुक्तम्-

योऽस्मिन् स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः।
उपोष्य मां स्मरन्नर्चेत् सर्वपापैः प्रमुच्यते।।

प्रत्यासत्त्या तदनन्तरलीलानुसन्धानाद्गोवर्धनवासे प्रेरयति- **गोवर्धन** इति। स्वनामख्यातश्रीवृन्दावनसमीपस्थितपर्वतविशेषः। गाः वर्धयति, गावो वा वर्धन्तेऽत्र, कोमलतृणपत्रादिसम्पत्त्या स गोवर्धनः। गोशब्दस्य ज्ञानपरत्वे भगवदुपासनात्मकज्ञान-वर्धकत्वेन तत्र वासादेर्युक्तत्वम्। भगवद्रूपत्वाद् तत्र वासो भगवदाश्रयणं, तदाश्रितानां रक्षको भगवानेव सुरराजकोपाद्रक्षणकथायाः प्रसिद्धेः। तत्र वासेन भागवतसंश्रयविधिरपि फलति श्रीकृष्णदासवर्योऽयं श्रीगोवर्द्धनभूधर इत्युक्तेः। तस्य भक्तिवर्धनानुगुणस्वरूप-वैभवमुक्तं भागवते-

हन्तायमद्रिरवला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः।
मानं तनोति सहगोगणयोस्तयोर्यत्पानीयसूयवसकन्दरकन्दमूलैः।।

तत्प्रदक्षिणादेर्भगवद्धाम-प्राप्तिफलकत्वं पाद्म उच्यते-

मथुरायां तथा साक्षात्कृत्वा चैव प्रदक्षिणम्।
वैष्णवं धाम सम्प्राप्य मोदते हरिसन्निधौ।।

गिरिराजधरणं विहाय को वाऽन्यस्तत्रार्चनीयो भवेदिति मनसि निधायाह- **गोपसुवेषधारिणमिति।** गोपानां मयूरवर्हगुञ्जावतंसवेत्रविषाणादिविशिष्टतया यः सुवेषः, तं धर्तुं शीलं यस्य, तादृशं गोपरूपं भगवन्तं गोपालं भजन् गोवर्धने वसेदिति भावः यथा भक्तो भक्त्योर्ध्वपुण्ड्रादिकं भगवच्चिह्नं धारयति, तथैव भगवानपि क्वचित्तथाविधैः सह नीरन्ध्रसंश्लेषेण स्वकीयेन कृतार्थयितुं तत्समाश्रयणा-नुगुण्यनिर्वाहार्थं न केवलं तेष्वपितु तदीयरूपगुणचेष्टितादिषु स्वप्रियतां द्योतयितुं तदानुरूप्यं धत्त इति भावः। एतेन कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गत इति भागवतोक्तार्थः स्मारितः। युक्तमाह कविकुलगुरुर्मेघदूते-

..........पदपरामर्शः..........

येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते।
बर्हेणैव स्फुरितरुचिना गोपवेषस्य विष्णोः।।

पद्मलोचनाख्यं भगवन्तं सेवमानो वैष्णवो भवघ्नाख्ये तीर्थे च वसेदिति तुरीयपादार्थसङ्क्षेपः।

**शारिं तथा गोमत एव पर्वते तथा हरिद्वार ऋजुं जगत्पतिम्।**
**तीर्थे प्रयागे वत माधवाभिधं तथा गयायां तु गदाधरं परम्।।194।।**

..........पदपरामर्शः..........

गोमताख्ये पर्वते शारीत्याख्यं भगवन्तमाराधयन् वसेद्धरिद्वारे च ऋजुं जगत्पतिं भजन्। हरिद्वारन्तु हरेर्बदरीनारायणस्य प्राप्तेर्द्वारमिवास्ति। गङ्गाद्वारमित्यप्युच्यते। तत्र जगत्पतिं सर्वपालकं चराचरस्वामिनं पूजयन् वसेत्। तं विशिनष्टि- **ऋजुमिति।** प्रकृत्यैवाश्रितेषु कौटिल्यरहितमित्यर्थः, सर्वथा विश्वसनीयमिति भावः। अत उक्तं रामायणे- ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रम इति। भगवत्सम्बन्धात्स्वावतारस्थलं सहर्षं स्मरति- **तीर्थ** इति। **बतेति** हर्षे। तरति पापादिकं यस्मादिति व्युत्पत्त्या तीर्थं स्नानवासादिना पापनिवर्तकं भवति। प्रयागस्तु न केवलं तीर्थमपितु तीर्थराजः। यथोक्तं पाद्मे-

ब्राह्मीनपुत्रीत्रिपथास्त्रिवेणी-
समागमेनाक्षतयोगमात्रान्।
यत्राप्लुतान् ब्रह्मपदं नयन्ति
स तीर्थराजो जयति प्रयागः।।
श्यामो वटोऽश्यामगुणं वृणोति।
स्वच्छायया श्यामलया जनानाम्
श्यामः श्रमं कृन्तति यत्र दृष्टः
स तीर्थराजो जयति प्रयागः।।

नाम्नापि तत्प्राशस्त्यमुच्यते- प्रकृष्टो योगो यत्रेत्यन्वर्थनामा प्रयागः। यदाह-

यत्पुण्यं त्रिषु लोकेषु वेदविद्यासु यत्फलम्।
स्नातमात्रस्य तत्पुण्यं गङ्गायमुनसङ्गमे।।

अस्य मुक्तिदायकत्वं कविकुलगुरुणा ललितरीत्योन्नीयते-

----------संवित्करः----------

गोमत नामक पर्वत पर श्रीशारि भगवान्, हरिद्वार में श्रीजगत्पति भगवान्, तीर्थराजप्रयाग में श्रीवेणीमाधव तथा गयातीर्थ में भगवान् श्रीगदाधर निवास करते हैं। (अतः वैष्णवों को इनका पूजन करते हुए निवास करना चाहिए।)

**पदपरामर्शः**

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात्।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः।

तत्रोपास्यं प्रधानदेवताविशेषं वक्ति- **माधवाभिधमिति**। माधवेत्यभिधा यस्य तं वेणीमाधवं, नामैकदेशग्रहणे नामग्रहणमिति न्यायात्। मायाः लक्ष्म्या धवं पतिं रमापतिम्। यद्वा मधौ चैत्रमासे भवं माधवं श्रीराममित्यर्थः। पितृतीर्थत्वेन प्रथितायां गयायामपि वैष्णवानां भगवत्स्मृतिपूर्वकनिवासः श्रेयस इत्याह- **गयायान्त्विति**। गयनाम्ना राजर्षिणैतन्नाम्नाऽसुरेण वा निर्मिता पुरी गया। तत्क्षेत्रपरिमाणञ्च-

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः।
तन्मध्ये सर्वतीर्थानि त्रैलोक्ये यानि सन्ति वै।।

वस्तुतोऽत्र विष्णुपदाख्यं प्रमुखं मन्दिरं फल्गुनदीतटेऽवस्थितं भगवत्पादचिह्नाङ्कितवेदीयुक्तमिति वैष्णवक्षेत्रम्। अतोऽत्रत्यं प्रधानदेवमाह- **गदाधरमिति**। धरतीति धरो गदाया बुद्धितत्त्वात्मिकायाः कौमोदिक्या धरो गदाधरो विष्णुस्तम्। गदाधरत्वेन दिव्यायुधसम्पत्त्या भगवतः समाश्रितरक्षादीक्षितत्वं सूच्यते। यद्वा गदति मधुरं वदतीति गदा मुरली, सा अधरे यस्य तं श्रीकृष्णम्। यद्वा गदा तच्चिह्नम् अधरे पादतले यस्य तं श्रीरामचन्द्रम्। तादृशं भगवन्तं वरिवस्यन् गयायां वसेदिति भावः। भीमदुर्योधनादेरपि गदाधरत्वेन प्रसिद्धेस्तद्वारणायेश्वरबोधकं **परमिति** विशेषणम्।

**गङ्गासागरसङ्गमेऽतिशुभदे विष्णुं तथा राघवं**
**शश्वद् भूरिगुणालये मुनिवृते श्रीचित्रकूटे विभुम्।**
**नन्दिग्राम उदारकीर्तिनिकरे श्रीराक्षसघ्नं प्रभुं**
**रम्ये श्रीमति[1] विश्वरूपिणमथो क्षेत्रे प्रभासेऽमले।।195।।**

**पदपरामर्शः**

गङ्गासागरसङ्गमेत्याख्ये शुभदे कल्याणप्रदे स्थले विष्णुं कपिलाख्यमाराधयन्

**संवित्करः**

गंगासागर में श्रीविष्णुभगवान् तथा मुनियों द्वारा सेवित अत्यन्त रमणीय श्रीचित्रकूटधाम में विभु (व्यापक) श्रीराघवेन्द्रसरकार स्वयं विराजते हैं। नन्दीग्राम में श्रीराक्षसघ्न तथा प्रभासक्षेत्र में दिव्यस्वरूप विश्वरूप भगवान् विराजते हैं।

[1] पा. भे.- प्रार्चेच्छ्रीमति।

पदपरामर्शः

वसेत्, श्रीचित्रकूटे विभुं राघवं भजन् वसेत्। रघोरपत्यं पुमान् राघवो रामचन्द्र इति। दशरथादेरपि राघवत्वात्तद्व्यावृत्तये **विभुमिति**। सर्वव्यापकं परमात्मानमित्यैश्वर्य-मुक्त्वोपास्यत्वं द्योतितम्। राघवमिति दयादाक्षिण्यमाधुर्यास्तिक्याद्यनेकगुणसन्ततिः सूचिता। चित्रकूटपदेन मनोज्ञत्वं, मुनिवृत इति विशेषणेन मुनिजनसञ्चारपावनतया साधनानुगुणसत्सङ्गादिलाभः, शश्वद्भूरिगुणालय इत्यनेन सत्त्वगुणोदयानुरूपमन्दाकिनी-स्नानपानपुष्पफलादिप्राकृतसंसाधनसम्पद् वासोपयुक्ता च सूच्यते। यद्वा शश्वदिति क्रियायामन्वयेन श्रीचित्रकूटे विरक्तवैष्णवः शश्वद् वसेदिति लभ्यते। भगवद्वासपवित्रितस्थलतयाऽतितरां तपसोऽनुरूपत्वात्। यथोक्तं रामायणे-

मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः।
बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे।।
मुनयश्च महात्मानो वसन्त्यस्मिञ्शिलोच्चये।
अयं वासो भवेत्तात वयमत्र वसेमहि।।
यावता चित्रकूटस्य नरःशृङ्गाण्यवेक्षते।
कल्याणानि समाधत्ते न पापे कुरुते मनः।।
न राज्यभ्रंशनं भद्रे न सुहृद्भिर्विनाभवः।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम्।।

चित्रकूटस्मृत्योद्बुद्धसौभ्रात्रभूषणभरतस्य श्रीरामप्रेममूर्तेरनुस्मरणेन तत्तपःसाधनस्थले नन्दिग्रामेऽपि भक्तिकामनया वासो विधेय इत्यनुचिन्त्याह- **नन्दिग्राम** इत्यादिना। नन्दिग्रामस्य भगवत्पादुकापूजनपुण्यभूमितया तथाविधपरमभागवततपःस्थलत्वाच्च तीर्थोत्तमत्वम्, अनुक्षणभगवच्चिन्तनप्रीतिपुलकितगात्रस्य भगवद्विरहनिर्झरितेनेत्रजल-जातस्य श्रीभरतस्यानेकप्रीतिस्निग्धभक्तिप्रसङ्गगुम्फितदेशतया तं विशिनष्टि- **उदार-कीर्तिनिकर** इति। उदाराणां विशदानां भगवद्भागवतयोर्मिथोऽनुरागोद्बोधिकानां कीर्तीनां तत्रत्यजनैः कीर्त्यमानानां श्रूयमाणानाञ्च यशसां निकरो गणो यत्रेत्यधिकरण-प्रधानं विशेषणम् । तत्र वासेन नूनं भगवत्प्रेमावाप्तिरिति तदनुरूपं सेव्यस्वरूपं निश्चिनोति- **श्रीराक्षसघ्नमति**। रावणप्रभृतीन् राक्षसान् हन्तीति राक्षसघ्नो भगवान् न रामः श्रिया सहितो राक्षसघ्न श्रीराक्षसघ्नः श्रीरामस्तम्। ऋद्धस्य राजपुरुष इतिवत् न

..............................पदपरामर्शः..............................

श्रीपदस्य पदार्थैकदेशे राक्षसेऽन्वयः, न राक्षसनिग्रहाद्यवसरेऽपि भगवतः कारुण्यादिदिव्यगुणवियोगः, सौम्यत्वादिविग्रहशोभावियोगो वा भवति। तस्य तादृक्-सामर्थ्यमाह- **प्रभुमिति।** चराचरनियमनसमर्थस्य तेषा हनने कियान् आयास इति ध्वन्यते। श्रीमति समृद्धे रम्ये रमणीयेऽमले पुण्यतमे प्रभासे प्रभासाख्ये क्षेत्रे तीर्थे विश्वरूपिणं भगवन्तं पूजयन् वसेदिति। इदमेव सोमतीर्थम् उक्तं तन्माहात्म्यं शिवपुराणे-

प्रभासे च परिक्रम्य पृथिवीक्रमसम्भवम्।
फलं प्राप्नोति शुद्धात्मा मृतः स्वर्गे महीयते।।

भागवते च तद्विषय उक्तम्- वयं प्रभासं यास्यामो यत्र प्रत्यक् सरस्वतीति।

**श्रीकूर्माचल उत्तमे च सदयं कूर्मं सुरेशेडितं**
**नीलाद्रौ पुरुषोत्तमं त्वथ[1] महासिंहं च सिंहाचले।**
**श्रीमन्तं तुलसीवने तु गदिनं सर्वार्थदं तत्प्रिये**
**क्षेत्रे श्रीकृतशौचके तु सततं पापापहं चेश्वरम्[2]।।196।।**

..............................पदपरामर्शः..............................

उत्तमेऽनवद्ये श्रीकूर्माचले सुरेशेडितमिन्द्रवन्दितं सदयं परमकारुणिकं कूर्मं समुद्रमथनावसरे मन्दरधारणाय कच्छपरूपेणाविर्भूतं भगवन्तं पूजयन् वसेत्। यश्च भगवान् भागवते इत्थं प्रार्थितः- पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः। यत्संस्कारकलानुवर्तनवशाद्वेलानिलेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति।। नीलाद्रौ नीलाचले जगन्नाथपुर्यां पुरुषोत्तमनाम्ना विलसन्तं श्रीजगन्नाथं सेवमानो वसेत्। सिंहाचले विशाखापत्तनादुत्तर-दिशि विद्यमाने महासिंहं श्रीलक्ष्मीनृसिंहस्वामिनं भजन् वसेत्। तत्प्रिये भगवत्प्रिये

------------------------------संवित्करः------------------------------

कूर्माचल में परमदयालु देवपूजित श्रीकूर्मभगवान्, नीलाद्रिपर्वत पर श्रीपुरुषोत्तमभगवान् सिंहाचल में श्रीनृसिंह भगवान्, तुलसीवन में श्रीगदी भगवान् तथा कृतशौचकनामक तीर्थ में सर्वपापनाशक श्रीपापहर भगवान् निवास करते हैं।

---

[1] पा. भे.- किल।

[2] पा. भे.- पूजयेत्।

पदपरामर्शः

तुलसीवने एतन्नामके तीर्थे सर्वार्थदं सकलाभीष्टपूरकं श्रीमन्तं श्रिया सहितं विलसन्तं गदिनं गदिनामकं गदाधरं भगवन्तमर्चयन् वसेत्। श्रीकृतशौचकाख्ये क्षेत्रे पुण्यदेशे सततं सर्वदा पापापहेत्याख्यमीश्वरं भगवन्तं पूजयन् निवसेत्।

**श्वेताद्रौ त्वथ सिंहरूपिणमथो श्रीधर्मपुर्यां तथा**
**योगानन्दमशेषदेवसुनतं श्रीकाकुले तु प्रभुम्।**
**देवैर्वन्द्यमथान्ध्रनायकमिह श्रीदं तथाऽहोविले**
**तस्मिन् श्रीगरुडादिसंज्ञ उचिते देवं हिरण्यार्दनम्॥197॥**

पदपरामर्शः

श्रीरङ्गादुत्तरदिशि विद्यमाने दिव्यदेशे श्वेताद्रौ श्वेतगिरौ सिंहरूपिणं नृसिंहाकारकं भगवन्तं सेवमानो वसेत्, धर्मपुर्यामेतन्नामकनगर्यां योगानन्दाख्यम् अशेषदेवसुनतं सर्वसुरनमस्कृतं भगवन्तमर्चयन् निवसेत्। श्रीकाकुले काकुलनामकतीर्थे श्रीदं सर्वसम्पत्प्रदं देवैर्वन्दितमिन्द्रादिभिः संस्तुतं प्रभुं सर्वसमर्थमान्ध्रनायकेतिनाम्ना प्रथितं भगवन्तं पूजयन् निवसेत्, अहोविले वैष्णवतीर्थे तस्मिन्नपि श्रीगरुडादिसंज्ञे उचिते पर्वते हिरण्यार्दनेत्याख्यं नृसिंहं भगवन्तं समाराधता वासः कार्यः। श्रीगरुडादिसञ्ज्ञ इत्यत्रादिपदेन वेदाद्र्यादिग्रहणम्। हिरण्यार्दनेत्यत्र हिरण्यपदेन हिरण्यकशिपोर्ग्रहणम्, नामैकदेशग्रहणे नामग्रहणमिति न्यायात् यद्वा हिरण्यकशिपुहिरण्याक्षपदयोर्हिरण्यशब्दघटितत्वादुभयोः सामान्यग्रहणम्, तयोरर्दनं नाशकं भगवन्तं श्रीहरिमित्यर्थः।

संवित्करः

श्वेताचल पर श्रीसिंहरूपी भगवान्, श्रीधर्मपुरी में श्रीयोगानन्दभगवान्, काकुलतीर्थ में सकलदेववन्दित श्री आन्ध्रनायकभगवान् तथा अहोविल नामक प्रसिद्ध गरुडाद्रिपर्वतपर श्रीहिरण्यमर्दन निवास करते है, जो हिरण्याक्ष नामक असुर के विनाशक हैं।

**श्रीविठ्ठलं तं किल[1] पाण्डुरङ्गे श्रीवेङ्कटाद्रौ तु रमासखं च।[2]**
**नारायणं श्रीमति यादवाद्रौ नृसिंहमित्थं घटिकाचलेऽपि[3]॥198॥**

..........पदपरामर्शः..........

*महाराष्ट्रस्य तीर्थेषु पाण्डुरङ्गे पाण्ढरपुरे श्रीविठ्ठलेत्याख्यं श्रिया श्रीरुक्मिण्या सहितं विठ्ठलनामानं पण्ढरीनाथापरपर्यायं भगवन्तं भजन् निवसेत्, श्रीवेङ्कटाद्रौ श्रीवेङ्कटाचले रमायाः सखायं रमासखं श्रीश्रीनिवासं भावयन् वसेत् । दिव्यदेशोऽयं तिरुमलैपर्वतेऽवस्थितः, यत्रालर्मेलुमङ्गालक्ष्मीसमेत आनन्दनिलयविमाने पश्चिमाभिमुखमुत्तिष्ठन् भगवान् श्रीनिवासो दर्शनं प्रयच्छति लोकाय। श्रीमति यादवादौ श्रीयादवगिरौ ''मेलूकोटे'' इत्याख्ये श्रीवैष्णवदिव्यदेशे भगवन्तं नारायणं सेवमानो वसेत्, इत्थमेव घटिकाचले तिरुकुडिकैनाम्नि दिव्यदेशे सिंहगोष्ठविमानेऽमृतवल्लीलक्ष्मीसमेतं श्रीनृसिंहमर्चयन् वसेत्।*

----------संवित्करः----------

पाण्डुरंग (महाराष्ट्र) में श्रीविठ्ठल भगवान्, वेङ्कटनामक पर्वत पर भगवान् श्रीश्रीनिवास, तथा सकलशोभासम्पन्न यादवपर्वत पर श्रीनारायणभगवान् तथा घटिकाचल पर भगवान् श्रीनृसिंह विराजते हैं।

**सुरेन्द्रवन्द्यं वरदं त्वहर्दिवं सुनिर्मले श्रीशुभवारणाचले।**
**काञ्च्यां तथा श्रीकमलायताक्षकं समर्चनीयं बुधवैष्णवोत्तमैः॥199॥**

..........पदपरामर्शः..........

*काञ्चीपुरस्य दक्षिणे सुनिर्मले परमपावने श्रीशुभवारणाचले मङ्गलाकरे श्रीहस्तिगिरौ दिव्यदेशेऽहर्दिवमनुदिनं सुरेन्द्रवन्द्यं देवेन्द्रस्तूयमानं वरदं श्रीवरदराजेत्याख्यं भावयन् वसेत्। यश्च भगवान् करुणया पुण्यकोटिविमाने श्रीलक्ष्मीसमेतो विलसन् पश्चिमाभिमुखः सन्नुतिष्ठन् स्वदर्शनं प्रयच्छति। अहर्दिवमिति वसेत्, वरदं सुरेन्द्रवन्द्यमिति त्रिष्वप्यन्वेति। काञ्च्यां श्रीविष्णुकाञ्च्यामपि श्रीकमलायताक्षं वरदराजनामकमेव भगवन्तं ध्यायन् वसेत्, कमले इवायते अक्षिणी यस्य तं*

----------संवित्करः----------

परमपवित्र तथा सर्वशोभासम्पन्न श्रीहस्तिशैल पर सुरेन्द्रादिदेववन्द्य सनातन श्रीवरद नामक भगवान् तथा काञ्चीपुर में वैष्णवों के परमधन श्रीकमलनयन भगवान् निवास करते हैं।

---

[1] पा. भे.– श्री।

[2] पा. भे.– कमलासहायम्।

[3] पा. भे.– नृकेसरीशं घटिकाचले तु।

पदपरामर्शः

*पद्मविस्फारितलोचनं भगवन्तं सेवेत, तं विशेषयति-* **बुधवैष्णवोत्तमैः** *समर्चनीयमिति। बुधाश्च ते वैष्णवाः पण्डितवैष्णवास्तेष्वपि उत्तमैश्श्रेष्ठैः समर्चनीयं सविधि पूजनीयं भगवन्तमित्यर्थः। तत्र भगवान् विद्वद्भिर्वैष्णवजनैः शास्त्रोक्तविधिना समाराध्यत इति भावः।*

**तोताद्रिसंज्ञादिषु वैष्णवोत्तमैरेवं तथा तुङ्गशयादिकं प्रभुम्।**
**कार्यो निवासो नितरां शुभार्थिभिराराधयद्भिः सकलार्थदायिनम्।।200।।**[1]

पदपरामर्शः

*तोताद्रिः सञ्ज्ञा यस्य स दिव्यदेशस्तोताद्रिसञ्ज्ञस्तत्प्रभृतिषु दिव्यदेशेषु सकलार्थदायिनं सर्ववाञ्छितार्थदानशीलं तुङ्गशयादिकं तुङ्गशयादिसञ्ज्ञकं प्रभुं सर्वेश्वरं नितरां सर्वतोभावेन आराधयद्भिः शुभार्थिभिः परममङ्गलरूपमोक्षमर्थयमानैः वैष्णवोत्तमैर्वैष्णवश्रेष्ठैः निवासः कार्यः वसतिर्विधेयेति। तोताद्रिसञ्ज्ञादिष्वित्यत्रादिपदेन श्रीरङ्गश्वेतगिरिसुगन्धगिरि वैकुण्ठपुरमणिकूटश्वेतह्रदभद्राचलगृध्रक्षेत्रादीनां सङ्ग्रहः।*

संवित्करः

तोताद्रि आदि क्षेत्रों में सर्वार्थप्रद श्रीतुंगशायी आदि नाम वाले भगवान् निवास करते हैं। श्रेष्ठ वैष्णव उनकी अर्चना करता हुआ वहाँ निवास करे। इसप्रकार मुमुक्षु वैष्णवों को पूर्वोक्त पुण्यतीर्थक्षेत्रों में उन उन देवताओं की आराधना करते हुए इन तीर्थों में निवास करना चाहिए।

**सदानुसन्धेयमिमं त्रिकालं मुमुक्षुभिस्तत्परमार्थमित्थम्।**
**ज्ञात्वा न चैवास्ति सुवेदनीयं जिज्ञासुभिस्तैरविशिष्यमाणम्।।201।।**

पदपरामर्शः

*लघुकलेवरस्याप्यस्य ग्रन्थस्य मुमुक्षजनबोधायापेक्ष्यमाणसकलसामग्रीसम्भृतत्वा-त्समुपादेयतया नूनमध्येतव्यतासूचकं प्रमेयगौरवं विवक्षन्नुपसंहरति-* **सदेति।** *इत्थं प्राक्प्रदर्शितपद्धत्या मुमुक्षुभिः सदानुसन्धेयं त्रिष्वपि कालेषु तत्परमार्थं तात्त्विकं*

संवित्करः

इस प्रकार मुमुक्षु वैष्णवों को सभी शास्त्रों का सारभूत, इस दिव्य रहस्यात्मक प्रबन्ध वैष्णवमताब्जभास्कर का सदा तीनों समय में अनुसन्धान (स्वाध्याय) करना चाहिए। इसके ज्ञान के बाद संसार में कुछ भी ज्ञातव्य शेष नहीं रह जाता है।

---

[1] किसी-किसी प्रति में ये दो श्लोक भी मिलते हैं-

पञ्चवट्यां तु श्रीरामं जानकीं जनकालये। पूजयेन्मिथिलायां तु मैथिलीवल्लभं प्रभुम्।।
यस्मिन्कस्मिन्नपि क्षेत्रे वसेयुर्वैष्णवाः परम्। सर्वत्रैव प्रकुर्वीरन् रामस्यैव समर्चनम्।।

.........................................................पदपरामर्शः.........................................................

त्रिकालाबाध्यमिमं ज्ञात्वा विज्ञाय तैर्जिज्ञासुभिर्ज्ञातुमिच्छुभिः सुवेदनीयं सुज्ञेयम् अवशिष्यमाणं नास्ति। तैः सुज्ञेयं किमपि न शिष्यत इत्यर्थः। अत्र स चासौ परमार्थस्तमिमम्। ज्ञात्वेत्यन्वीयते। सदा त्रिकालमिति न पौनरुक्त्यम्। सङ्क्षेपतो दशप्रश्नेष्वेव सर्वविधजिज्ञासितव्यस्य समावेशात् तदुत्तरेषु च सर्वविधज्ञेयस्य क्रीडोकृतत्वादित्थमुक्तिः।

**गुरुद्रुहे नो न शठाय चेदं न नास्तिकायोपदिशेत् कदाचित्।**
**नावैष्णवायापि रहस्यमेतन्न चाथ दैन्याहतवेदनाय[1]॥202॥**

.........................................................पदपरामर्शः.........................................................

उपदेशानन्तरमस्य कुत्रोपदेशो न कार्य इति बोधयितुं यत्रेदं न तत्रोपदेशोऽपि नेति व्यतिरेकविधयाऽनधिकारिलक्षणं सङ्गृह्णाति- **गुरुद्रुह** इत्यादिना। एतद्रहस्यमेकान्ते रहसि गोपनीयतयोपदेष्टव्यत्वेन, नानधिकारिषु प्रकाश्यमिति भावः। अतः कदाचिदपि नो गुरुद्रुहे गुरुमाचार्यं सर्वथा हितपरं ज्ञानदातारमपि यो द्रुह्यति, तादृशाय, शठायानृजवे वञ्चकाय वक्राशयाय, नास्तिकाय, परलोके नास्ति मतिर्यस्य, तस्मै वेदप्रामाण्यानाङ्गीकर्त्रे, अवैष्णवाय वैष्णवाचार्यात्सत्सम्प्रदायेऽगृहीतवैष्णवदीक्षाय दैन्याहतवेदनाय, दैन्येन प्रचुरपापजनितेन सत्त्वावरकेणाहता विलुप्ता वेदना विचार-सामर्थ्यं यस्य, तस्मै स्वरूपसंस्काररहिताय चेदमव्यवहितपूर्वतयोच्चारितज्ञानं कदाचिदपि नोपदिशेत् आचार्यस्तत्प्रसादात्प्राप्तविद्यश्शिष्यो वा। **गुरुद्रुह** इत्यनेन कृतघ्नत्वं, **शठायेत्यनेन** चित्तमालिन्यप्रयुक्तो दुरभिसन्धिः, **नास्तिकायेत्यनेन** शास्त्रानादरः, **अवैष्णवायेत्यनेनासत्परिग्रहः, दैन्याहतवेदनायेत्यनेन** प्रबलपापविद्धत्वञ्च संसूचितम्। दैन्याहतवेदनाय शास्त्रदाननिषेधोऽन्यथाप्रतिपत्तिर्मा भूदित्यर्थः। यथोक्तं स्वयं भगवता-

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः॥

------------------------------संवित्करः------------------------------

इस दिव्यरहस्य का उपदेश गुरुद्रोही, शठ, नास्तिक, मन्दमति (अन्यथा ही समझ लेने वाला), अदीक्षित (वैष्णवदीक्षाविहीन) आदि को कभी नहीं करना चाहिए।

---

[1] पा. भे.- दीनचित्ताय सुगोपनीयम्।

**जितेन्द्रियः प्रपन्नः सन् बुधः श्रीजानकीपतिम्।**
**अनुष्ठाय मतं चेदं परमं स्थानमाप्नुयात्॥203॥**[1]

..........................................................पदपरामर्शः..........................................................

*उपदिष्टार्थस्योपासनामुखेनैव साफल्यमिति स्वप्रोक्तस्य वैष्णवमतस्याप्यनुष्ठानद्वारैव भगवत्प्राप्तिफलकत्वमाह- **जितेन्द्रिय** इत्यादिना। सन् सत्पुरुषः सदाशयो बुधः प्रज्ञो जितेन्द्रियो निगृहीतहृषीकः प्रपन्नो भगवदर्पितभरो वैष्णव इदमचिरप्रोक्तं परमं निगमागमसिद्धं पूर्वाचार्यसमादृतं मतं सिद्धान्तमनुष्ठाय सुदृढं परिगृह्य श्रीजानकीपतिं श्रीसीतानाथमनुष्ठाय भक्त्या प्रपत्त्या वा प्रसाद्य परमं नित्यं दिव्यं च स्थानं साकेताख्यं भगवद्धाम प्राप्नुयात् लभेतेति। यद्वा श्रीजानकीपतिरेव परमं स्थानं तस्य परमप्राप्यतयोक्तेः। अनुष्ठायेति देहलीदीपन्यायेन मतमित्यत्र श्रीजानकीपतिमित्यत्र च कर्मत्वेनान्वेति। मतमनुष्ठायाचरण आनीयानुसृत्य वा, श्रीजानकीपतिमाराध्येत्यर्थो वा। इत्थमेव परममिति पदमपि मते स्थाने चोभयत्रान्वेति। यथा श्रीजानकीपतिः परमस्तथैव तदीयमिदं मतं तदनुष्ठानलभ्यं तद्दिव्यं स्थानमपीति भावः। श्रीजानकीत्यत्र श्रीपदं समादरे, यद्वा जानक्याः पतिः भगवान् रामस्तत्समादरे श्रीपदम्। एतेन भगवतः स्वरूपशक्त्या नित्यविभूत्या च नित्ययोगः प्रकाशितः। भगवतः परमं स्थानं प्राप्तुकामस्य निर्देशश्चतुर्भिः पदैर्विहितः तत्र **जितेन्द्रिय** इत्यनेनाचारनिष्ठतां प्रकाश्य वैराग्यं सूचितम्। तेनेन्द्रियशुद्धिरुक्ता। **प्रपन्न** इत्यनेन विनयं समर्पणं च प्रकाश्य चित्तस्य भगवत्प्रवणतोक्ता, **सन्नि**त्यनेन साधुलक्षणाचारशुद्धिरुक्ता, **बुध** इत्यनेन तत्त्वविचारपरत्वाद् बुद्धिशुद्धिरुक्ता। इत्थं शास्त्रोक्तधर्मानुष्ठानेन तत्त्वविचारपरत्वाद् जातवैराग्यस्य ज्ञानोदयभक्तिलाभक्रमेण परमात्मावाप्तिरिति दर्शितम्।*

------------------------------**संवित्करः**------------------------------

अतः जितेन्द्रिय तथा शरणागत होकर, श्रीसीतारामजी की आराधना करते हुए इस वैष्णवमत के सविधि अनुपालन से मनुष्य परमपद (भगवत्सायुज्य)को प्राप्त कर लेता है।

---

[1] इस श्लोक के आशय को किसी-किसी प्रति में प्रकारान्तरेण उद्धृत किया गया है।
जितेन्द्रियः प्रपन्नस्तं विद्वानात्मरतिर्हरिम्। प्राप्नुयात्परमं स्थानं योऽनुतिष्ठेदिदं मतम्॥
गुरुभक्तिसदाचारसम्पन्नायाशठाय च। सप्रयत्नमिदं तत्त्वं प्रब्रूयात्सद्गुरुः सदा॥

**रामानन्दप्रोक्तः श्रीवैष्णवमताब्जभास्करो भवतु।**
**आनन्दभाष्यसोदर एषोऽन्तस्तमोविनाशाय।।204।।**

**पदपरामर्शः**

*अन्ते भगवत्स्वरूपतिरोधायकनिविडाज्ञानतिमिरनिर्दलनाय स्वप्रोक्तस्याभिधानानुगुण-लक्ष्यसिद्धिं कामयते-* **रामानन्दप्रोक्त** *इति। एष श्रीवैष्णवमताब्जभास्करोऽ-न्तस्तमोविनाशाय भवत्विति सङ्क्षेपः एषोऽचिरमेवोपसंहततयाऽव्यवधानेन बुद्ध्या सन्निधापितः, आनन्दभाष्यं सोदरं यस्य तादृशो रामानन्दप्रोक्तो रामानन्दनाम्ना मया प्रोक्तः स्वशिष्यं सुरसुरानन्दं निमित्तीकृत्योपदिष्टः, श्रीवैष्णवमताब्जभास्करः श्रीवैष्णवानां श्रीसम्प्रदायपरम्परामनुसरतां वैष्णवानां मतान्यब्जानीव मताब्जानि, तेषां भास्करः सूर्य, इत्यन्वर्थनामा ग्रन्थविशेषः, यथोदिते सूर्ये स्वयमेवाब्जानि प्रस्फुटन्ति विकासमायान्ति, तद्वदेवायं श्रीवैष्णवमतकमलविकासकः। तेनास्माकं को लाभस्तत्र सूर्यापेक्षयाऽप्यस्य वैशिष्ट्यमाह-* **अन्तस्तमो विनाशाय भवत्विति।** *न हि तरुणोऽपि भास्करः, स्वगभस्तिततिभिरन्तस्तमोविनाशने प्रभवति किन्त्वयं तत्र क्षमत इत्यनुसन्धायाशास्ते-* **भवत्विति। अन्तस्तम** *इति कथनेन सूर्यादिप्रकाशकसहस्रेणापि दुर्निवार्यत्वं द्योत्यते, तादृशामनादिकालप्रवृत्तानां सकलानर्थभूतानां विनाशाय निःशेषेण विध्वंसाय भवतु प्रभवतु सम्पद्यतामित्यर्थः। प्रार्थनायां लोट्। रामे आनन्दः परमा निर्वृत्तिर्यस्य भगवदानन्दसम्प्लुतचेतास्तत्त्वतोऽन्वर्थतश्च ब्रह्मनिष्ठः, साम्प्रदायिकास्तु रामस्यानन्द एव मानवाकारेण लोकशोकविनाशायाविर्भूतः, यथोच्यते- रामानन्दः स्वयं रामः प्रादुर्भूतो महीतल इति। तादृशेन प्रोक्त इत्यनेन संशयविपर्ययादिप्रतिक्षेपेणोक्त इति सुतरामेव गम्यते। आनन्दभाष्यसोदर इति पदे सोदरत्वमेककर्तृकत्वम् तेन तद्ग्रन्थ-*

**संवित्करः**

यह स्वामिरामानन्दाचार्य द्वारा प्रोक्त श्रीवैष्णवमताब्जभास्कर (श्रीवैष्णवीय मतरूपी कमल को सूर्यवत् विकसित करने वाला) ग्रन्थ स्वाध्यायशील पाठकों के अन्तःस्थित अज्ञानरूपी अन्धकार को दूर करने वाला सिद्ध हो। जैसे एक माता के दो पुत्र परस्पर सहोदर कहलाते हैं, वैसे यह ग्रन्थ आनन्दभाष्य का सहोदर है। अर्थात् प्रस्तुत ग्रन्थ वैष्णवमताब्जभास्कर उन्हीं श्रीरामानन्दस्वामी की रचना है, जिन्होंने इससे पूर्व आनन्दभाष्य की रचना की है।

ज्यौं लखि बालक कौतुकँहि जननी मन हरषाय।
होहु मुदित अस जतन लखि त्यौं मृदुहिय सिय माय।।

**पदपरामर्शः**

कर्तृकर्तृकत्वमानन्दभाष्यस्याप्युक्तम्। समाससामर्थ्यात्तस्यैतदपेक्षया प्राग्भावित्वं प्रकाशितम्। मन्यतेऽनेनेति मतं बुद्धिस्तत्त्वविवेचनसाधनत्वात्। वैष्णवानां मुकुलितबुद्धि-कमलविकासाय भास्कर इवेति। भास्करो न तु निशाकरः स हि वृद्धिह्रासशाली सूर्यायत्तप्रकाशश्च। एतेन परमतानामपास्यतया तमश्शब्दसूच्यता। मतेष्वब्जत्वारोपेण सपर्याङ्गत्वनिरवद्यत्वप्रसादकरत्वमङ्गलमयत्वादिगुणसहस्रं द्योतयित्वा सुग्राह्यत्वं सूचितम्। यद्वा अब्जः शङ्खो वैष्णवमतानां शङ्ख इवोद्घोषक इति। रामानन्दप्रोक्त इत्यत्रात्मनामेति स्मृतिविरोधस्तु न, लोकप्रत्ययाय रामो द्विर्नाभिभाषते, गोनर्दीयस्त्वाह इत्यादिषु स्वनामग्रहणाद् कर्त्तव्यार्थविषयकज्ञानानुकूलशब्दप्रयोगात्मकप्रतिज्ञावाक्यघ-टकतया स्वनामोच्चारणे दोषाभाव इति शम्।

**रामानन्दकृतिः प्रपत्तिमहती श्रेयःसृतिं तन्वती**
**श्रीरामस्मृतिसन्ततिप्रगुणितप्रीत्यैकसर्वान्वितिः।**
**स्वारस्यं दधती श्रुतेः परमिहावद्यं निराकुर्वती**
**पङ्क्तिप्रश्नसमाहितिर्जयतु काप्यन्तस्तमोदीधितिः॥**

**आचार्यपदमामृश्यन् न्यस्यन् दीनाक्षरं बुधैः।**
**कृपया मृष्यतां धृष्टः श्रीकृपामात्रसम्बलः॥**

**॥श्रीसीतारामार्पणमस्तु॥**

